**अयमात्मा परमेश्वरो भवितुमर्हति ज्ञानक्रियाशक्तिमत्वात्**

यो यावति ज्ञाता कर्ता च स तावतीश्वरः प्रसिद्धः इश्वरवद् वा राजवद्वाआत्मा च विश्वज्ञाता कर्ता च । तस्माद् इस्वरोऽयम्इति ।

अवयवपञ्चकस्य आश्रयणं मायावदेव नैयायिकमतस्य कक्षीकारात् ।

**उदयाकरसूनुना उचे-**

**कर्तरि ज्ञातरि स्वात्मन्यादिसिद्धे महेश्वरे । अजडात्मा निषेधं वा सिद्धिं वा विदधीत कः** [5] **॥**

**किं तु मोहवशादस्मिन् दृष्टे अप्यनुपलक्षिते । शक्त्याविष्करणेनेयं प्रत्यभिज्ञोपदर्श्यते ॥**[6]

**आभासवाद**-विवृतं च अभिनवगुप्ताचार्यैः ।

**न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽमग्निः ।**

**तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति ॥**[7]

इति श्रुत्या प्रकाशचिद्रूपमहिम्ना सर्वस्य भावजातस्य भासकत्वम् अभ्युपेयते ।ततश्च विषयप्रकाशस्य नीलप्रकाशः पीतप्रकाश इति विषय उपरागभेदाद् भेदः । वस्तुतस्तु देशकाल आकार संकोचकैवल्याद् भेद एव । स एव चैतन्यरुपः प्रकाशः प्रमाता इत्युच्यते । तथा च पठितं शिवसूत्रेषु –**चैतन्यात्मा** [8]

**तत्र प्रकाशरुपता ज्ञानम् ।स्वतो जगन्निर्मातृत्वं क्रिया**

इश्वरेच्छया संसारोत्पत्तिः-

**तस्मिन्सतीदमस्तीति कार्यकारयणताऽपि या । साप्यपेक्षाविहीनानां जडानां नोपपद्यते ॥** [9]

इति न्यायेन यतो जडस्य न कारणता न वाऽनीश्वरस्य चेतनस्यापि ,तस्मात्तेन तेन जगद्गतजन्मस्थित्यादि भावविकार तत्तद्क्रिया सहस्त्ररुपेण स्थातुमिच्छः स्वतन्त्रस्य भगवतो महेश्वरस्य इच्छैव उत्तरोत्तरमुच्छूनस्वभावा क्रिया विश्वकर्तृत्वं वोचेयत इति ।

**श्रुतिरपि वदति- तदैक्षत बहुस्यां प्रजायेय** [10]

**योगिनामपि मृद्बीजे विनैवेच्छावशेन यत् । घटादि जायते तत्तत्स्थिरभाव क्रियाकरम् ॥ इति** [11]

यदि घटादिकं प्रति मृदाद्येव परमार्थतः कारणं स्यात्तर्हि कथं योगिच्छामात्रेण घटादिजन्म स्यात् ? अथोच्येत-अन्य एव मृद्बीजादिजन्या घटाङ्कुरादयो , योगीच्छाजन्यास्त्वन्य एवेति । तत्रापि बोध्यसे -सामग्रीभेदात्तावत्कार्यभेद इति सर्वजनप्रसिद्धम् ।

**उपादनकारण एवं पदार्थानाम् उत्पत्तिः-** ये तु वर्णयन्ति नोपादानं विना घटाद्युत्पत्तिरिति , योगी त्विच्छया परमाणून्व्यापारयन् संघटयतीति तेऽपि बोधनीयाः । यदि परिदृष्टकार्यकारण भावविपर्ययो न लभ्येत तर्हि घटे मृद्दण्डचक्रादि देहे स्त्रीपुरुषसंयोगादि सर्वमपेक्ष्येत । तथा च योगिच्छासमनन्तरसंजातघटदेहादिसम्भवो दुःसमर्थ एव स्यात् । चेतन एव तु तथा भाति , भगवान् भूरिभागो महादेवो नियत्यनुवर्तनोल्लङ्घनतरस्वातन्त्र्य इति पक्षे न काचिदनुपपत्तिः । अत एवोक्त्तं वसुगुप्ताचार्यः –

**निरुपादानसंभारमभित्तावेव तन्यते । जग्चित्रं नमस्तस्मै कालनाथाय शूलिने ॥** [12]

**अस्य दर्शनस्यावश्यकता**–ननु आत्मनः परमेश्वरत्वं स्वाभाविकं चेन्नार्थः प्रत्यभिज्ञाप्रार्थनया । न हि बीजमप्रतिज्ञातं सति सहकारिसाकल्येऽङ्कुरं नोत्पादयति । तस्मात्कस्माद्वात्मप्रत्यभिज्ञाने निर्बन्ध इति चेत् –

उच्यते । श्रृणु तावदिदं रहस्यम् । द्विविधा ह्यर्थक्रिया-बाह्याङ्कुरादिका , प्रमातृविश्रान्तिचमत्कारसारा प्रीत्यादिरूपा च । तत्राद्या प्रत्यभिज्ञानं नोपेक्षते । द्वितीया तु तदपेक्षत एव । इहाप्यमीश्वर इत्येवंभूतचमत्कारसारा परापरसिद्धिलक्षजीवात्मैकत्व-शक्तिविभूतिरूपार्थक्रियेति स्वरूपप्रत्यभिज्ञानमपेक्षणीयम् । इति विज्ञायते अस्माभिः

**उपसंहारः-**

**तैस्तरप्युपयाचितैरुपनतस्-तस्याः स्थितोऽस्यन्तिके । कान्तो लोकसमान एवमपरिज्ञातो न रन्तुं यथा ॥**

**लोकस्यैष तथानवेक्षितगुणः स्वात्मापि विश्वेश्वरो । नैवायं तनिजवैभवायतदियं तत्प्रत्यभिज्ञोदिता ॥** [13]

अभिनवगुप्तादिभिराचार्यैः विहितप्रतानोऽप्ययमर्थः संग्रहमुपक्रममाणैरस्माभिर्विस्तरभिया न प्रतानित इति सर्वं शिवम् ।

## पादटिप्पणी

1. पाणिनीय अष्टाध्यायी 7-1-1
2. तन्त्रालोकः 2-3-4
3. सर्वदर्शनसंग्रहः पृष्टसंख्या 300
4. सर्वदर्शनसंग्रहः पृष्ट 302
5. सर्वदर्शनसंग्रहः पृष्ट 309
6. सर्वदर्शनसंग्रहः पृष्ट 309
7. मुण्डकोपनिषद् 2-2-10
8. शिवसूत्र 1-1
9. सर्वदर्शनम् पृष्ट 313
10. तैत्तिरीयोपनिषद्
11. सर्वदर्शनसंग्रहः पृष्ट 314
12. सर्वदर्शनसंग्रहः पृष्ट 316
13. ई.प्र, 4-2-2

**सन्दर्भग्रन्थाः-**

सर्वदर्शनसंग्रहः-माध्वाचार्यः

अष्टाध्यायि-पाणिनिः

तन्त्रालोकः-कुमारिल भट्टः

मुण्डकोपनिषद्-

शिवसूत्रम् –वसुगुप्त

तैत्तिरीयोपनिषद्

*************

**Volume XXI : January to June – 2023, ISSN 2250-1711**
**Journal of Veda Samskrita Academy [Recognised in the UGC-CARE List]**

# आधुनिकयुगे संस्कारेषु उपनयनसंस्स्कारस्य वैज्ञानिकमहत्वम्

**राजकुमार झा,** शोधच्छात्रः
कौमारभृत्य /बाल रोग आयुर्वेदसंकाय, चिकित्सा विज्ञान संस्थान
बनारस हिन्दू विश्वविद्यालय, वाराणसी, उत्तरप्रदेश-221005
Contact No. : 7903843700
E-mail : jharajkumar790@gmail.com

मार्गदर्शकाः **प्रो. बि.एम्. सिंग**
विभाग मुख्यस्थ, कौमारभृत्य /बाल रोग आयुर्वेदसंकाय, चिकित्सा विज्ञान संस्थान
बनारस हिन्दू विश्वविद्यालय, वाराणसी, उत्तरप्रदेश-221005

प्रस्तावना (**Preface** )

भारतीया संस्कृतिः संस्कारमूला अस्ति । संस्कृतेः प्राणतत्त्वं संस्कारो विद्यते । संस्करणं परिष्करण चेतस आत्मनो वा संस्कृतिरिति समभिधीयते । सा नाम संस्कृतिर्या व्यपनयति मलं मनसः, चाञ्चल्यं चेतसः, अज्ञानावरणमात्मनश्च । प्रोक्षणादिजन्यसंस्कारो यज्ञाङ्गपुरोडाशादिकस्यविधिपूर्वकं शुद्धिनाम संस्कारः[1] पापापनयनपूर्वकमेषा प्रसादयति स्वान्तम्, दुर्भावदमनपूर्वकं संस्थापयति स्थैर्यं चेतसि, मनःशुद्धिपुरःसरं पावयत्यात्मानपहरति च चित्तभ्रमम् । संस्कृतिः जीवनस्यान्तरङ्गं स्वरूपं प्रकाशयति अस्माकं संस्कृतिः विश्वगुरुगौरवम् अलभतसा एव प्रथमा संस्कृति इति वेदे संस्तूयते सा प्रथमा संस्कृतिविश्ववारा ।

भारतीया संस्कृतिः विश्वस्य प्राचीनतमा प्राचीनतमासु वा अन्यतमा संस्कृतिः अस्ति । संस्कारशब्दः समुपसर्गपूर्वकं - कृ धातोः ल्युट् प्रत्यये कृते सति साध्यते । **"प्रोक्षणादिजय "संस्कारस्य पुंधर्मेतेति संस्कारः पुसं एवेष्टः प्रोक्षणाभ्युक्षणादिभिः"** [2]

अन्येषां प्राणिनामपेक्षया मानवः सर्वश्रेष्ठ प्राणीभूतोस्ति संस्कारेण पदार्थः मनुष्यो वा कस्यापि विशिष्टकार्यकरणस्य योग्यो भवति । संस्कारो हि नाम गुणान्ताराधानम् ॥[3] संस्कारो नाम स भवति यस्मिन् जाते पदार्थों भवति योग्यः कस्यचिदर्थस्य ।[4]

संस्कारः बाह्याभ्यन्तरमलविशोधकं, व्यक्तित्वविस्फोटकं, प्रज्ञाप्रकर्षकञ्च किमपि विलक्षणं तत्त्वम अस्ति । आर्यसभ्यतायां यद्यत्सारभूतं विलोक्यत व्यवहारजातं तत्र संस्काराख्यं कर्म व्यवहाराणां संकलितरूपं स्वीयां विलक्षणां चमत्कृतिं विधत्ते वैदिकैः । संस्कारैः संस्कृताः पुरूषपुङ्गवा जगतितले ओजोमयं धाम धारयन्तः स्वीयेन यशसा जगत्त्रयं धवलयांचक्रुः

संस्कारस्य प्रकाराः (Types of Sanskar)

- गौतम गृह्यसूत्र - (४०) चत्वारिंशत्
- महर्षि अङ्गिरा - (२५) पञ्चविंशति
- दयानन्द सरस्वति - (१६) षोडश
- मनुस्मृति - (१३) त्रयोदश

गर्भाधानं पुंसवनं सीमन्तोजातकर्म च । कर्णवेधो व्रतादेशो वेदारम्भक्रियाविधिः ॥
केशान्तः स्नानमुद्वाहो विवाहाग्निपरिग्रहः । त्रेताग्निसङ्गऽहश्चेति संस्काराः षोडशस्मृताः ॥

बृहदारण्यकोपनिषदपि कथयति सन्तत्याः मेधावित्वमपेक्ष्यते तु षोडशसंस्काराः करणीयाः नवाजातस्य । यावत् खलु भारतीयाः संस्कारसंस्कृताः अतिष्ठन् तावत् देशोऽयं विश्वगुरुरेवासीत् । संस्कारैः संस्कृताः विद्वांसः देशाय प्रदत्ताः । दिलीप - रघुरसदृशाः शक्तिशालिनः वीरपुरुषा अपि दत्ताः ।

| | **संस्कारा:** ( Sanskar) | **फलानि (Result)** |
|---|---|---|
| १. | गर्भाधानम् | बीजजन्यस्य गर्भवासजन्यस्य च मालिन्यस्य सन्तानोतपत्तेपरमार्जनम् – स्वीणां क्षेत्रपाणां शुद्धिः |
| २. | पुंसवनम् | भाविजातकस्य कृते पुंस्त्वप्रतिपादनम् |
| ३. | सीमन्तोन्नयनम् | गर्भाधानवत् । |
| ४. | जातकर्म | गर्भाम्बुपानजन्यदोषनिष्कासनं तैजसत्वमायुर्वृद्धिश्च |
| ५. | नामकर्म | व्यवहारसिद्धिः |
| ६. | निष्क्रमणम् | सूर्यावलोकनेनायुर्वृद्धिः श्रीवृद्धिश्च । |
| ७. | अन्नप्राशनम | मातुः गर्भे मलभक्षणदोषस्यापमार्जनम् । |
| ८. | चूडाकर्म | बलमायुस्तैजसत्वमानयनम् । |
| ९. | उपनयनम् | द्विजत्वासिद्धिपूर्वकवेदाध्ययनाधिकारित्वम् |
| १०. | अग्निहोत्रादिः | स्वर्गः स्पष्टं फलम् । |
| ११. | . विवाहः | पितृतारकपुत्रोत्पत्तिः । |

(११) उपनयन संस्कारस्त वैज्ञानिक विश्लेषण:-

Scientifice Analysis of Upanayana Sanskar

"उपनयन नाम ब्रह्मचारिग्रहणम्"[6] उपनयनम् अर्थात् उप उपसर्गं कृत्वा नयनम् इत्यस्यार्थोऽस्ति "आचार्यस्य उपसमीपं नीयते येनकर्मणातदुपनयनमिति"[7] अनेन इति नयनम् अर्थात् येन संस्कारेण संस्कृता व्यक्तिः नीयते । अन्यच नयनशब्दस्यार्थोऽस्ति नेत्रम् प्रकृतिप्रदत्तं नयनन्तु सर्वेषां जनानां भवति परन्तु अनेन संस्कारेण ज्ञानरूपनेत्रस्य प्रकटनं भवति । Actual intention of this Sanskar is education for attainment of Brahmagyana इदं ज्ञानचक्षु चर्मचक्षुषः समीपमेव तिष्ठति, यस्य स्थानं शास्त्रेषु भ्रुवोः मध्येऽस्ति । नयनशब्दस्य रुढार्थ न मत्वा यदि व्यत्पत्तिलब्धार्थं स्वीकृत्यः गुरोः पार्श्वे ज्ञानार्जनार्थं बालकः गच्छति ।

**उपनीयगुरुः शिष्यं महाव्याहृति पूर्वकम् । वेदमध्यापयेदेनं शौचाचारांश्च शिक्षयेत् ॥**[8]

उपनयनस्य कालः विषये कथयति यत्- अष्टवर्षं ब्राह्मणमुपनयीत एकादशवर्षं राजन्यं द्वादशवर्षं वैश्यमिति ।[9] Shshruta and Vagbhata have given the time of starting the education as soon as child fit for the same[10]

**गर्भाष्टमेऽष्टमे वाऽब्दे ब्राह्मणस्योपनयनम् । राज्ञामेकादशे चैके विशामेके यथाकुलम् ॥** [11]२६

उपनयन संस्कारस्य नाना विधयः सन्ति । उपनयनसंस्कारो यज्ञोपवीतसंस्कारोऽपि कथ्यते। उपनयनसंस्कारस्य अपरं नाम यज्ञोपवीत संस्कारोऽपि अस्ति (नाम्ना अभिधीयते) यज्ञोपवीतं एकेन विशेषेण सूत्रेण निर्मितं भवति, यं (यज्ञोपवीतं) व्यावहारिकभाषायां जनेऊ इति नाम्ना अभिधीयते । संस्कारेऽस्मिन् बालकस्य यज्ञोपवीतेन सह धार्य- धारक- भावसम्बन्धो भवति ।

**यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत् पुरस्तात् । आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः ॥**

यज्ञोपवीतं ग्रहणकर्ता शरीरस्य स्वाभाविकशौचादिकरणार्थे स्वकीयं कर्णस्योपरि यज्ञोपवीतं दृढतया बन्धाति यस्य प्रभावः साक्षात्

हृदययोगस्योपरि परिलक्षितो भवति । कर्णस्य पार्श्वे कृशा शिरा भवति, यदि तस्यां (शिरा) यज्ञोपवीतेन बन्धनं जायते तर्हि हृदयप्रदेशस्य अवयवं प्रभावितं जायते तथा अस्य (हृदय रोगस्य) प्रभावोऽपि अस्ति यत् शक्तिक्षयस्य रोगोऽस्ति साऽपि दूरं गच्छति ।

दैनन्दिनजीवने प्रदूषणस्य बहुप्रकोपो दरीदृश्यते । अनेन प्रकोपेणापि यज्ञोपवीतधारणेन मुक्तिः प्राप्यते । शका सञ्जायते कथं केन प्रकारेण वा? शङ्कायाअस्याः समाधानमस्ति यज्ञोपवीत कर्णस्योपरि बन्धनात् पश्चात् बहिर्निष्करणाय व्यक्तिः निश्चितरूपेण स्वकीयं हस्तं प्रक्षालयति । इत्थं वारंवारं हस्तप्रक्षालनेन प्रदूषणस्य तथा च कीटाणु इत्यस्य प्रसारोऽवरुद्धयते । उपनयनसंस्कारे शिशोः केशानां प्रथमं क्षुरेण इत्यनेन कर्त्तनं भवति । ध्यातव्यमस्ति यत् यत्र शिखायाः स्थल भवति, तत्र मस्तिष्कस्य ज्ञान केन्द्रं भवति यस्मात् कारणात् केशानाम् एकः समूहः सततं शीतलता प्रददाति । फलस्वरुपं ज्ञानकेन्द्रस्य ज्ञानकेन्द्रितं भवति, ज्ञानकेन्द्रस्य क्रियाशीलता च वृद्धिं प्राप्नोति । इत्थं यज्ञोपवीतसंस्कारस्य उपनयनसंस्कारस्य वा शारीरिक मानसिकवैज्ञानिकदृष्ट्या महत्त्वं तु अस्त्येव व्यक्तित्व निर्माणेऽपि वैशिष्ट्यमस्ति ।

**यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत् पुरस्तात् । आयुष्यमग्र्यं प्रतिमुञ्चशुभ्रं यज्ञोपवीतं बलमस्तु तेजः ॥**

एषु च ब्रह्मग्रन्थिर्भवति त्रिषु सूत्रेषु । त्रिसूत्रमिदं ईश्वरीयतत्त्वस्य सचिदानन्दरूपस्य प्रकृतितत्त्वस्य सत्व रजस्- तमे-गुण-समूहस्य, त्रिमूर्तस्य ज्ञानेच्छाक्रियारूपस्य, त्रिलोकस्य भूः भुवः स्वः स्वरूपस्य प्रतीकभूतम् भवति । purpose to assess the physical growth to rule out malnutrition. Assessment of maturity of brain to perform intellectual activities. To initiate sense of responsibility as well as spiritual well-being of the child . This thread might aware him about his responsibility towards society, Guru and mother-father अनेन जीव: यज्ञोपवीतधारणानन्तरमेव मनोवाक्कायेषु संयमनशक्तिप्रेरणां प्राप्नोति ।

उपसंहार:- (Conclusion)

संस्कारेषु उपनयन संस्कार: अति महत्त्वपूर्णोऽभिमन्यने । संस्कारोयं मुख्य:शैक्षिकसंस्कारो वर्तते । अनेन संस्कारेण जातकस्य सामाजिक जीवने पदार्पण भवति ।। अनेन संस्कारेण जातकस्य सामाजिके जीवने पदार्पणं भवति । समाजे सामुदायिककर्तव्यः, संस्कृतेः सभ्यतायाश्च संरक्षणम् इत्थं बहुविधानि दायित्वानि अपेक्षते । व्यक्तौ सामाजिकतायाः अभ्युदयाय शिक्षाया महत्त्वपूर्णं स्थानम् अवदानं च वर्तते । सांस्कृतिकतायां च मिथो घनिष्ठो सम्बन्धो वर्तते । पुरा हि मानवः सांस्कृतिकदृष्ट्या सक्षम आसीत् स एव सामाजिक इत्यभिमन्यते स्म । उभयविकासमापन्न एव समाजे समग्रान् अधिकारान् विशिष्टाः सुविधाश्च आदातुम् अधिकृत आसीत् । उपनयन संस्कारस्य माध्यमेन सांस्कृतिकदृष्टया सामाजिकदृष्टया च दीक्षितस्य मनुष्यस्य नूतनं जन्म जायते । अत उपनीतो द्विज इत्यभिधीयते ।[12] ' उपनयन संस्कारेणैव युवकः आर्यकन्यां विवोढुम् अर्हो भवति ।

## पादटिप्पणी

1. वाचस्पत्यम् – बृहद्भिधानम् ५ पृ .५१८८
2. न्यायकुसुमाञ्जलि : १/११
3. चरक सं १/२४
4. जैमिनि सूत्र, शबर भाष्य
5. अर्ववेद: ११.५.३
6. गोभिलगृह्यसूत्रम् २.१०.१
7. याज्ञवल्क्यस्मृति:- १.१५
8. संस्कार प्रकाश: पृ .३४०
9. Susruta Samhita, Sharira Shana, 10, 57
10. याज्ञवल्क्यानुसारं १.१४
11. याज्ञवल्क्यस्मृति १.३९

**************

Volume XXI : January to June – 2023, ISSN 2250-1711
Journal of Veda Samskrita Academy [Recognised in the UGC-CARE List]

# पुराणस्य पञ्चलक्षणविचारः

**Prasenjit Malo**
Ph. D. Scholar
Tilka Manjhi Bhagalpur University,
Bhagalpur, Bihar- 812007
Contact No. : 9800953250
E-mail - prasenjit.malo1983@gmail.com

**लेखसारांशः –**

पुराणस्य पञ्च लक्षणानि भवन्ति। पुराणेन सह पञ्चलक्षणानां सम्बन्धः प्राचीनो घनिष्ठश्चास्ति। पञ्चलक्षणम् एतादृशं प्राधान्यं भजते। अमरकोषेऽपि कामपि व्याख्यां विना शब्दोऽयं प्रयुक्तो दृश्यते। पुराणेषु सर्वत्र स्वीकृतपरम्परानुसारम् इमानि पञ्च लक्षणानि वर्णितानि सन्ति। 1. सर्गः, 2. प्रतिसर्गः, 3. वंशः, 4. मन्वन्तराणि, 5. वंशानुचरितं उत वंश्यानुचरितं चेति। सर्गविषये उच्यते सर्गो नाम सृष्टिसर्जनमेवं तेन साकं भिन्न-भिन्नपदार्थोत्पत्तिः। पुराणेषु सांख्यवेदान्तयोः प्रतिबिम्वः दृश्यते। प्राकृतसर्गे ब्रह्मसर्गः भूतसर्गः वैकारिकसर्गश्चेति त्रयः सर्गा आयान्ति। वैकृतसर्गे मुख्यसर्गः तिर्यक्सर्गः देवसर्गः मानुषसर्गः अनुग्रहसर्गश्चेति पञ्च सर्गाः आगच्छन्ति। प्रतिसर्गो नाम प्रलयः। विष्णुपुराणे प्रतिसर्गस्य स्थाने प्रतिसंचर इति शब्दप्रयोगः अस्ति। पुराणस्य पञ्चलक्षणेषु तृतीयः लक्षणभेदः वंश इति वर्तते। संसारे जगति वा प्रचलिता सृष्टि परम्परैव वंशो वर्तते इति विषये आलोचना अत्र वर्तते। मनुः, देवताः मनुपुत्राः, इन्द्रः, सप्तर्षयः, भगवदंशावतारश्च षड्विशिष्टतायुक्तं समयं मन्वन्तरं प्रचक्षते इति किञ्चित् चर्चितम्। सूर्य-चन्द्र-ऋषि-अग्नि-धर्मादीनां वंशेषु जातप्रख्यातभूपाम् ऋषीणां चरित्राणां यत्रालेखनमस्ति तत् वंशानुचरितं वंश्यानुचरितमिति उल्लिख्य वर्णनमत्र दृश्यते। अन्ते उपसंहारे अन्यत्रोक्तानां दशलक्षणानां सामान्येन परिचयः प्रस्तुतः।

**भूमिका –**

आस्तिकबुद्धिप्रसूता धर्मभावनया परिशोधिता विचारबुद्धिः अतिप्राकृतमलौकिकं च विवरणं पुराणेषु संग्राहयति। धर्मीयसाहित्यस्य इतिहासे पुराणानामतीव प्रभावः लक्षणीयो भवति। श्रुतिसम्मतो वैदिकधर्मः स्मृतिसम्मतः पौराणिकधर्मश्च प्राचीनभारतीयधर्मस्य द्विविधो धाराप्रवाहः। तदनुसारेण यथा वैदिकधर्मस्य तथा हि प्रधानतया वैष्णव-भागवत-पाशुपत-गाणपत्य-शाक्तधर्मचर्याणां यादृश इतिहासः पुराणेषु रक्षितः, अन्यत्र कुत्रापि न तादृशो लभ्यः। अत्र वेदानुगामि-सांख्य-वेदान्तादिदर्शनप्रस्थानानां तत्त्वानि यथोपस्थाप्यन्ते, तथैव वैदिकाचारबहिर्भुत-शाक्तागम-दर्शनतत्त्वान्यपि आलोच्यन्ते। पुनश्च तत्कालसुलभलोकधर्मस्यापि विशिष्टं रूपमत्रोपन्यस्यते। परिवर्तमानयुगपर्याये तत्कालप्रचलितधर्माणां दार्शनिकतत्त्वं नीतितत्त्वं समाजतत्त्वं च सर्वमेव पुराणसाहित्ये विस्तरेण वर्ण्यन्ते। पुराणेष्वेव उक्तं पुराणपञ्चलक्षणमत्र विस्तृतेन वर्ण्यते।

**पुराणस्य पञ्चलक्षणानि –**

पुराणस्य पञ्च लक्षणानि भवन्ति। पुराणेन सह पञ्चलक्षणानां सम्बन्धः प्राचीनो घनिष्ठश्चास्ति। पञ्चलक्षणदायकाः पुराणवर्णनकारकाः श्लोकाः अधोभागे सन्ति।

**'सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च। वंश्यानुचरितं चैव पुराणं पञ्चलक्षणम् ॥ '**[1]

पुराणविषयकं पद्यमिदं प्रायः सर्वपुराणेषु प्राप्यते।[2] पञ्चलक्षणम् एतादृशं प्राधान्यं भजते। अमरकोषेऽपि कामपि व्याख्यां विना शब्दोऽयं प्रयुक्तो दृश्यते। व्याख्यारहितपारिभाषिकशब्दस्य [3] प्रयोग एव तस्य सार्वभौम-लोकप्रियतायाः सूचको भवति। पुराणेषु सर्वत्र स्वीकृतपरम्परानुसारम् इमानि पञ्च लक्षणानि वर्णनीयानि सन्ति।

1. सर्गः, 2. प्रतिसर्गः, 3. वंशः, 4. मन्वन्तराणि, 5. वंशानुचरितं वा वंश्यानुचरितं चेति।

**सर्गः –**

सर्गो नाम सृष्टिसर्जनमेवं तेन साकं भिन्न-भिन्नपदार्थोत्पत्तिः। सृष्टिसर्जनं मानवबुद्धौ अनेकजिज्ञासाः प्रश्नांश्चोत्पादयामास। ऋग्वेदस्य सृष्टिविद्याविषयकसूक्तानि यथा नासदीयसूक्तं, पुरुषसूक्तं, हिरण्यगर्भसूक्तञ्च इत्यादिषु वैदिक-ऋषिपरम्परायां सुरक्षित-विविधविचारसरणीः ऋषीणां समस्याश्च ज्ञातुं मनोह्लादकं सन्ति। पुराणसृष्टिविद्या सांख्यमतानुसारिणी अस्ति। तस्याशयोऽयमेव यत् यदा मूलप्रकृतिस्थगुणाः क्षुब्धाः भवन्ति तदा महत्तत्त्वोत्पत्तिर्जायते। महतः सात्त्विकराजसतामसाख्याः त्रयोऽहङ्काराः भवन्ति। तस्मात् पञ्च तन्मात्राः इन्द्रियाणि पञ्चभूतानाञ्च उत्पत्तिर्जायते। अयमुत्पत्तिक्रम एव सर्गः कथ्यते-

**'अव्याकृतगुणक्षोभान्महतस्त्रिवृतोऽहमः। भूतमात्रेणन्द्रियार्थानां सम्भवः सर्ग उच्यते ॥ '**[4]

सांख्यदर्शनप्रभावः पुराणेषु विशेषरूपेण वर्तते। किन्तु पौराणिकसृष्टिविद्यायाः अप्येकं नूतनमहत्त्वं विशिष्टता, स्वतन्त्रता च सन्ति। पुराणकालिकसांख्यं केवलं निरीश्वरदर्शनं नापि तु सेश्वरदर्शनमस्ति। पुराणेषु सांख्यवेदान्तयोः प्रतिबिम्बः दृश्यते। प्रकृतिपुरुषावुभौ भिन्नतत्त्वान्वितौ न स्तः। किन्तु द्वावेतौ ब्रह्मप्रेरितौ स्वकार्यं कुरुतः। सांख्ये सृष्टिविकासः प्रधानपुरुषौ द्वावेतौ द्वयोस्तत्त्वयोः पारस्परिकं प्रभावसंयोगयोः फलस्वरूपौ स्तः। सांख्ये द्वावेतौ प्रकृतिपुरुषौ अनादी नित्यौ स्तः। किन्तु पुराणेषु द्वावपि विष्णोः रूपद्वयस्वरूपेण सम्मतौ स्तः। अर्थात् तयोरुत्पत्तिः सत्ताधारिता वर्तते।

पुराणानुसारं जगदिदमनादि अनन्तं चास्ति। अधुना तत् यादृशमस्ति तादृशं पूर्वमासीत्। ततः भविष्यत्काले अपि तादृशमेव भविष्यति।

**'यथेदानीं तथाग्रे च पश्चादप्येतदीदृशम्। सर्गो नवविधस्तस्य प्राकृतो वैकृतस्तु यः ॥ '**[5]

पुराणेषु सृष्टिः नवधा प्रदर्शिता। तत्र मुख्यत्वेन त्रयः प्रकाराः सन्ति। 1. प्राकृतसर्गः, 2. वैकृतसर्गः, 3. प्राकृत-वैकृतसर्गः। ब्रह्मणा बहु विचार्य सर्गनिर्माणं कृतमस्ति।

प्राकृतसर्गे ब्रह्मसर्गः भूतसर्गः वैकारिकसर्गश्चेति त्रयः सर्गा आयान्ति। वैकृतसर्गे मुख्यसर्गः तिर्यक्सर्गः देवसर्गः मानुषसर्गः अनुग्रहसर्गश्चेति पञ्च सर्गाः आगच्छन्ति। यदा प्राकृत-वैकृतसर्गे कौमारसर्गस्य समावेशो भवति –

**'प्रकृताश्च त्रये पूर्वे सर्गास्तेऽबुद्धिपूर्वकाः। बुद्धिपूर्वं प्रवर्तन्ते मुख्याद्याः पञ्च वैकृताः ॥ '**[6] इत्थं नवसर्गाः भवन्ति।

**प्रतिसर्गः –**

प्रतिसर्गो नाम प्रलयः। विष्णुपुराणे प्रतिसर्गस्य स्थाने प्रतिसंचर इति शब्दप्रयोगः दृश्यते –

**'एष नैमित्तिको नाम मैत्रेय प्रतिसंचरः। निमित्तं तत्र यच्छेते ब्रह्मरूपधरो हरिः ॥ '**[7]

श्रीमद्भागवते संस्थाशब्दः प्रयुज्यते –

**'नैमित्तकः प्राकृतिको नित्य आत्यन्तिको लयः। संस्थेति कविभिः प्रोक्ता चतुर्धाऽस्य प्रजापतेः ॥ '**[8]

तदधिकं प्रतिसर्ग इति शब्दपर्यायस्वरूपेण भिन्नभिन्नशब्दाः प्रयुज्यन्ते। यथा अनन्तरप्रलयः, आभूतसंप्लवः, उदाप्लुतः, निरधिः, उपसंहतिः, एकार्णव्यावस्था, तत्त्वप्रतिसंयमः, प्रतिसंसर्गः तथा संप्लवश्चेति।

**प्रलयश्चतुर्विधः –**

1. नैमित्तिकप्रलयः, 2. प्राकृतप्रलयः, 3. आत्यन्तिकप्रलयः, 4. नित्यप्रलयः।

श्रीमद्भागवते द्वादशस्कन्धस्य चतुर्थाध्याये विषयोऽयं विशदतया सुन्दरतया च वर्णितोऽस्ति।

**वंशः –**

पुराणस्य पञ्चलक्षणेषु तृतीयः लक्षणभेदः वंश इति वर्तते। संसारे जगति वा प्रचलिता सृष्टिः परम्परैव वंशो वर्तते। भागवतब्रह्मणः उत्पन्नानां राज्ञां वंशो वंश इत्युच्यते। पुराणेषु सर्वारम्भे मनोः वर्णनं जायते। मनोः संततित्वात् सर्वे मनुष्याः मानवसंज्ञया परिचीयन्ते। मन्-विचारणा इति धातोः मनुशब्दः संजातः। मनुः विचारशीलप्राणिनां नाम । मानवानां प्रतिनिधिरस्ति। मानवशब्दः मानवः बुद्धिमान् जीवः इति सूचयति। मन्वन्तरे मनुशब्दः कालमानेन साकं संयुक्तो वर्तते। सूर्यवंशारम्भः वैष्णवमनोः भवति। मनुरादिराजा कथ्यते। मनूनां संख्या चतुर्दशास्ति। परन्तु वंशप्रतिष्ठापकस्य दृष्ट्या द्वौ मनू विशेषमहत्त्वम् आवहन्ति। स्वायम्भूवमनुः, वैवस्वतमनुश्च। स्वायम्भुवो मनुः ब्रह्मणः प्रथमः पुत्रः तथा पृथ्व्याः प्रथमः सम्राडासीत्। मनोर्भार्यायाः नाम शतरूपासीत्। शतरूपायाः मनोः उत्तानपादप्रियव्रतौ द्वौ पुत्रौ संबभूवतुः। तिस्रः कन्याः आकूतिर्देवहूतिः प्रसूतिश्च। मनुना राज्यभारः प्रियव्रताय दत्तः। उत्तानपादस्य द्वे भार्ये आस्ताम्। सुनीतिः सुरुचिश्च। सुनीतेः पुत्रो ध्रुव आसीत्। यो हि पुराणप्रसिद्धो वर्तते। द्वितीय उत्तमश्चासीत्। द्वयोः शासनकालः बहल्प आसीत्। प्रियव्रतस्य द्वे भार्ये आस्ताम्। एका प्रजापतिविश्वकर्मणः पुत्री बर्हिष्मती द्वितीया अज्ञातनाम्नी आसीत्। श्रीमद्भागवतानुसारं प्रियव्रतस्य बर्हिष्मत्याः दश पुत्राः बभूवुः। तथैका कन्या अभवत्। प्रियव्रतः रात्रिन्दिवसं परिवर्तितुम् एकं ज्योतिर्मयं रथमारुह्य पृथ्व्याः सप्त परिक्रमाश्चकार। तस्य रथचक्रेण धरायां जम्बू-प्लक्ष-शाल्मलि-कुश-क्रौञ्च-शाक-पुष्कराख्याः सञ्जाताः। तदाधिपत्यं प्रियव्रतसप्तपुत्राधीनमासीत्। त्रयः पुत्राः नैष्ठिकब्रह्मचारिणः बभूवुः। प्रियव्रतस्य द्वितीयभार्यायाः त्रयः पुत्रा बभूवुः। उत्तम-रैवत-तामसनामकाः क्रमशः तृतीय-चतुर्थ-पञ्चमाः मनवः अभवन्।

पुराणेषु सूतेन सुरक्षितक्षत्रियवंशावल्याः ऋषिमुनिसुरक्षितऋषिवंशावल्याश्च संग्रहः दृश्यते।

**मन्वन्तरम् –**

मन्वन्तरम् इति शब्दः कालवाचिकोऽस्ति। शब्दार्थमिमं ज्ञातुं कालज्ञानमत्यन्तमावश्यकमस्ति। पुराणानुसारं मन्वन्तरशब्दः सृष्टेः विशिष्टांशस्य द्योतकोऽस्ति। पौराणिककालगणनायां मन्वन्तरसमयः अत्यन्तं सहायको भवति। अत्र मनुः, देवताः मनुपुत्राः, इन्द्रः, सप्तर्षयः, भगवदंशावतारश्च षड्विशिष्टतायुक्तं समयं मन्वन्तरं प्रचक्षते –

**'मन्वन्तरं मनुर्देवा मनुपुत्राः सुरेश्वरः। ऋषयोऽशांवताराश्च हरेः षड्विधमुच्यते ॥ '**[9]

मन्वन्तरम् अस्य शब्दार्थः अयमेव यत् एकमनोः द्वितीयमनुपर्यन्तं समयः।

पौराणिककालानुसारं ब्रह्मणः एकरात्रिदिवसयोः समयः कल्प इति उच्यते। एकस्मिन् कल्पे चतुर्दश मनवो भवन्ति। मन्वन्तरम् शब्दार्थज्ञानाय कालस्वरूपं यत् परमात्मनः अंशोऽस्ति तज्ज्ञानमत्यावश्यकमस्ति। अत्यन्तन्यूनातिन्यूनः कालमानः अणुतः प्रारभ्यते –

**'स कालः परमाणुर्वै यो भुंक्ते परमाणुताम्। सतोऽविशेषभुक् यस्तु स कालः परमो महान् ॥ '**[10]

श्रीमद्भागवते मन्वन्तरकालनिर्माणाय परमाणुतः गणना कृतास्ति। कस्यापि पदार्थस्य लघुतमम् अविभाज्यांगं परमाणुरस्ति। अयं परमाणुः पदार्थे तिष्ठति। येन पदार्थेन सह कश्चित् कालोऽस्ति। अतः पदार्थकालयोरैक्यतया पुराणेषु कालगणना क्रियते। स्वयम्भूः अर्थात् स्वयमुत्पन्नब्रह्मणः गतकालसंख्या परार्धद्वयं मन्यते। त्रिपरार्धकालान्ते प्रलयो भवति। ब्रह्मण आयुष्यं शतवर्षात्मकं भवति। स तु परकाल उच्यते तदर्धः परार्धः इत्युच्यते। अस्य कालमानस्य मानवकालगणना दिव्यकालगणना चेति द्वौ आधारौ भवतः। अद्यावधि ब्रह्मणः एकपरार्धः व्यतीतः द्वितीयः परार्धः प्रचलति। अयमष्टमः कल्पोऽस्ति। व्यतीतसप्तमकल्पस्य नाम पद्म इति। अधुना श्रीश्वेतवाराहकल्पः चलति। अमरकोषे मन्वन्तरं एकसप्ततियुगानां भवतीति उल्लेखः अस्ति। अमरकोषे काष्ठायाः

समयः अष्टादश निमेषाः इत्युक्तः।

युगकल्पानुसारं सत्ययुगे मुख्यतया लोकानामनन्यपरायणता निःस्वार्थभावना प्रकृतिक्रोडे स्वयं पर्याप्तानन्देन मनोह्लादकं जीवनं भवति। त्रेतायुगप्रवेशे सति स्वार्थप्रवेशः जनानां निवासस्य प्रबलेच्छा एवं धर्मैकचरमहानिर्भवति। प्रकृतिस्थाने स्वयं स्वाधारेण जीवनजीवनायारम्भं करोति।

द्वापरयुगे लोभस्वार्थाभ्यां समं परमार्थवृत्तिर्भवति। धर्माधर्मौ समानौ भवतः। किन्तु कलियुगे धर्म-परार्थवृत्तिप्रकृतिपरायणतानाम् उत्तरोत्रं ह्रासो भवति। लोभछलदम्भकपटस्वार्थभावाः विस्तृताः भवन्ति। सत्ययुगे मानवस्य निःस्वार्थभावनां परिशील्य प्रकृतिस्तेषां सर्वेच्छाः पूरयति। रागद्वेषस्वार्थानां सदा निराकरणं भवति। त्रेतायुगे लोभप्रवेशेन सममेव मानसीसिद्धिः सम्पाद्यते।

प्रकृतिः स्वस्यान्तरं संकोचयति। निवासाय योजना क्रियते। स्वार्थवृत्तिः प्रबला भवति। प्रकृतेरौदार्यं सदा भवति। कृषेरारम्भो भवति। धर्माधर्मजातिवर्णभेदाः वर्धन्ते। त्रेतायुगे ध्यानमहत्त्वं यदासीत् तत् द्वापरे नष्टप्रायं भवति। पाषाणलौहयुगः द्वापरस्य चिह्नमस्ति। कलियुगे भौतिकसुखानि मानवानां लक्ष्याणि भवन्ति। प्रकृतिः सदा विमुखा भवति। स्वार्थः बलवान् भवति परमार्थः नामशेषो भवतीति सारः।

### वंशानुचरितं वा वंश्यानुचरितम् –

सूर्य-चन्द्र-ऋषि-अग्नि-धर्मादीनां वंशेषु जातप्रख्यातभूपाम् ऋषीणां चरित्राणां यत्रालेखनमस्ति तत् वंशानुचरितं वंश्यानुचरितं वोच्यते। श्रीमद्भागवतानुसारं ब्रह्मणः समुत्पन्ननृपाणां वंशः 'वंशः' इति कथ्यते। एवं सा प्रख्यातवंशपरम्परा वंशानुचरितमिति उच्यते।

प्रख्यातपुरुषेषु चरित्रालेखनं पुत्रपरम्परातः अनुगामिनीपरम्पराधारितमस्ति। अत एव प्रायः पुराणवंशावलिषु भेदो दृश्यते।

पुराणवंशावलिषु पार्जिटरमतानुसारं भारतस्य प्राचीनमध्यकालीनेतिहासः अदृग्गोचरो वर्तते। डाँ. हझरादयः विद्वांसः इतिहासमिमं ज्ञातुं बहुप्रयासं साधितवन्तः। महाभारतयुद्धानन्तरं राजकीयपरिस्थितेः वर्णनम् अस्माभिः पुराणेष्वागतकलिवंशवर्णनं प्राप्यते। कौटिल्यः निजार्थशास्त्रे पुराणपञ्चलक्षणानि दत्तवान् – सृष्टि-प्रवृत्ति-संहार-धर्म-मोक्षाणां गणना कृतास्ति –

**'सृष्टिप्रवृत्तिसंहारधर्ममोक्षप्रयोजनम् । ब्रह्मभिर्विविधैः प्रोक्तं पुराणं पञ्चलक्षणम् ॥ '**[11]

### उपसंहारः –

एवं पुराणोक्तं पञ्चलक्षणं यथामति विवृतम्। क्वचित् पुराणस्य दश लक्षणान्यपि प्रदर्श्यन्ते। श्रीमद्भागवते द्वितीयस्कन्धे दशमोऽध्याये पुराणानां दशलक्षणानि दर्शितानि –

**'सर्गोऽस्याथ विसर्गश्च वृत्तीरक्षान्तराणि च। वंशो वंशानुचरितं संस्था हेतुरपाश्रयः ॥ '**[12] इति।

सर्गः आद्योक्तविषयेण सह समतामावहति। ईश्वरस्यानुग्रहात् ब्रह्मा स्थूलजगतः सर्वपदार्थानामुत्पत्तिः करोति। सः विसर्गः उच्यते। मानवजीवनं परिचालनाय मानवः येषां वस्तूनाम् उपयोगं करोति सा वृत्तिरूच्यते। प्रत्येकयुगे पशु-पक्षि-मनुष्यदेवतादीनां स्वरूपे अवतारधारणं कृत्वा स्वलीलाः भगवान् करोति। तस्मात् तस्मै रक्षानामकसंज्ञा प्रदत्ता अस्ति।

मन्वन्तरविषये पूर्वमेव उक्तम्। वंशविषये वंशानुचरितविषये संस्थाविषये च अपि विस्तृतेण उल्लिखितम्। अस्य जगतः सर्गादेः अविद्याकर्मजनको हेतुः। मायामयवृत्तिषु साक्षिरूपेण यस्य प्रतीतिर्भवति तदधिष्ठानरूपं तत्त्वमेव अपाश्रयोऽस्तीति शम्।

## पादटिप्पणी

1. मत्स्यपूराणम् 43/64
2. विष्णपुराणम् 3/6/24, अग्निपुराणम् 1/14, मत्स्यपुराणम् 43/64, मार्कण्डेयपुराणम् 134/13 आदयः
3. उपाध्यायः बलदेवः – पुराणविमर्शः, पृ - 125
4. भागवत्पुराणम् 12/7/11
5. तत्रैव 3/10/13
6. शिवपुराणम् 1/12/18
7. विष्णुपुराणम् 6/4/7
8. भागवत्पुराणम् 12/7/7
9. भागवत्पुराणम् 12/7/15
10. भागवत्पुराणम् 3/11/4
11. अर्थशास्त्रम् 1/5
12. भागवत्पुराणम् 12/7/9

**सहायकग्रन्थसूची –**


- अग्निपुराणम्, रामप्रताप त्रिपाठी, हिन्दी साहित्य सम्मेलन मार्ग, इलाहबाद
- श्रीमद्भगवद्गीता, चौखम्बा संस्कृत प्रतिष्ठान, वाराणसी
- कुर्ममहापुराणम्, गिरीजाशंकर शास्त्री, सस्तु साहित्यवर्धक कार्यालय, अमदावाद
- गरुड पुराण, रामतेज पाण्डेय, चौखम्बा संस्कृत प्रतिष्ठान, वाराणसी
- नारद पुराण, गिरीजाशङ्कर शास्त्री, सस्तु साहित्यवर्धक कार्यालय, अमदावाद
- पद्म पुराण, चारुदेव शास्त्री, नाग पब्लीशर्स, दिल्ली, 1984
- ब्रह्मपुराण, गिरीजाशङ्कर शास्त्री, सस्तु साहित्यवर्धक कार्यालय, अमदावाद
- भागवत पुराण, गीता प्रेस, गोरखपुर, मूल संहिता, 1985
- पुराणविमर्शः, उपाध्याय बलदेव


************

**Volume XXI : January to June – 2023, ISSN 2250-1711**
**Journal of Veda Samskrita Academy [Recognised in the UGC-CARE List]**

# फलव्यापारयोर्धातुः - एका समीक्षा

**Dr. Kamal Prasad Gautam**
Assistant Professor
Arya Vidyapeeth College (Autonomous)
Guwahati-16, Assam
Contact No. 8133813967
E-mail : kamalprasadgautam57@gmail.com

**सारांशः**

**''सर्वं नाम धातुजमाह'** नाम खल्वपि धातुजमेवाहु:'इति निरुक्तवचनात्, **''धातुजं नाम''** इति भाष्यप्रामाण्यात्, शब्दानां मूलत्वं धातावेव स्वीक्रियते। तत्र वैयाकरणनिकाये धातोरर्थविषये प्राचीननव्येतिभेदेन मतद्वयं प्रस्फुटितो वर्तते । तत्र **'फलव्यापरयोति'** वैयाकरणभूषणसारस्ठप्रथमायां कारिकायां द्विवचनेन फलनिरुपिता व्यापारनिरुपिता च धातोः पृथक् शक्तिरिति स्वीकुर्वन्ति, उत वा ' एकवृन्तगतफलद्वयन्यायेन पृथगुपस्थितिप्रयोजिका खण्डशः एकैव शक्तिरिति प्राचीनाः । अत एव फलस्य ' स्तोकं पचति' इत्यत्र स्तोकरुपकर्मणा सह अभेदेन अन्वयः, 'देवदत्तः ग्रामं गच्छति' इत्यस्मिन् ग्रमादिना कर्मणा सह भेदसंबन्धेन अन्वयः सम्भवो भवति । तेषां मते फलविशिष्टव्यापारे यदि शक्तिः स्वीक्रियते तर्हि स्तोकं पचतीत्यत्र स्तोकरूपेण फलेन साकं पदार्थैकदेशत्वात् ' **पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेन'** इति न्यायविरोधात् कर्मणः स्तोके अनन्वयापत्तिः स्यादिति प्राचीनाः ।

नागोजिभट्टास्तु फलविशिष्टव्यापारे व्यापारविशिष्टफले च धातूनां शक्ति:, फलव्यापारे च पृथक् शक्तिस्वीकारे व्यापारोद्देश्यक-फलविधेयकस्य फलोद्देश्यकव्यापारविधेयकस्य च बोधस्यापत्ति:, उद्देश्यविधेयभावेनान्वयप्रयोजिकाया: पृथगुपस्थिते: सत्त्वात्। विशिष्टवाचकत्वमते तु न दोष: पृथगुपस्थितेरसत्त्वादिति नव्याः ।

**विश्लेषणम्**

**''सर्वं नाम धातुजमाह१' नाम खल्वपि धातुजमेवाहु:२'**इति निरुक्तवचनात्, **''धातुजं नाम''३** इति भाष्यप्रामाण्यात्, शब्दानां मूलत्वं धातावेव स्वीक्रियते। तस्य धातोरर्थस्य निरुपयितुं उपक्रमते।

**फलव्यापारयोर्धातुराश्रये तु तिङः स्मृता:। फले प्रधानं व्यापारस्तिङर्थस्तु विशेषणम् ॥ ४ इति**

अयं भाव: फलव्यापारयोरित्यत्र वाचकत्वं सप्तम्यर्थ:, फलस्य निरुपितत्वसम्बन्धेन विभक्त्यर्थेऽन्वय:। वाचकत्वस्य च स्वरूपसम्बन्धेन धातावनन्वय:। एवञ्च फलनिरुपितवाचकतावान् धातुरिति फलितम्। एकवृन्तगतफलद्वयन्यायेन फलनिरुपिता व्यापारनिरुपिता च धातो: पृथक्â शक्ति:, अर्थात् फलानुकूâलो व्यापार एव धात्वर्थ:। अत एव फले स्तोकादिरूपकर्मणोऽभेदेन ग्रामादिकर्मणश्च भेदेनान्वय:। फलविशिष्टाव्यापारे शक्तौ तु 'नित्यो घट:' इत्याद्यापत्तिवारणाय स्वीकृतेन '**पदार्थ: पदार्थेनान्वेति, न तु पदार्थैकदेशेन'५** इति न्यायेन स्तोकादिकर्मणोऽन्वयाभावेन स्तोकंâ पचतीत्यादिप्रयोगाणां गतिश्चिन्तनीया स्यात्, तन्न्यायस्य प्रायिकत्वस्वीकारस्त्वगतिकगति:, तस्मात् फलविशिष्टव्यापारे शक्तिर्मनसोऽपि न कल्पनीयेति प्राचीना:।

नागोजिभट्टास्तु फलविशिष्टव्यापारे व्यापारविशिष्टफले च धातूनां शक्ति:, फलव्यापारे च पृथक् शक्तिस्वीकारे व्यापारोद्देश्यकफलविधेयकस्य फलोद्देश्यकव्यापार- विधेयकस्य च बोधस्यापत्ति:, उद्देश्यविधेयभावेनान्वयप्रयोजिकाया: पृथगुपस्थिते: सत्त्वात्। विशिष्टवाचकत्वमते तु न दोष: पृथगुपस्थितेरसत्त्वात्। किञ्चैकपदे व्युत्पत्तिद्वय- कल्पनेऽतिगौरवम्। तथाहि

फलविशेषणव्यापारबोधे कर्तृप्रत्ययसमभिव्याहृतधातु- जन्योपस्थिति: कारणम्, व्यापारविशेषणकफलबोधे कर्मप्रत्ययसमभिव्याहृत-

धातुजन्योपस्थितिः कारणमिति कार्यकारणभावद्वयकल्पनम्। धातोरर्थद्वये शक्तिद्वयकल्पनं धातोर्बोधजनकत्वसम्बन्ध द्वयकल्पनञ्चातिगौरवमावहति। तस्मात् फलावच्छिन्ने व्यापारे व्यापारावच्छिन्ने फले धातूनां शक्तिः, कर्तृकर्मार्थ-कतत्त्त्प्रत्ययसमभिव्याहारश्च तत्तद्बोधे नियामक इति नागेशीयः पन्था:।

यद्यपि फलावच्छिन्नव्यापारत्वस्य व्यापारावच्छिननफलत्वस्य च शक्यतावच्छेदकत्वकल्पनप्रयुत्तंगौरवमेतेषां मते स्फुटं प्रतिभाति, तथापि भिन्नशक्तिवादिनां फलविशेषणकव्यापारविशेषणकावान्तरवाक्यार्थबोधे कर्तृप्रत्ययसमभिव्याहृतधातुजन्य-समूहालम्बनात्मकोपस्थितिः कारणम्, व्यापारविशेषणफलबोधे कर्मप्रत्ययसमभिव्याहृतधातुजन्यसमूहालम्बनात्मकोपस्थितिः कारणमिति कार्यकारणभावद्वयकल्पनेऽतिगौरवम्। विशिष्टशक्तिवादिनां तु तत्तत्समभिव्याहारवशादवान्तरवाक्यार्थबोधस्थानीया विशिष्टोप-स्थितिरेवेति न तेषामुक्तकार्यकारणभावद्वयम्।

वस्तुतस्तु प्राचीनमतं रमणीयं कुतो ह्युद्देश्यविधेयभावेनान्वयनियामकव्युत्पत्तौ धातुभिन्नत्वस्य विशेषणदानेनादोषात्। फलव्यापारयोरिति कारिकायां फलत्वेन यदुद्दिश्य धात्वर्थक्रियायाः प्रवृत्तिः, तत्फलं यथा स्वर्गमुद्दिश्य यागो विधीयत इति पाकफलस्य भोजनस्य कर्तृगामित्वे आत्मनेपदम्। यदि महता पूâत्कारत्वाधःसन्तापनत्वचुल्युपरि धारणत्वादिप्रयासेन वराकेन वैतनिकेन सूपकारेण भोजनं निर्मितम्, तच्च केनापि **'स्वरितञितः कर्त्रभिप्राये क्रियाफले'**६ इति सूत्रे भाष्ये- 'साधीयो यत्र क्रियाफलं कर्तारमभिप्रैति न चान्तरेण यजिं यजिफलं वर्पिं लभन्ते। याज्ञिकाः पुनरन्तरेणापि यजिं लभन्ते भृतकाश्च पाकादिकम्' इति हरिणाप्युक्तम्।

**यस्यार्थस्य प्रसिद्ध्यर्थमारभन्ते पचादयः । तत्प्रधानं फलं तेषां न लाभादिप्रयोजनम् ॥ ७ इति।**

फलव्यापारयोरत्र व्यापारपदेन साध्यत्वेनाभिधीयमाना क्रिया गृह्यते। साध्यत्वेन इत्यत्र **''प्रकृत्यादिभ्य८ उपसंख्यानम्''** इति तृतीया, तदर्थश्च प्रकारीत्वम्, निरुपितत्वसम्बन्धेन प्रकारितायां, तस्याश्च स्वरूपसम्बन्धेन प्रतीतिरूपाऽभिधानपदार्थेन्नवयः, अभिधीयमानेत्यत्र कर्मप्रत्ययार्थो विशेष्यता, तथा च साध्यत्वनिरुपितप्रकारितावत् प्रतीतिविशेष्यत्वं क्रियात्वम् फलितम्। क्रियात्वञ्च गुणानाश्रयत्वे सति विभागासमवायिकारणत्वम्। उक्तञ्च वाक्यपदीये-

**यावत् सिद्धमसिद्धं वा साध्यत्वेनाभिधीयते । आश्रितक्रमरूपत्वात् सा क्रियेत्यभिधीयते ॥ ९ इति।**

अर्थादाश्रितम्•अधिश्रयणाद्यवयवानां क्रमरूपं पौर्वापर्यं यया सा आश्रितक्रमरूपा। क्रियतेऽवयवानां क्रमेणोत्पत्त्या या सा क्रिया इत्यन्वर्थसंज्ञा। यत्र चारस्त्यादौ पौर्वापर्यभावः तत्राप्यारोपेण रूढ्या वा क्रियात्वं वोध्यम्। न च साध्यत्वेनाभिधाने मानाभावः, पचति, पाकः, करोति, कृतिः इत्यादौ धात्वर्थावगमाविशेषेऽपि क्रियान्तराकाङ्क्षाऽनाकाङ्क्षयोर्दर्शनात् क्रियायामपि द्वैविध्यं दृग्गोचरतां याति। तत्र क्रियान्तराकाङ्क्षानुत्थापकतावच्छेदकरूपं साध्यत्वं तद्रूपत्वमसत्त्वभूतत्वम्। असत्वभूतत्वं च लिङ्गसंख्यानन्वयित्वम्, एतदेवादाय **'असत्त्वभूतो भावश्च तिङ्पदैरभिधीयते'१०** इति वाक्यपदीये निरूपितम्। अत्रत्यतिङ्पदैः इत्यस्यार्थः तिङ्कृतिभिः यद्वा भावतिङन्तपदैरित्यर्थः।

अयञ्च व्यापारः पूâत्कारत्वाधःसन्तापनत्वयत्नत्वादि तत्तद्रूपेण वाच्यः। कुत इति चेत्, पचतीत्यादौ तथैव बोधस्यानुभवसिद्धत्वात्। तत्राधिश्रयणमात्रस्य धातुना विवक्षितत्वे ''स्थाली पचति'' इति, अधः सन्तापनस्य तत्वे ''काष्ठानि पचन्ति'' इति, धातुना तदविवक्षायाम् ''स्थाल्यां पचाति'' काष्ठैः पचति'' इति पूâत्कारादेरेकस्याऽपि पूर्वापरीभूतावयवत्वेनैव क्रियात्वम्, तदुत्तंâ वाक्यपदीयकारेण-

**एकदेशे समूहे वा व्यापाराणां पचादयः।११ स्वभावतः प्रवर्तन्ते तुल्यरूपं समाश्रिताः ॥**

नानार्थतापत्तिरूपा विभीषिकाऽपि तदादिन्यायेन बुद्धिविशेषादेः शक्यतावच्छेदकानामनुगमकत्वेनास्तं जगाम। तथा हि वाक्यपदीये-

**गुणभूतैरवयवै: समूह: क्रमजन्मनाम् । बुद्धया प्रकल्पिताऽभेद: क्रियेति व्यपदिश्यते ॥ १२ इति।**

क्रमजन्मनामक्रमेण•पौर्वापर्येणोत्पत्तिमतां पूâत्कारादिव्यापाराणां समूहो बुद्धया•सङ्कनात्मैकत्वबुद्धाप्रकल्पितोऽभेदो यत्र समूहे स बुद्धिप्रकल्पितसमूह एव क्रिया इत्यर्थ:।

'आश्रये तु तिङः स्मृत:' अत्राश्रयमात्रं तिङर्थ:। कुतो हि फलव्यापारयोर्धातु- लभ्यत्वात्। तथाहि तिङर्था: कर्तृकर्मसंख्याकाला:, तत्र कर्ता व्यापारे कर्मफले विशेषणम्। संख्या तु कर्तृप्रत्यये कर्तृरि कर्मप्रत्यये कर्मणि, कुत: समान- प्रत्ययोपात्तत्वात्। कालस्तु व्यापारे विशेषणम्। एवञ्च तिङर्थौ विशेषणमेव भावनैव प्रधानम्।

तत्र प्राभाकरा:-फलमेव धात्वर्थ:-पचि-गमि-त्यजि-प्रभृतीनां विक्लिति- संयोगविभागादिरूपफलमेवार्थ इति स्वीकुर्वन्ति, पुरुषप्रवृत्तिरूपा। आर्थीभावना आख्यातार्थ:, आख्यातार्थवर्तमानत्वादिकन्तु भावनायामन्वेति, समानपदोपस्थितत्वात्। तेन भावनाविरामे न पचतीत्यादिप्रयोग:।

कारकाणां भावनान्वये प्रमाणे भट्टोजिदीक्षितस्येयं कारिका-

**सम्बोधनानां कृत्वोऽर्था: कारकं प्रथमो वति: । धातुसम्बन्धाधिकारनिष्पन्नमसमस्तनञ्13 ॥**

सम्बोधनान्तस्य क्रियायामन्वय:, त्वं ब्रूहि देवदत्त! इत्यादौ निघातानुरोधात् **'समानवाक्ये निघातयुस्मदस्मदादेशा:'**14 इत्यनेन समानवाक्य एव तन्नियमात्। उक्तञ्च वाक्यपदीये-

**सम्बोधनपदं यच्च तत्क्रियायां विशेषणम् । व्रजानि देवदत्तेति निघातोऽत्र तथा सति ॥ 15 इति ।**

तस्माद् धातोः फलं व्यापारश्चेत्यर्थद्वयं सर्वै: स्वीकरणीयम्।

**मण्डनमिश्रास्तु-** '**प्रकृतिप्रत्ययार्थयो: प्रत्ययार्थस्यैव प्राधान्यमिति**16 न्यायात् **तदागमे हि दृश्यते इति न्यायाच्च**17 आख्यातप्रयोगे व्यापारस्य स्फुटदर्शनाद् धातो: फलव्यापारयोर्वाच्यत्वेऽपि व्यापार आख्यातार्थ इति निगदन्ति। किन्तु सिद्धान्तोऽयं निर्मूल एव, कुतो धातोर्यदि फलमात्रमर्थ: स्वीक्रियेत, तदा 'ग्रामो गमनवान्' इति प्रयोगापत्ति: स्यात्। फलव्यापारयो: पृथग्धात्वर्थमतेऽपि केवलं फलार्थत्वमादाय तदापत्तिस्तु न शक्या, अन्तरङ्गत्वात् फलस्य व्यापारे एव प्रांगन्वयात्।

तत्र **प्राभाकरा:**-फलमेव धात्वर्थ:-पचि-गमि-त्यजि-प्रभृतीनां विक्लिति- संयोगविभागादिरूपफलमेवार्थ इति स्वीकुर्वन्ति, पुरुषप्रवृत्तिरूपा। आर्थीभावना आख्यातार्थ:, आख्यातार्थवर्तमानत्वादिकन्तु भावनायामन्वेति, समानपदोपस्थितत्वात्। तेन भावनाविरामे न पचतीत्यादिप्रयोग:।

## निष्कर्षः

अनेन अध्ययनेन इदमेव लब्धम् यत् प्राचीननव्ययोर्मध्ये प्राचीनमतं रमणीयं कुतो ह्युद्देश्यविधेयभावेनान्वयनियामकव्युत्पत्तौ धातुभिन्नत्वस्य विशेषणदानेनादोषात्। फलव्यापारयोरिति कारिकायां फलत्वेन यदुद्दिश्य धात्वर्थक्रियाया: प्रवृत्ति:, तत्फलं यथा स्वर्गमुद्दिश्य यागो विधीयत इति पाकफलस्य भोजनस्य कर्तृगामित्वे आत्मनेपदम्। यदि महता फुत्कारत्वाध:सन्तापनत्वचुल्युपरि धारणत्वादिप्रयासेन वराकेन वैतनिकेन सूपकारेण भोजनं निर्मितम्, तच्च केनापि **'स्वरितञित: कर्त्रभिप्राये क्रियाफले'** इति सूत्रे भाष्ये- 'साधीयो यत्र क्रियाफलं कर्तारमभिप्रैति न चान्तरेण यजिं यजिफलं वपिं लभन्ते।

याज्ञिका: पुनरन्तरेणापि यजिं लभन्ते भृतकाश्च पाकादिकम्' इत्यलम् ।

**सन्दर्भग्रन्थसूची**

१. वैयाकरणभूषणसार, धात्वर्थप्रकरण, प्रभाटीका, पृ० ११

२. वैयाकरणभूषणसार, धात्वर्थप्रकरण, प्रभाटीका, पृ० ११

३. वैयाकरणभूषणसार, धात्वर्थप्रकरण, प्रभाटीका, पृ० ११

४. वैयाकरणभूषणसार, धात्वर्थप्रकरण, पृ० ११

५. वैयाकरणभूषणसार, धात्वर्थप्रकरण, प्रभाटीका, पृ० ११

६. अष्टाध्यायी- १/३/७२

७. वैयाकरणभूषणसार, धात्वर्थप्रकरण, दर्पणटीका, पृ० १३

८. वैयाकरणसिद्धान्तकौमुदी, कारकप्रकरण।

९. वैयाकरणभूषणसार, धात्वर्थप्रकरण, पृ० १६

१०. वैयाकरणभूषणसार, धात्वर्थप्रकरण, पृ० १८

११. वैयाकरणभूषणसार, धात्वर्थप्रकरण, प्रभाटीका, पृ० १९

१२. वैयाकरणभूषणसार, धात्वर्थप्रकरण, पृ० २१

13. वैयाकरणभूषणसारस्थधात्वर्थप्रकरणम्

14. वैयाकरणभूषणसारस्थधात्वर्थप्रकरणम्

15. वैयाकरणभूषणसारस्थधात्वर्थप्रकरणम्

16. वैयाकरणभूषणसारस्थधात्वर्थप्रकरणम्

17. वैयाकरणभूषणसारस्थधात्वर्थप्रकरणम्

*******

**Volume XXI : January to June – 2023, ISSN 2250-1711**
**Journal of Veda Samskrita Academy [Recognised in the UGC-CARE List]**

# सर्वनामसंज्ञाविधाने निषेधसूत्राणि- एका समीक्षा

## Negation in Pronouns According to Panini

**Sajal Mondal**
Ph.D. Scholar
Department of Sanskrit
Patliputra University, Patna, Bihar- 800020
Phone – 9641751513
Email – mondalsajal89@gmail.com

सर्वासु भाषासु सर्वनामशब्दाः दृश्यन्त एव। सर्वभाषाजननीस्वरूपायां संस्कृतभाषायामपि सर्वनामशब्दाः प्रयुज्यन्त एव। सर्वशास्त्रनिष्णात्रा वैयाकरणशिरोमणिपाणिनिना लघुरूपेण व्याकरणशास्त्रप्रतिपादनायाष्टाध्यायी प्रणीता। तत्र च लघुरूपेण वर्णप्रतिपादनाय तथा शब्दप्रतिपादनाय कानिचन संज्ञासूत्राण्यपि प्राणीतानि। तेषु संज्ञासूत्रेषु सर्वनामशब्दप्रतिपादिनाय कानिचन सूत्राणि दृश्यन्ते। एवञ्चातिप्रसक्तिवारणाय कानिचन निषेधसूत्राणि दरीदृश्यन्ते। पाणिनिप्रणीतायामष्टाध्याय्यां प्रायः सर्वनामसंज्ञाविषयकानि दश सूत्राणि विलसन्ति। तेषु कानिचन निषेधसूत्राण्यपि वर्तन्ते। तानि स्वीकृत्यैवायं निबन्धः।

व्याकरणशास्त्रे सर्वनामसंज्ञाविधायकमन्यतममुख्यसूत्रं वर्तते **सर्वादीनि सर्वनामानि।** अनेन सूत्रेण सर्वादिगणपठितशब्दानां सर्वनामसंज्ञा विधीयते। सर्वादिगणे प्रायः चतुर्विंशतिः शब्दाः तथा प्रत्ययद्वयम् एवञ्च गणसूत्राणि त्रीणि विराजन्ते। यथा च— सर्व, विश्व, उभ, उभय, डतर(प्रत्ययः), डतम(अयमपि प्रत्ययः), अन्य, अन्यतर, इतर, त्वत्, त्व, नेम, सम, सिम, त्यद्, तद्, यद् एतद्, इदम्, अदस्, एक, द्वि, युष्मद् अस्मद्, भवतुँ, किम् इति। एवं गणसूत्राणि त्रीणि यथा—

**पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम्, स्वमज्ञातिधनाख्यायाम्। अन्तरं बहिर्योगो-पंव्यानयोः।**

समुदायस्य संख्यां बोधयितुं सर्वशब्दस्य प्रयोगः एकवचने द्विवचने च भवति। एवं वस्तुनः संख्यां बोधयितुं सर्वशब्दस्य प्रयोगो बहुवचने भवति। सम्पूर्णे सकले अर्थे विश्वशब्दस्य सर्वनामसंज्ञा भवति। युगलार्थे उभशब्दस्य सर्वनामसंज्ञा। एकवचने तथा बहुवचने सामान्यरूपेण उभयशब्दस्य प्रयोगो दृश्यते। द्वौ अवयवौ अस्येत्यर्थे एकवचने द्वौ राशी समुदायस्य अवयवौ इत्यस्मिन् अर्थे बहुवचने अस्य प्रयोगः। डतरडतमौ प्रत्ययौ वर्तेते। **किंयत्तदो निर्धारणए द्वयोरेकस्य डतरच्, वा बहूनां जातिपरिप्रश्ने डतमच्, एकाच्च प्राचाम्** इति सूत्रैः डतरडतमौ प्रत्ययौ विधीयेते। प्रायः एतयोः प्रत्यययोः प्रयोगेण अष्टौ शब्दाः निष्पद्यन्ते। यथा- कतर, कतम, यतर, यतम, ततर, ततम, एकतर, एकतम। यद्यपि सर्वादिगणे डतरडतमौ पठितौ तथापि न केवला प्रकृतिः प्रयोक्तव्या न केवलः प्रत्ययः इति भाष्यकारवचनादेतेषां सर्वेषां प्रत्ययान्तामेव सर्वनामसंज्ञा भवति।

परः इत्यस्मिन् अर्थे अन्यशब्दस्य, **द्वयोः एकः** इत्यस्मिन्नर्थे अन्यतरशब्दस्य, **अनेकेषु एकः** इत्यर्थे अन्यतमशब्दस्य, भिन्नार्थे इतरशब्दस्य, त्वत् इत्यस्य त्वशब्दस्य च, अर्धम् इत्यर्थे नेमशब्दस्य सर्वमित्यर्थे समशब्दस्य, सिमशब्दस्य, प्रश्नवाचकत्वे किम्-शब्दस्य, अनिश्चयवाचकत्वे यद्-शब्दस्य, वस्तूनां परोक्षत्वप्रतिपादकतायां त्वद्-शब्दस्य तथा तद्-शब्दस्य परोक्षत्वे तु अदस्-शब्दस्य इदम्-शब्दस्य अत्यन्तसामीप्ये तु एतत्-शब्दस्य सर्वनामसंज्ञा भवति। अत्यन्तप्रसिद्धेयं कारिका—

**इदमस्तु सन्निकृष्टे समीपतरवर्ति चैतदो रूपम्। अदसस्तु विप्रकृष्टे तदिति परोक्षे विजानीयात्॥**

एवञ्च एकशब्दस्य अनेके अर्थाः सन्ति। यथा अन्यः, प्रधानम्, प्रथमः, केवलम् इत्यादयः। तथा चामरकोशे दृश्यते—

**एकोऽन्यार्थे प्रधाने च प्रथमे केवले तथा। साधारणे समानेऽल्पे सङ्ख्यायाश्च प्रयुज्यते॥**

एतेषु अर्थेषु एकशब्दस्य सर्वनामसंज्ञा प्रकृतसूत्रेण क्रियते। एवं संख्यावाचकद्विशब्दस्य, युष्मद्-शब्दस्य, अस्मद्-शब्दस्य, भवत्-शब्दस्य च सर्वनामसंज्ञा प्रकृतसूत्रेण विधीयते।

**गणसूत्राणि—**

**१. पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम्—** अनेन पूर्वशब्दस्य, परशब्दस्य, अवरशब्दस्य, दक्षिणशब्दस्य, उत्तरशब्दस्य, अपरशब्दस्य अधरशब्दस्य च सर्वनामसंज्ञा विधीयते व्यवस्थायां संज्ञाभिन्नेऽर्थे च प्रयोगे। अत्र व्यवस्था नाम काशिकादिग्रन्थे प्रतिपादिता स्वाभिधेयापेक्षावधिनियमः इति। स्वाभिधेयापेक्षावधिनियमविषये स्पष्टज्ञानं नासादितः सम्यग्भवति तथा च तत्र प्रतिपादितम्— अवधिर्मर्यादा, तस्य नियमोऽवश्यम्भावः, अवधिभावादभ्रंशः। किंविशिष्टोऽवधिनियमः? स्वाभिधेयापेक्षः ह्यर्थानां पूर्वादिशब्दाभिधयानां यत् पूर्वादित्वम्, तन्नियोगतः कञ्चनावधिमपेक्ष्य सम्पद्यते, न त्ववधिनिरपेक्षम्, यथा- पूर्वदेशस्य यत् पूर्वत्वम्, तत्परं देशमपेक्ष्य भवति, परस्यापि यत् परत्वम् तत्पूर्वदेशम्, तस्मात् पूर्वादिशब्दवाच्यापेक्षेणावश्यं केनचिदवधिना भाव्यम्। तत्र तस्यैवावधेः यः पूर्वादिशब्दार्थं.............इति[1]। अतः पूर्वादिशब्दाः यदा अवधिं प्रदर्शयन्ति तदैव तेषां सर्वनामतेति।

**२.स्वमज्ञातिधनाख्यायाम्—** स्वशब्दस्य सर्वनामसंज्ञा भवति ज्ञातिभिन्नार्थे तथा धनभिन्नार्थे। वस्तुतः स्वशब्दस्यार्थचतुष्टयं प्रसिद्धं वर्तते आत्मा, आत्मीयः, ज्ञातिः, धनम्। एतेषु आत्मार्थे तथा आत्मीयार्थे विद्यमानस्वशब्दस्य सर्वनामसंज्ञा भवति।

**३.अन्तरं बहिर्योगोपसंव्यानयोः—** अन्तरशब्दस्य बहिः तथा उपसंव्यानम् इत्यनयोः अर्थयोः सर्वनामसंज्ञा भवति। अत्र अन्तरशब्दस्य अन्तर्वस्त्रम् इत्यर्थे। यथा— रामः नगरात् अन्तरः निवसति। रामः अन्तरं धारयतीति। सर्वादिगणे अन्यदेकं वार्तिकं दृश्यते। यथा—

**संज्ञोपसर्जनीभूताः न सर्वादयः—** सर्वादिगणस्थशब्दानां यदा संज्ञारूपेण अथवा उपसर्जनरूपेण अर्थात् अप्रधानरूपेण प्रयोगो भवति तदा तेषा सर्वनामसंज्ञा न भवतीति। उत्तरशब्दस्य मत्स्यराजस्य पुत्ररूपेण व्यवहारस्तदा न तस्य सर्वनामता। एवं पूर्वा च उत्तरा च अनयोरमध्ये विद्यमानः अन्तरालः इत्यत्र अन्यपदार्थस्य प्राधान्यात् पूर्वोत्तरशब्दयोः न सर्वनामता।

वस्तुतोऽनेन सर्वादिगणस्थवार्तिकेन सर्वादिगणपठितशब्दानां सर्वनामसंज्ञायाः निषेधो भवति। अत इदं सर्वनामसंज्ञानिषेधं वार्तिकम्।

**1.विभाषा दिक्समासे बहुव्रीहौ—** सर्वनामसंज्ञानिषेधसूत्रेषु अष्टाध्याय्यामन्यतमं प्रथमं सूत्रं वर्तते विभाषा दिक्समासे बहुव्रीहौ इति। वस्तुतः यत्र विकल्पेन सूत्रस्य प्रवृत्तिर्भवति तत्र द्विधा गतिर्भवति। यथा विधिमुखेन प्रवृत्तिः निषेधमुखेन प्रवृत्तिः। अनेन सूत्रेण दिग्वाचकशब्दानां बहुव्रीहिसमासे सति सर्वादिगणस्थशब्दानां विकल्पेन सर्वनामसंज्ञा विधीयते। अर्थात् विधिमुखेन यदा सूत्रस्य प्रवृत्तिर्यदा भवति तदा सर्वनामसंज्ञा विधीयते इत्यर्थः। यदा निषेधमुखेन सूत्रस्य प्रवृत्तिर्भवति तदा विकल्पेन निषिध्यते इत्यर्थः। वस्तुतः दिङ्नामान्यन्तराले इति सूत्रेण विधीयमानो बहुव्रीहिसमासः दिक्समासः इत्युच्यते। एवञ्च दक्षिणपूर्वा, उत्तरपूर्वा, दक्षिणपश्चिमा, उत्तरपश्चिमा इति चत्वारि रूपाणि निष्पद्यन्ते।

अत्र धातव्यम्— दक्षिणपश्चिमा उत्तरपश्चिमा इत्यादिस्थलेषु पश्चिमशब्दस्य सर्वादिगणे पाठाभावात् विभाषा दिक्समासे बहुव्रीहौ इति सूत्रस्य किमपि प्रयोजनं नास्ति। परन्तु यत्र बहुव्रीहिसमासेन उत्तरपूर्वा इति शब्दो निष्पद्यते तत्र अस्य सूत्रस्य प्रयोजनं वर्तते एव।

**2. न बहुव्रीहौ—** सर्वनामसंज्ञानिषेधकसूत्रेषु द्वितीयसूत्रं वर्तते न वहुव्रीहौ। अनेन सूत्रेण सर्वादिगणस्थशब्दानां बहुव्रीहिसमासे सर्वनामसंज्ञायाः निषेधः कृतः। यथा प्रियं विश्वं यस्य स प्रियविश्वः। अत्र विश्वशब्दस्य समासविधानात्पूर्वं तथा अनन्तरमपि सर्वनामसंज्ञा न भवति।

---

1. काशिका, तृरीयभागः

अत्र वस्तुतः अकच्प्रत्ययस्य निषेध एव सर्वनामसंज्ञानिषेधस्य अन्यतमं प्रधानं प्रयोजनम्। वस्तुतः सर्वमानसंज्ञात्वात् सर्वत्र बहुव्रीहिसमासे अव्ययसर्वनाम्नामकच्प्राक् टेः इति सूत्रेण अकच्प्रत्ययस्य प्राप्तिर्भवति। तद्वावरणायैव अस्य सूत्रस्य आरम्भः। परन्तु भाष्यकारेण सूत्रमिदं प्रत्याख्यातम्। तथा हि प्रियविश्वः द्व्यन्यः इत्येतेषु उदाहरणेषु बहुव्रीहिसमासे अन्यपदार्थस्य प्राधान्यात् उभयोः पद्योः अप्राधान्यत्वात् संज्ञोपसर्जनीभूतास्तु न सर्वादयः इति वार्तिकेनैवास्य सिद्धत्वात् सूत्रमिदं न कर्तव्यमिति भाष्यकारस्य मतम्।

3. **तृतीयासमासे—** सर्वनामसंज्ञानिषेधकमन्यतमं सूत्रं भवति तृतीयासमासे इति। अनेन सूत्रेण यत्र तृतीयासमासो भवति तत्र विद्यानानां सर्वादिगणस्थशब्दानां सर्वनामसंज्ञायाः निषेधः क्रियते।

वस्तुतः पूर्वसदृशसमोनार्थकलहनिपुणमिश्रश्लक्ष्णौः इति सूत्रेण सर्वादिगणपठितपूर्वादिशब्दानां तृतीयासमासः क्रियते। यथा मासेन पूर्वः मासपूर्वः। अत्र च प्रकृतसूत्रेण पूर्वशब्दस्य सर्वनामसंज्ञा निषिध्यते।

अत्र काचन शङ्का समुत्पद्यते यत् विभाषा दिक्समासे बहुव्रीहौ इति सूत्रात् समासे इत्यनुवृत्तौ पुनः समासग्रहणस्य किम्प्रयोजनमिति। अस्य समाधानाय काशिकादिग्रन्थे दृश्यते— तृतीयासमासार्थवाक्येऽपि प्रतिषेधो यथा स्यात्। अर्थात् यत्र तृतीयासमासं विहाय केवलं वाक्यप्रयोगो भवति तत्रापि सर्वनामसंज्ञानिषेधो यथा स्यात्तदर्थमत्र समासग्रहणम्। तेन मासपूर्वाय इत्यस्य विग्रहवाक्यप्रयोगदशायामपि मासेन पूर्वाय इत्येव वक्तव्यम्, न तु मासेन पूर्वस्मै।

4. **द्वन्द्वे च—** सर्वनामसंज्ञानिषेधकमन्यतमं सूत्रं वर्तते द्वन्द्वे च। द्वन्द्वे सर्वादिगणस्थशब्दानां सर्वनामसंज्ञा न भवति। वस्तुतः द्वन्द्वावयवभूतानां सर्वादिशब्दानां प्रकृतसूत्रेण सर्वनामसंज्ञा न भवतीति सूत्रार्थः। यथा—पूर्वश्च परश्च इति द्वन्द्वसमासे पूर्वपरौ। एतयोः यद्यपि सर्वनामसंज्ञा सर्वादीनि सर्वनामानि इति सूत्रेण सम्भवति तथापि प्रकृतसूत्रेण तदन्तविधिः प्रतिषिध्यते। अतः षष्ठीबहुवचने पूर्वपराणाम् इति रूपं भवति, न तु पूर्वपरेषामिति।

वस्तुतः सर्वादिगणस्थशब्दानां तदन्तविधिनापि सर्वनामसंज्ञा भवति। साक्षादस्य सूत्रे कथनं वर्तते। किन्तु ज्ञापकेन तदन्तविधिना सर्वनामसंज्ञा सिद्ध्यति। एवञ्च प्रकृतसूत्रमेवास्य ज्ञापकं वर्तते। तथा हि पूर्वपरादिसमुदायस्य सर्वादिगणे पाठाभावात् तेषां सर्वादीनि सर्वनामानि इति सूत्रेण सर्वनामसंज्ञैव न भवति। अतः द्वन्द्वे च इति सूत्रविधानं व्यर्थम्, व्यर्थीभूय ज्ञापयति तदन्तिविधिनापि सर्वनामसंज्ञा भवतीति। तेन पूर्वपरौ इत्यत्र सर्वनामसंज्ञायां प्राप्तायां तन्निषेधः युज्यते।

वस्तुतः द्वन्द्वसमासावयबभूतानां सर्वादिगणस्थशब्दानां प्रकृतसूत्रेण सर्वनामसंज्ञा न निषिध्यते अपितु तदन्तिविधिरेव निषिध्यते। तेन च समस्तपदस्यैव सर्वनामसंज्ञानिषेधः।

5.**विभाषा जसि—** सर्वनामसंज्ञानिषेधकमन्यतमं सूत्रं भवति विभाषा जसि। अनेन सूत्रेण द्वन्द्वसमासघटकसर्वादिगणपठितशब्दानां जस्प्रत्यये विकल्पेन सर्वनामसंज्ञा विधीयते। अत्रापि पूर्ववद्विधीमुखेन तथा निषेधमुखेन प्रवृत्तिरिति बोध्यम्। यत्र निषेधमुखेन प्रवृत्तिर्भवति। तत्र विकल्पेन जस्प्रत्यये परे सर्वनामसंज्ञा न भवतीति बोध्यम्। यथा— पूर्वपराः, पूर्वपरे। वर्णाश्रमतराः, वर्णाश्रमतरे।

6.**प्रथमचरमतयाल्पार्धकतिपयनेमाश्च—** सर्वनामसंज्ञानिषेधकं पाणिनीयमन्यतमं सूत्रं वर्तते प्रथमचरमतयाल्पार्थकतिपयनेमाश्च। प्रकृतसूत्रेण प्रथम, चरम, अल्प, अर्ध, कतिपय, नेम, इत्येषां शब्दानां तथा तयप्प्रत्ययान्तशब्दानां जसि परे विकल्पेन सर्वनामसंज्ञा विधीयते। यथा जस्प्रत्यये रूपम् नेमाः, नेमे एवं तयप्प्रत्ययान्तस्योदाहरणं द्वितीया, द्वितीये। पञ्चतयाः, पञ्चतये इत्यादीनि। अस्मिन् सूत्रे वार्त्तिकमेकं दरीदृश्यते यथा विभाषाप्रकरणे तीयस्य ङित्सूपसङ्ख्यानम् इति द्वेस्तीयः इति सूत्रेण त्रेः सम्प्रसारणं च इति च सूत्रेण तीयप्रत्ययो विधीयते। तीयप्रत्ययान्तशब्दानां सर्वादिगणे पाठो नास्तीत्यतः सर्वनामसंज्ञा नास्ति। अतः प्रकृतवार्तिकेन तीयप्रत्ययान्तशब्दानां ङित्प्रत्यये परे विकल्पेन सर्वनामसंज्ञा विधीयते। अप्राप्तविभाषेयम्। यथा द्वितीयस्मै, द्वितीयाय। तृतीयस्मै, तृतीयाय।

**7.पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम्—** सर्वनामसंज्ञानिषेधकमन्यतमं सूत्रं वर्तते पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायामिति। अनेन सूत्रेण पूर्वादिशब्दानां संज्ञाभिन्ने तथा व्यवस्थायाम् अर्थात् स्वाभिधेयापेक्षावधिनियमे जस्प्रत्यये परे सर्वनामसंज्ञा विधीयते। यथा — काशी पूर्वा इत्यादयः। एवञ्च उत्तराः कुरवः इत्यत्र उत्तरशब्दस्य कुरूणां देशसंज्ञकत्वात् सर्वनामसंज्ञा न भवति। एवं स्वमज्ञातिधनाख्यायाम् अन्तरं वहिर्योगोपसंव्यानयोः इति सूत्राभ्यां जस्प्रत्यये सर्वनामसंज्ञायायाः निषेधः क्रियते।

वस्तुतः पूर्वपरावरदक्षिणोत्तरापरधराणि व्यवस्थ्यायामसंज्ञायाम्, स्वमज्ञातिधनाख्यायाम्, अन्तरं बहिर्योगोपसंव्यानयोः इति सूत्राणि सर्वादिगणे पठितानि एवं पाणिनिना पृथक् पृथक् सूत्ररूपेणापि पठितानि। पृथक् पठितसूत्रैः जस्प्रत्यये परे विकल्पेन सर्वनामसंज्ञायाः निषिध्यमानत्वाद्रूपद्वयं सम्भवति यथा— पूर्वे, पूर्वाः, अन्तरे, अन्तराः इत्यादीनि।

**उपसंहारः—**

पाणिनीयसंज्ञासूत्रेष्वन्यतमव्याकरणशास्त्रनिर्वाहकविषयो भवति सर्वनामसंज्ञा। अत्र च बहवः भ्रान्ताः भवन्ति। अतः विषयमिममधिकृत्यायं प्रबन्धः निर्मितः। वस्तुतः अस्मिन् विषये विशदविवेचनं महाभाष्ये नागेशादिग्रन्थे दरीदृश्यते। तथा सारल्येन दिङ्मात्रमत्र प्रतिपादितमिति शम्।

**सन्दर्भग्रन्थसूची—**

• झा रमेशचन्द्रः(सम्पा.)। पाणिनीयव्याकरणम्। वाराणसी: चौखम्बा कृष्णदास अकादमी,२००५।

• पाणिनिः। अष्टाध्यायी। सम्पा. -पुष्पादीक्षितः,दिल्ली: ज्ञानभारती पब्लिकेशन, २००९।

• पाणिनिः। पाणिनीयशिक्षा। सम्पा.– रमाशङ्कर मिश्रः। वाराणसी: चौखम्बा सुरभारती प्रकाशन, २०१५।

• नागेशः। परिभाषेन्दुशेखरः। सम्पा. जयदेवशर्ममिश्रः। वाराणसी: चौखम्बा विद्याभवन, २००९ (प्रथमसंस्करणम्)।

• नागेशः। परमलघुमञ्जूषा। सम्पा.– जयशङ्करलालत्रिपाठी। वाराणसी: चौखम्बा कृष्णदास अकादमी,२००६।

• नागेशः। परिभाषेन्दुशेखरः। सम्पा. विश्वनाथमिश्रः। वाराणसी: चौखम्बा सुरभारती प्रकाशन, २०१४(प्रथमसंस्करणम्)।

• भर्तृहरिः। वाक्यपदीयम्। सम्पा. सत्यनारायण खण्डूडी। वाराणसी: चौखम्बा विद्याभवन,२००६।

• भट्टोजिदीक्षितः। सिद्धान्तकौमुदी(तत्त्वबोधिनीसहिता)। सम्पा. गिरिधरशर्मा, पर मेश्वरानन्दशर्मा। दिल्ली: मोतीलाल बनारसीदास, १९६१(प्रथमसंस्करणम्)।

• युधिष्ठिरमीमांसकः सम्पा.। संस्कृत व्याकरण शास्त्र का इतिहास।। वारणसी: चौखम्बा पब्लिशर्स, २००३।

**********

**Volume XXI : January to June – 2023, ISSN 2250-1711**
**Journal of Veda Samskrita Academy [Recognised in the UGC-CARE List]**

# स्फोटविचारः

**Dr. Ranjita Goswami.**
Associate Professor, Department of Sanskrit
Arya Vidyapeeth College (Autonomous), Gopinath Nagar- 781016
Guwahati, Kamrup Metro, Assam
Contact No. : 7399110778
E-mail : goswamiranjita1974@gmail.com

**शोधसारः**

स्फोटः भारतीयपरम्परायाः पाणिनिदर्शनस्य च कश्चन एको महत्त्वपूर्णः विषयोऽस्ति । वैयाकरणाः एतमेव स्फोटम् (नित्यः शब्दः) संसारस्य कारणत्वेन मन्यन्ते । ये जनाः नित्यशब्दरूपं स्फोटं संसारस्य मूलम् कारणं स्वीकुर्वन्ति, ते स्फोटवादिनः भवन्ति । पाणिनिदर्शने वर्णाः न वाचकाः, अपितु स्फोटबलादेव (मध्यमानादव्यङ्गः ) अर्थस्य प्रतिपत्तिः स्वीक्रियते । स च स्फोटः अष्टविधः । तत्र स्फोट एक एव शब्दात्मकब्रह्मरूपः । स च वर्णादिरुपव्यञ्जकभेदात् तत्तत्सन्ज्ञां लभते । एतेषु स्फोटेषु मध्ये वाक्यस्फोटस्यैव मुख्यवाचकत्वम् , अत एवोक्तं भर्तृहरिणा - वाक्यस्फोटोऽति निष्कर्षे तिष्ठतीति मतस्थितिः । अन्ये स्फोटाः शास्त्रीयकार्यनिर्वाहकाः । कल्पितान्वयव्यतिरेकाभ्यां कल्पितार्थवन्त एव । अत एवोक्तं हरिणा -

**उपायाः शिक्षमाणानां बालानामुपलालना । असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते ॥** 1

**विश्लेषणम्**

आरम्भतः एव विदुषां वाक्तत्त्वविषये सन्ति दुरुहाः मतभेदाः, प्रायशः विश्वस्य सर्वे विद्वांशः एतद्विषये प्रयत्नरताः दरीदृश्यन्ते । शाब्दबोधस्य व्याख्या भारतीयदार्शनिकचिन्तनधारायां ये जटिलाः विवेच्यमाणाः विषयाः सन्ति तेषु एकः कश्चन व्याख्यातव्योऽयं विषयः अस्ति । भारतस्य व्याकरणदार्शनिकाः शब्दस्य ध्वनेर्वा वाक्यस्य स्पष्टतया अर्थबोधाय स्फोटसिद्धान्तमङ्गीकुर्वन्ति । नैयायिकादयः वैखरीवाचमेव वाचकत्वेन आश्रित्य अनित्यतां शब्दस्य प्रतिपादयन्ति । तदर्थं काञ्चन हेतूनपि प्रददन्ति ते च इत्थम्भूताः वर्तन्ते - पूर्वं यो वर्णः श्रुतः, तस्य अनुभवजन्यः संस्कारो जातः, द्वितीयवर्णश्रवणकाले प्रथमवर्णस्य नाशे सत्यपि तस्य संस्कारस्य विद्यमानता, एवमेव तृतीयवर्णानुभवकाले द्वितीयवर्णस्य नाशे सत्यपि तस्यापि संस्कारो विद्यते । अयं क्रमः पदप्रत्यक्षपर्यन्तं चलति । एवञ्च द्वितीयवर्णश्रवणकाले संस्कारवशादव्यवहितोत्तरत्वसम्बन्धेन प्रथमवर्णवत्त्वं स्मर्यते तृतीयवर्णप्रत्यक्षकाले च उपस्थितो यः स्वाव्यवहितोत्तरत्वसम्बन्धेन वर्णविशिष्टो वर्णः तद्विशिष्टत्वं तेनैव संबन्धेन तृतीयादिवर्णेषु गृह्यते । एवं रीत्या पदज्ञानं भवति । तेन च शाब्दबोधः । एवञ्च पूर्वपूर्ववर्णानुभवजन्यसंस्कारविशिष्टचरमवर्णानुभव एव वर्णगोचरां स्मृतिं जनयतीति बोध्यम् । नैयायिकोऽयं पक्षो यद् यथोत्पन्नाः वीचिः वीच्यन्तरमुत्पादयन्तीं तडागान्तं याति एवामेवोत्पन्नः एकः शब्दोऽपि स्वसमानाकारमेव शब्दमुत्पादयन् पदप्रत्यक्ष पर्यन्तं जनयन्ति । तत्र वीचिर्वीच्यन्तरमुत्पाद्य नश्यति वर्णस्तु तिष्ठत्येवेति उभयोर्भेद इति बोध्यम् । एतेषां वैयाकरणरीत्या एतेषां निराकरणम् - प्रथमपक्षे दोषमुद्भाव्यते- नष्टविद्यमानेषु वर्णेषु प्रत्यक्षविषयकेण इदंशब्देन अयं पूर्वोऽयं पर' इति अभिलापासंभवेन अव्यवहितोत्तरत्व-सम्बन्धस्य वक्तुमशक्यत्वात् । द्वितीयपक्षे दोषः - शब्दजशब्दन्यायेन यद्यपि पदप्रत्यक्षोपपादनं सम्भवति तथापि तत्पदं न विद्यमानम् । एवञ्च तस्मिन् शक्त्याश्रयताया ज्ञानस्यानुपपत्तिः स्पष्टैव । यदि अविद्यमानेऽपि पदे वृत्याश्रयतया स्वीक्रियते तदा नष्टो घटो जलवानित्याकारज्ञानस्यापि प्रमात्वापत्तिः । इत्यादयः । पूर्वोक्तरीत्या पदस्यासिद्धतया तस्य वृत्याश्रयत्वासम्भवे स्फोटस्य स्वीकरण-मावश्यकम् । स च स्फोटः वैयाकरणमते स्फोटस्यैव वाचकत्वम् ।

स्फोटश्च स्फुटति प्रकाशते अर्थः अस्मादिति स्फोटः अर्थवाचकः शब्दः । स च स्फोटः अष्टविधः - 1. वर्णस्फोटः 2. पदस्फोटः 3. वाक्यस्फोटः 4. अखण्डपदस्फोटः 5. अखण्डव्याक्यस्फोटः 6. वर्णजातिस्फोटः 7. पदजातिस्फोटः 8. वाक्यजातिस्फोटश्चेति । तत्र स्फोट एक एव शब्दात्मकब्रह्मरूपः । स च वर्णादिरुपव्यञ्जकभेदात् तत्तत्सञ्ज्ञां लभते । एतेषु स्फोटेषु मध्ये वाक्यस्फोटस्यैव मुख्यवाचकत्वम् , अत एवोक्तं भर्तृहरिणा - **वाक्यस्फोटोऽति निष्कर्षे तिष्ठतीति मतस्थितिः** [2] । अन्ये स्फोटाः शास्त्रीयकार्यनिर्वाहकाः । कल्पितान्वयव्यतिरेकाभ्यां कल्पितार्थवन्त एव । तत्र वाक्येषु पदकल्पना पदेषु प्रकृतिप्रत्ययादिकल्पनेति प्रकृतिस्फोटप्रत्ययस्फोटावेव वर्णस्फोटशब्देनोच्यते । वर्णस्फोटस्य सखण्डाखण्डभेदेन द्वैविध्यं तु न, सुबन्ततिङन्ततदादिभिन्नस्य वाक्यभिन्नस्य च प्रकृतिप्रत्ययसमुदायरूपस्य प्रकृतिरूपस्य प्रत्ययरूपस्य चैकवर्णमात्र-वर्णस्फोटघटकवर्णशब्देन ग्रहणात् । तदवयवानां चार्थाप्रत्यायकतयाऽर्थप्रत्यायकस्यैव खण्डस्य सखण्डपदस्फोटपदेन ग्रहणात् सखण्डवर्णस्फोटानुक्तिरित्याशय:।

तथा च वर्णपदबोध्यचरमवर्णाभिव्यक्तस्फोटेन यत्र बोध:, तत्रैव वर्णस्फोट-पदव्यवहार्यत्वम्। एवं सुबन्ततिङन्ततदादि घटकान्त्यवर्णाभि व्यक्तस्फोटेनार्थप्रतीतौ पद-स्फोट इति व्यवहार:। सुबन्ततिङन्तपदजन्य बोधपूर्वकचरमवर्णाभिव्यक्तस्फोटस्य बोध-कत्वे वाक्यस्फोट इति व्यवह्रियते। प्रकृतिप्रत्ययजन्यबोधाभावे सति पदस्फोटेन बोधे-ऽखण्डपदस्फोट:। यथा-'मणिनूपुरादि', 'व: न:' इत्यादि च। पदजन्यबोधाभावे सति वाक्यस्फोटेन बोधेऽखण्डवाक्यस्फोट:। यथा व्याकरणज्ञानशून्यानां वाक्यतो बोधे वाक्यम्। वर्णपदवाक्यगतजातिव्यङ्ग्यस्फोटैर्बोधे क्रमशोवर्णजातिस्फोट:, पदजातिस्फोट:, वाक्यजातिस्फोट इत्युच्यते इत्युक्तम् ।

आद्यावधि प्रचलितानामष्टानां स्फोटानां स्वरूपं विचार्यते। तत्र वर्णस्फोटस्यो-दाहरणं 'पचति' इत्येतद्घटकपच्प्रकृतिव्यङ्ग्य: 'ति' इति प्रत्ययव्यङ्ग्य: स्फोटो वर्णस्फोट:। तार्किâकाणां मते यच्छक्तंâ पदमिति तद्व्यङ्ग्यस्फोटस्यैव शाब्दिकनये वर्णस्फोटशब्देन व्यवहार:। न हि शब्दरहित: य: कोऽपि जन: कुत्रापि व्यवहारं प्रवर्तयितुं शक्नâोति सर्वस्याऽपि व्यवहारस्य शब्दमूलकत्वात्।

पूर्वजन्मीयशब्दभावनया शब्दज्ञानहीनस्य बालस्यापि तत्तत्कर्मणि प्रवृत्तिर्भवति। अत: प्राणिनां सर्वमपि ज्ञानं शब्दायत्तमेवेति निश्चीयते। सर्वेऽप्यर्था नामधेयान्विता एव प्रकाशन्ते। प्रतीयमानाश्चार्था नामधेयसामानाधिकरण्येनैव प्रतीयन्ते। यथा- गौरित्युच्यमाने पदमपि गौ; अर्थोऽपि गौ:, एतेन नाम्ना सामानाधिकरण्यमर्थानां निश्चीयते।

सर्वमपि ज्ञानमुत्पद्यमानं समुल्लिखितशब्दकमेव भवतीति शब्दस्य ज्ञानरूपता सिद्धा।

अत एव वाग्व्यवहारेणानुपगृहीतमर्थरूपमसता वस्तुना तुल्यं भवति।

अत्यन्तमसच्च शशविषाणादिकमपि यदा वाचा समुत्थाप्यमानं भवति तदा मुख्यसत्तायुक्तमिवावभासते। समस्तचैतन्यक्रियायां नियततया वागभिसम्बन्धोऽवश्यं भवति। वाण्येव सर्वान् तत्तत्कार्येषु प्रेरयति। शब्द एव अविद्यापरवश: सन् जीव इति तदवशश्च परमात्मेत्युच्यते। तस्मात् शब्दस्य अपभ्रंशविवेकेन ज्ञानं परमात्मप्राप्त्युपाय: तस्य शब्दस्य प्रवृत्तितत्त्वज्ञो यो जन: स ब्रह्मण: सायुज्यमेति। सैषा व्याकरणस्मृतिर्वेदमूलत्वादेव प्रमाणभूता। वेदार्थनिर्णयाय तु मीमांसाशास्त्रमभ्युपेयम्। तर्कोऽपि शब्दशक्तिसापेक्ष एव।

**भेदत्रयात्मक: शब्द:**

एवमभिव्यक्ते शब्दे तदवस्थाभेदानाश्रित्य आचार्यो भर्तृहरि:शब्दस्य भेदत्रयं स्वीकरोति। तत्र भेदत्रये पश्यन्ती, मध्यमा, वैखरी चेति। तत्र वर्णपदावयवविभागरहितानवयवा क्रमशून्या ज्योतिर्मयी सूक्ष्मा वागेव पश्यन्तीरूपेत्युच्यते। पश्यन्तीरूपेयं वाणी परापरभेदेन द्विविधा भवति। परा तु सूक्ष्मा मूलाधारस्थिता स्वरूपज्योतिरुच्यते। अपरा प्रतिसंहृतवर्णक्रमा विभागशून्या वाक्। अत्र वाच्यवाचकविभागो नास्ति। अत एवोक्तम् भर्तृहरिणा–

**अविभागा तु पश्यन्ती सर्वत: संवृतक्रमा । स्वरूपज्योतिरेवान्त: परा वागनपायिनी ॥**

एतस्यामेव पश्यन्त्यामिमं परापरभेदमाश्रित्य महावैयाकरणेन नागेशभट्टेन वाचोऽवस्थाचतुष्टयं स्वीकृतम्। परन्तु परापरभेदरूपविभागो नैव वास्तविकः। यथा सगुणनिर्गुणभेदेन परापरभेदेन च वर्णितेऽपि परमात्मन्येकत्वं नैव विरुध्यते, तथैव परापरभेदेन वर्णितायामपि पश्यन्त्यामभेदो न विरुद्ध्यते। वस्तुतः पश्यन्तीरूपा वागेकापि कदाचित्पराख्येण क्वचिच्चापराख्येण संज्ञिता भवतीत्युक्त्वा भर्तृहरिणा परापश्यन्त्योः पश्यन्त्यामेवान्तर्भावः कृतः। उक्तञ्चैत् सोमानन्देन–

**इत्याहुस्ते परं ब्रह्म यदनादि तथाक्षरम् । तदक्षरं शब्दरूपं सा पश्यन्ती परा हि वाक्** ॥ 3

मध्यमा त्वन्तव्यापारमयी वर्त्तते। मध्यमाया उपादानं बुद्धिरेव। मध्यमायाः सञ्चालनं सूक्ष्मा प्राणवृत्तिः करोति। यद्यपि तस्यां न कश्चन क्रमो भवति बुद्धेरेकत्वात्, तस्याभेदाच्च। तथापि क्रमसहिता इव प्रतिभासते। यथोक्तं हरिणा- मध्यमा त्वन्तः-सन्निवेशिनी परिगृहीतक्रमेव बुद्धिमात्रोपादाना, सा तु सूक्ष्मप्राणवृत्यनुगता क्रमसंहाराभावेऽपि व्यक्तक्रमपरिग्रहा इवेत्यादि। वाचोऽवस्थात्रये स्वीकृते मध्यमामवस्थामभिव्यञ्जयन्तीयमवस्था मध्यमेत्युच्यते। अस्या उपादानं केवलं बुद्धिवृत्तिरेव, न त्वेषा वैखरीवत्प्राणादिवृत्तिमपेक्षते। उक्तञ्च हरिणा– **केवलं बुद्ध्युपादाना क्रमरूपानुपातिनी । प्राणवृत्तिमतिक्रम्य मध्यमा वाक् प्रवर्तते ॥** 4

परश्रोत्रसंवेद्याभिव्यक्तशब्दप्रतीकात्मिका च वाणी वैखरीत्युच्यते। यथोक्तम्–

**स्थानेषु विवृते वायौ कृतवर्णपरिग्रहाः । वैखरी वाक् प्रयोक्तॄणां प्राणवृत्तिनिबन्धना** ॥ 5

वैखरीयञ्च द्विविधा-व्यक्तवर्णरूपा, अव्यक्तवर्णरूपा चेति। व्यक्तवर्णरूपापि साधुशब्दरूपापभ्रंशशब्दरूपा चेति भेदेन द्विविधा। साधुशब्दरूपा च व्याकरणादिभिः सुसंस्कृता प्रथमा, अन्या चासाधुशब्दरूपा। अव्यक्तवर्णमयी तु यानध्वनौ दुन्दुभ्यादिध्वनौ च प्रसिद्धा। यद्यपि दुन्दुभ्यादिध्वनयः शब्दभेदरूपेण गृह्यन्ते न तु वाग्भेदरूपेण तथाप्यर्थवादमाश्रित्य वाग्भेदे सङ्गृहिताः।

वस्तुतो वैखरीयं वागुच्चारणसम्बद्धा शरीरसम्बद्धा वोच्यते। विखरः शरीरम्, तत्र भवा वैखरीति। एवमेव व्याकरणशास्त्रदृष्ट्यापि वैखर्या एवाधिकं महत्त्वं प्रतीयते। वाचो बाह्यस्वरूपसाधनेऽपि वैखर्येव प्रधानम्। यथा चोक्तं – येयं वैखरी वाक् तस्यां संस्क्रियमाणायां सर्वा एव संस्कृता भवन्ति तज्जातीयकत्वाद् इति। अतः स्पष्टतया वक्तुं शक्यते यद् ध्वनिरेवात्र वैखरीपदेन प्रोच्यत इति।

## ध्वनिस्फोटयोः परिचयः

भर्तृहरिराद्धान्ते वस्तुतः श्रूयमाणं वाक्तत्वं शब्दतत्वञ्चैकमेव। तथापि लोकेऽर्थबोधनेच्छया प्रयुज्यमानः शब्दो वैखर्याख्यः स्फोटस्य व्यञ्जको ध्वनिरूपश्च। अपरश्चाविभक्तक्रमरूपः स्फोटाख्यश्चेति कृत्वा शब्दस्य द्विधा भेदः प्रदर्श्यते। यथा–

**द्वावुपादानशब्देषु शब्दौ वेदविदो विदुः । एको निमित्तं शब्दानामपरोऽर्थे प्रयुज्यते** ॥ 6 इति।

अत्र निमित्तं स्फोटः, अर्थबुभुत्सया प्रयुक्तस्तु वैखर्याख्यो ध्वनिरूप एवेति भावः। यद्यपि 'एको निमित्तं शब्दानामित्युक्त्वा स्फोटवैखर्योः कार्यकारणभावः प्रोक्तः' इत्युक्त्वा भेदवादिनां मते कार्यकारणयोर्भेदो दृश्यते, तथाप्यभिन्ने वस्तुन्यौपाधिकः कार्यकारणभावोऽयं बुद्धिभेदवशात् प्रकल्पित इति सिद्धान्तेऽभेदस्यैव पारमार्थिकत्वं साधयितुं शक्यते। अत एव स्फोटरूपाविभागेनैव ध्वनेर्ग्रहणमिति भर्तृहरिणा प्रतिपादितम्। यथारणिस्थोऽग्निर्दाहकाग्नेः कारणं भवति, परन्तु नैतावतानयोर्भेदः सिद्ध्यति। तथैव बुद्धिस्थोऽभिन्नक्रमरूपः स्फोटः श्रुतिगोचरीभूतानां वैखर्याख्यशब्दानां कारणं भवितुमर्हति। यथोक्तम्–

**आत्मभेदस्तयोः केचिदस्तीत्याहुः पुराणगाः । बुद्धिभेदादभिन्नस्य भेदमेके प्रचक्षते** ॥ 7

**अरणिस्थं यथा ज्योतिः प्रकाशान्तरकारणम् । तद्वच्छब्दोऽपि बुद्धिस्थः श्रुतीनां कारणं पृथक्** ॥ 8

ध्वनिरप्ययं द्विविधः- प्राकृतो वैकृतश्च। प्राकृतः ध्वनिः शब्दब्रह्मणः स्वरूपसाक्षात्करणे कारणम्, वैकृतस्तु केवलं स्थितिं प्रयोजयति, द्रुतविलम्बि-तेत्यादिवृत्तिभेदेन निमित्तं भवति। अयमेव ध्वनिर्भाष्यकारेण शब्दगुणत्वेन स्वीकृतः–स्फोटः शब्दः, ध्वनिः शब्दगुणः इति।

शब्दगुण इत्यस्य शब्दोपकारक इत्यर्थ:। इममेव महाभाष्यकृदभिप्रायमुपस्थापियतुं सङ्ग्रहकृद्वचनमप्युपस्थापितमस्ति हरिणा। तद्यथा–

**शब्दस्य ग्रहणे हेतु: प्राकृतो ध्वनिरिष्यते । स्थितिभेदे निमित्तन्तु वैकृत: प्रतिपद्यते ॥** 9

एवं ध्वनौ श्रुतेऽपि यावच्छब्दतत्त्वस्यावबोधो न भवति तावदर्थबोधो न भवतीति हेतोर्दीपप्रभोदाहरणेन ध्वनेर्भेद: प्रदर्शितोऽस्ति। यथा–

**दूरात् प्रभेव दीपस्य ध्वनिमात्रन्तु लक्ष्यते । घण्टादीनाञ्च शब्देषु व्यक्तो भेद: स दृश्यते ॥** 10

इत्थं द्रव्याभिघातादिभेदेन ह्रस्वदीर्घप्लुतादौ प्रचितोऽपि ध्वनिर्नादस्योपरम उपरतो भवति। ह्रस्वत्वादयो नादवृत्तेरेव विशेषका भवन्ति न तु शब्दतत्त्वस्य। अत एव श्रूयमाणशब्दे स्वल्पे महति वा स्फोटो न भिद्यते। तत्र शब्दग्राहक-ध्वनिसन्तानस्यैव प्रचयापचयौ भवत:, न तु स्फोटात्मकस्य शब्दतत्त्वस्येति हार्दम्। पुरा वितर्विâत:, तदनन्तरं बुद्या तत्तदर्थे निवेशितो विषयविशेष: कण्ठताल्वादिकरणेभ्यो विवृतेन ध्वनिनानुगृहीतो भवति। एवञ्च तादृशध्वन्यनुगृहीत: सन् शब्दोऽभिव्यज्यते। एवं ध्वनेरुपचयापचयाभ्यामर्थबोधनेच्छयाभिव्यक्तस्य शब्दस्य न ह्युपयापचयौ भवत:। तस्य नित्यत्वात्।

एवं नित्येऽखण्डे च शब्दतत्त्वे भेदकल्पना केवलमौपाधिकी न तु वास्तविकी-भवतीति ज्ञेयम्।

## निष्कर्षः

**इत्याहुस्ते परं ब्रह्म यदनादि तथाक्षरम् । तदक्षरं शब्दरूपं सा पश्यन्ती परा हि वाक् ॥**

एषा मध्यमा (मध्यमानादः) अन्तर्व्यापारमयी भवति । मध्यमाया उपादानं बुद्धिरेव। मध्यमाया: सञ्चालनं सूक्ष्मा प्राणवृत्ति: करोति। यद्यपि तस्यां न कश्चन क्रमो भवति बुद्धेरेकत्वात्, तस्याभेदाच्च। तथापि क्रमसहिता इव प्रतिभासते। यथोक्तं हरिणा- मध्यमा त्वन्त:-सन्निवेशिनी परिगृहीतक्रमेव बुद्धिमात्रोपादाना, सा तु सूक्ष्मप्राणवृत्यनुगता क्रमसंहाराभावेऽपि व्यक्तक्रमपरिग्रहा इवेत्यादि। वाचोऽवस्थात्रये स्वीकृते मध्यमामवस्थामभिव्यञ्जयन्तीयमवस्था मध्यमेत्युच्यते। अस्या उपादानं केवलं बुद्धिवृत्तिरेव, न त्वेषा वैखरीवत्प्राणादिवृत्तिमपेक्षते। एषः एव मध्यमानादव्यङ्गः शब्दः एव स्फोटेति निगद्यते

## सन्दर्भग्रन्थसूची

1. वाक्यपदीयम् ब्रह्मकाण्डम् - श्लोकसङ्ख्या - 53
2. परमलघुमञ्जूषा स्फोटप्रकरणम् - भावप्रकाशिका टीका
3. शिवदृष्टिः 3/15, तथा उत्पलाचार्यकृता टीका
4. वाक्यपदीयम्, ब्रह्मकाण्डम् - श्लोकसङ्ख्या - 84
5. वाक्यपदीयम्, ब्रह्मकाण्डम् - श्लोकसङ्ख्या - 165
6. वाक्यपदीयम्, ब्रह्मकाण्डम् - श्लोकसङ्ख्या - 44
7. वाक्यपदीयम्, ब्रह्मकाण्डम् - श्लोकसङ्ख्या - 45
8. वाक्यपदीयम्, ब्रह्मकाण्डम् - श्लोकसङ्ख्या - 46
9. वाक्यपदीयम्, ब्रह्मकाण्डम् - श्लोकसङ्ख्या - 76.
10. वाक्यपदीयम्, ब्रह्मकाण्डम् - श्लोकसङ्ख्या - 104

************

**Volume XXI : January to June – 2023, ISSN 2250-1711**
**Journal of Veda Samskrita Academy [Recognised in the UGC-CARE List]**

# दर्शनप्रसिद्धात्मतत्त्वस्योत्सरूपेण ऋक्संहिताविमर्शः

**Dr. Kalyan Panda**
Assistant Professor
U.G. & P. G. Dept. of Sanskrit
Acharya Brajendra Nath Seal Govt. College
P. O. + P. S. + Dist. : Cooch Behar, West Bengal- 736101
Contact No. : 7003358017 / 8697332052
E-mail : pandakalyan5@gmail.com / kpandacu1986@gmail.com

**सूत्रशब्दाः-** वेदः, जीवात्मा, परमात्मा, दर्शनम् ।

**मूलप्रबन्धः**- मनुष्यः स्वभावतः मननशीलः,मत्वा कर्माणि सीव्यति इति तन्निरुक्तिः । स हि कोऽहं कस्मादहमित्यादिभावनया सततं भावयन् '**आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः**'[1] इति दर्शनबीजमुद्भावितवान् । दर्शनस्यास्य उदय ऋक्संहिता-तोऽजायत। निखिलवैदिकसाहित्यस्य मन्त्रब्राह्मणारण्यकोपनिषदश्चेति स्तरचतुष्टयम्। मन्त्रब्राह्मणयोर्विषयविन्यासो यागयज्ञादिविविध-कर्मतत्त्वसंश्लिष्टः। तत्र ऐहिकपारलौकिकादिविविधसुखलाभाय पन्थान उपदिष्टाः। एवमारण्यकोपनिषत्सु उपलभ्यते परमज्ञान-तत्त्वानामालोचनम्। अतो विद्वत्संसदि प्रचलिता भावनेयं यन्मन्त्रब्राह्मणात्मकं हि वेदस्य कर्मकाण्डं तथा आरण्यकोपनिषदात्मकं हि ज्ञानकाण्डम् ।

अत्रेदमवधेयं यदात्मज्ञानलाभेन मोक्षप्राप्तिः निखिलदर्शनस्य निखिलवेदस्य च चरमं परमं च लक्ष्यम्। तथाहि वैदिककर्मकाण्डानुसारं धर्मार्थकामरूपस्य ऐहिकस्य त्रिवर्गस्य सम्यगनुष्ठानेनापि आत्यन्तिकी दुःखनिवृत्तिर्न भवति, मोक्षश्च नाधिगम्यते पुरुषैः। वैदिककर्मकाण्डात्मकयागयज्ञाद्यनुष्ठानजन्यदेवताप्रीत्या विविधभोग्यवस्तुलाभाय ऐहिकानां स्रक्चन्दनवनितादीष्टविषयाणामाप्तौ यत्ने क्रियमाणे यद्यपि धर्मार्थकामरूपः त्रिवर्गोऽधिगम्यते परं तन्न चिराय भवति । यागयज्ञाद्यात्मकवैदिककर्मकाण्डस्यानुष्ठानरूपपुण्यफलेन यत्स्वर्गादिफलं लभ्यते तत्तु क्षीणे पुण्ये नश्यत्येव । तदुक्तं भगवता श्रीकृष्णेन गीतायां स्वयमेव '**क्षीणे पुण्ये मर्त्यलोकं विशन्ति**'[2] इति। अत आध्यात्मिकाधिदैविकाधिभौतिकरूपत्रिविधदुःखस्यात्यन्तिकनिवृत्तये परमानन्दावाप्तये मोक्षालाभायात्मज्ञानलाभाय वा तत्त्वज्ञानमेव शरणम् । आत्मज्ञानरूपतत्त्वज्ञानेनैव मुक्तिर्लभ्यते । सर्वाण्येव दर्शनानि आत्मज्ञानलाभाय मार्गानुपदिशन्ति । आत्मैव तत्त्वम् । तस्यात्मरूपतत्त्वस्य दर्शनमात्मदर्शनमेव तत्त्वदर्शनम् । यथोक्तमात्मतत्त्वविवेके उदयनाचार्येण '**आत्मैव तत्त्वतो ज्ञेयः**'[3] इति । आत्मज्ञानसाधनेन च आत्मसाक्षात्कार एव सर्वेषामास्तिकदर्शनानां चरमं लक्ष्यमिति हेतोः दार्शनिकप्रस्थानेषु विप्रतिपत्तिर्नावलोक्यते। यथाह पुष्पदन्ताचार्यः शिवमहिम्नःस्तोत्रे-"**रूचीनां वैचित्र्याद् ऋजुकुटिलनानापथजुषाम् । नृणामेको गम्यस्त्वमसि पयसामर्णव इव ॥**"[4]इति। कर्मकाण्डानुशीलनैः ऐहिकपारलौकिकादिसुखोपभोगेन सम्यक्तया धर्मार्थकामादित्रिवर्गसेवायां कृतायामपि ऋषिभिरु-पलब्धमेतद्यद् धर्मार्थकामैः आत्यन्तिकी दुःखनिवृत्तिर्न सम्भवति । अनित्या खलु धर्मार्थकामादयो न नित्यसुखाय कल्पन्ते । परमपुरुषार्थस्तावत् दुःखस्यैकान्तिकी निवृत्तिः शाश्वतसुखप्राप्तिश्च । दुःखस्य मूलं तावदज्ञानम्। आलोकेन यथा तमसोऽपनोदनं सम्भवति तथैव ज्ञानेनाज्ञानं विनश्यति । उच्यते च गीतायां - '**ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुतेऽर्जुन!**'[5] इति। पुनश्चोदितं गीतायां 'न हि ज्ञानेन सदृशं पवित्रमिह विद्यते' इति। यथार्थज्ञानश्चात्मज्ञानम्। आत्मज्ञानमेव परा विद्या। उपनिषदि तदाम्नातम् - '**अथ परा यया तदक्षरमधिगम्यते**'[6] इति। पराविद्यया एवामृतत्त्वं लभ्यते। आम्नातं केनोपनिषदि - 'विद्यया विन्दतेऽमृतम्' इति। आत्मभिन्नानां सर्वेषामवस्तुत्वादात्मज्ञानमेव तत्त्वज्ञानम् । ऋग्वेदीयमन्त्रभागे राराज्यमानेषु सूक्तेषु आत्मज्ञानस्वरूपप्रकाशिका दार्शनिकभावना प्राधान्येन दरीदृश्यते नासदीये पुरुषे देवीसूक्ते हिरण्यगर्भे इन्द्रे रात्रौ अघमर्षणसूक्ते च । न केवलमेतानि सूक्तानि अपि तु सन्ति

ऋक्संहितायामनेकानि सूक्तानि नैका मन्त्राश्च यत्र दर्शनशास्त्राणां मुख्यप्रतिपाद्यविषयीभूतानि सृष्टिकार्यकारणज्ञाप्यज्ञापकप्रमाप्रमाण-बन्धमोक्षादितत्त्वानि बीजाकारेण निहितानि । तान्येव सूक्तानि, तानेव मन्त्रान् मन्त्रांशान् वा आश्रित्य वेदोत्तरकालीने काले कपिलगौतमादिदार्शनिकैः स्वेषां दार्शनिकग्रन्थेषु दार्शनिकतत्त्वानि विविधभावेनालोचितानि । तस्मादेव कपिलादिदार्शनिकैः स्वेषां दार्शनिकग्रन्थेषु प्रतिपाद्यतत्त्वानां दार्ढ्याय ज्ञानाकरं वेदं तथा वैदिकमन्त्रप्रतिपाद्यतत्त्वमेव परमप्रमाणरूपेणोल्लिख्यन्ते प्रसङ्गाच्च वैदिकमन्त्रो मन्त्रांशो वा उद्ध्रियन्ते स्थाने स्थाने । समेषां दार्शनिकानां विचारे इतरवेदापेक्षया ऋग्वेदस्य मन्त्रभागेष्वेव सर्वविधदार्शनिकतत्त्वानां बीजं निहितमिति सिद्धान्तः।

**आत्मचिन्ता ऋग्वेदसंहितायाम्**

अत्यते गम्यते ज्ञायते इति विग्रहेण 'अत गतौ' इति गत्यर्थकाद् अततेर्धातोः 'सातिभ्यां मनिन्-मनिणौ' इत्युणादिसूत्रेण मनिन्-प्रत्यये आत्मन्-शब्दो निष्पन्नः। बह्वर्थकोऽयमात्मशब्दः। तथाहि भैमीभणितिः – **"आत्मा पुंसि स्वभावे च प्रयत्नमनसोरपि । धृतावपि मनीषायां शरीरब्रह्मणोरपि ॥"**[7] इति । दर्शनशास्त्रे तु अहंपदप्रतिपन्नवस्तुनि आत्मशब्दव्यवहारो लक्ष्यते । अत एव अहंपदप्रत्ययविभेदाद् आत्मतत्त्वमपि दर्शनशास्त्रभेदेन वैविध्योपपन्नम् । तेन शरीरमित्येके, इन्द्रियमित्यपरे, विज्ञानमिति चापरे, केचन च कर्तात्मेति वदन्ति इत्येवं बहुविवादसंवृतस्वरूपोऽयमात्मा दुर्ज्ञेयो ज्ञानामज्ञानां का कथा ? एक एवात्मा ब्रह्म वा ऋक्संहितायां बहुरूपेण बहुभावेन बहुनाम्ना च कीर्तितः। तथात्वे एकेश्वरवाद एकदेववादो वा ऋक्संहिताया दैवतचिन्ताया अनन्यमनुपममसाधारणञ्च वैशिष्ट्यमिति ध्येयम् । इयमेव एकेश्वरवादधारणा परवर्तिनि काले आत्मरूपेण ब्रह्मरूपेण वा पर्यवस्यन् महीरूहतां गतारण्यकेषूपनिषत्सु भारतीयदर्शनप्रस्थानेषु च । वस्तुतस्तु एकस्यैव देवस्य धारणा ऋक्संहितायां बहुदेववादान्तरेव निहितम् । अत्र दृष्टान्ततया प्रथममण्डलान्तर्गतस्य अस्यवामीयसूक्तस्य मन्त्रोऽयं सविशेषमुल्लेखार्हः - **"इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान् । एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः ॥ "**[8] इति । अपि चाम्नायते ऋग्वेदेऽष्टममण्डले - **"एक एवाग्निर्बहुधा समिद्ध एकः सूर्यो विश्वमनुप्रसूतः। एकैवोषा सर्वमिदं विभाति एकं वा इदं वि बभूव सर्वम् ॥"**[9] इति। अस्यैव मन्त्रस्य प्रतिध्वनिर्दृश्यते कठोपनिषदि 'एकस्तथा सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बहिश्च ' इति। आत्मा ब्रह्म वा महान् देवः, यस्य भासा सर्वमिदं प्रतिभासते - 'तस्य भासा सर्वमिदं विभाति' इति श्रुतेः। माहाभाग्यान्महैश्वर्याद्वा एकदेवतात्मा परमात्मा एकेश्वरो वा विविधप्रकारैः नामादिभिः विवर्तितः सन् अग्नीन्द्रवरुणपूषादिरूपेण स्तूयत इति दार्शनिकपराकाष्ठैव प्रकाशिता तृतीयमण्डलान्तर्गते विश्वदेवसूक्ते । तत्र प्रतिमन्त्रान्ते 'महद्देवानामसुरस्त्वमेकम्' इति ध्रुवपदेनात्मनो ब्रह्मणो वा सर्वदेवसमाविर्भावो जात इति विवक्षितार्थः दर्शनेषु बह्वालोचितमेकदेववादमेकेश्वरवादं वा आत्मतत्त्वञ्च व्यञ्जयतीत्यत्र नास्ति संशयलेशः। प्रथममण्डलादारभ्य दशममण्डलावधि कर्मकाण्डविषयवर्णनोपेतमपि मध्ये मध्ये मन्त्रेषु क्षणप्रभायाः सौदामिन्या इव आत्मचिन्तायाः प्रकाशः सुतरां समुल्लेखार्हः।

**विहङ्गमदृष्ट्या** तदुल्लिखितुमुत्सहे -**"द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वन्त्यनश्नन्नन्यो अभि चाकशीति ॥"**[10] - इतीयमृग् ऋग्वेदस्य प्रथममण्डलान्तर्गते चतुःषष्ट्यधिकशततमे सूक्ते विलसति। अत्राशयो हि पक्षिणौ एकमेव वृक्षमधिवसतः। तयोः पक्षिणोः एकं स्वादु पिप्पलफलमश्नाति, इतरश्च नाशन् अवलोकयति केवलम् । सायणभगवत्पादमते मन्त्रोऽयं रूपकः। तन्मते पक्षिणोः मध्ये एको जीवात्मरूपो यस्तु पिप्पलफलरूपं कर्मफलमश्नाति । अपरश्च सदैव विलोकनात्मकः परमात्मरूपो विहगो यस्तु साक्षिस्वरूपः। एकस्मिन् जीवदेहरूपे वृक्षे जीवात्मपरमात्मरूपयोः विहगयोः सहावस्थानम् । अतस्तयोः सखात्वमिति ज्ञेयम् । तदुच्यते सायणाचार्येण भाष्ये **"अत्र लौकिकपक्षिद्वयदृष्टान्तेन जीवपरमात्मनौ स्तूयेते । अस्यायमर्थः। एक एव शरीरे पूर्णः पुरुषः परमात्मा निमग्नो निगूढः सन् स्वयमीश्वरोऽप्यनीश्वरत्वबुद्ध्या मुह्यमानो मूढः सन् शोचति । संसारेऽहं कर्ता सुखी दुःखीति अनुभवति। यदा तु जुष्टं नित्यतृप्तमन्यं संसारशोकातीतमीशं परमेश्वरं पश्यति स्वानन्यतया साक्षात्करोति ।**

**तदा वीतशोको देहाद्यतिरिक्तः स्वस्वरूपसाक्षात्कारेण गततापत्रयः सन्नस्य महिमानमिति । निरस्तसमस्तौपाधिकस्य परमेश्वरस्य महिमानं सार्वात्म्यसर्वज्ञत्वादिमहिमानमिति । एति । प्राप्नोति । न च तद्भावनाप्तौ तद्भावप्राप्तौ तन्महिमा प्राप्यते। अतस्तद्रूपो भवतीत्यर्थः। तस्माद् वस्तुत एक एव। भेदस्तु मोहकृत इति प्रसिद्धम्। अनुभवदशायां लौकिकबुद्ध्या भेदमभ्युपेत्योच्यते। तयोरन्यो जीवात्मा पिप्पलं कर्मफलं स्वादुभूतमत्ति भुङ्क्ते । तयोरन्यो जीवात्मा पिप्पलं कर्मफलं स्वादुभूतमत्ति भुङ्क्ते । यस्य यदुपार्जितं तत्तस्य स्वादु भवति । अन्यः परमात्मानशन्नाप्तकामत्वेनाभुञ्जानः स्पृहाया अभावात् । आप्तकामस्य का स्पृहेति स्मृतेः। तस्मादवास्तवभेदमुपजीव्य तयोरन्य इत्युक्तम् । वस्तुतस्त्वनीशया शोचति मुह्यमान इत्युक्तत्वादभेद एव। तादृशः परमात्मा स्वात्मन्यध्यस्तं जगत्साक्षित्वेनेक्षते।**"[11] इति।

सांख्ययोगवेदान्तेषु पुरुषतत्त्वस्य वा परब्रह्मणः वा परमात्मनो यत् साक्षिस्वरूपमुद्घाटितं तदेवास्मिन् मन्त्रे बीजाकारेण निहितमिति सायणाचार्यकृतभाष्यादेव स्पष्टं प्रतीतम् । किञ्च जीवात्मनः कर्मफलभोगाधिकारित्वविषये आस्तिकदर्शनेषु यदालोचितं तदेवास्मिन् मन्त्रे सोपमया समुपवर्णितमिति निश्चप्रचमेव वक्तुं शक्यते । आत्मा एको वानेको वेति जिज्ञासा सूक्तेऽस्मिन् प्राप्यते ।तथाहि - **"अचिकित्वाञ्चिकितुषश्चिदत्र कवीन्पृच्छामि विद्मनो न विद्वान्।वि यस्तस्तम्भषन्निमा रजांस्यजस्य रूपे किमपि स्विदेकम् ॥"**[12] इति समाम्नाते मन्त्रे जन्मरहितरूपेण अवस्थितस्य परब्रह्मणः परमात्मनो वा नानाविकारभाजि जगति किम् एकमात्मकमस्तीति प्रश्नः समुत्थापितः। सर्वेषु वस्तुषु एकमेवात्मचैतन्यम् अनुस्यूतमित्येवं दार्शनिकचिन्ता एव मन्त्रे प्रकाशं गतेति सायणाचार्यादिव्याख्याकारणामभिमतम्। तथाहि भाषितं सायणेन मन्त्रभाष्येऽस्मिन् **"तस्याजस्य परब्रह्मणो रूपे नानाविकारभाजि जगति किमपि स्विदेकमेकात्मकमस्तीति प्रश्नः।अविशेषमस्तिनाममात्रमेकरूपमस्तीत्युत्तरविवक्षया प्रश्नः।अस्तीत्येवोपलब्धमिति श्रुतेः ॥** "[13] इति।

दर्शनेषु जीवदेहस्य विनाशशीलत्वं मरणधर्मिता वा प्रतिपादिता । परन्तु नित्यस्य जीवात्मनो देहिनो वा मरणं विनाशो वा नास्ति । तथाहि श्रीमद्भगवद्गीतायामुच्यते भगवता श्रीकृष्णेन- **"वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति नरोऽपराणि । तथा शरीराणि विहाय जीर्णान्यन्यानि संयाति नवानि देही ॥** "[14] इति। अयमेव भावः वर्णितः अस्यवामीयसूक्तस्यास्मिन्मन्त्रे – **"अनच्छये तुरगातु जीवमेजद्ध्रुवं मध्य आपत्स्यानाम् । जीवो मृतस्य चरति स्वधाभिरमर्त्यो मर्त्येना सयोनिः ॥** "[15] इति । मन्त्रस्यास्य भाष्ये सायणाचार्येणोक्तम् 'अनेन देहस्यासारता जीवस्य नित्यत्वं च प्रतिपाद्यत' इति। मन्त्राशयो हि प्राणापगमनादनन्तरं जीवदेहस्य विनाशे सत्यपि अमर्त्यः अमरणस्वभावः देहसम्बन्धी जीवो न विनश्यति । गीतायाञ्चोक्तं - **"न जायते म्रियते वा कदाचिन्नायं भूत्वा भविता वा न भूयः। अजो नित्यःशाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे ॥"** इति। द्वितीयो मन्त्रो हि अस्यवामीयसूक्तस्य- **"अपाङ् प्राङेति स्वधया गृभीतोऽमर्त्यो मर्त्येना सयोनिः। ता शश्वन्ता विषूचीना वियन्ता न्यन्यं चिकयुर्न नि चिकयुरन्यम् ॥"**[16] इति। अमरधर्मः आत्मा मरणधर्मणा देहेनावतिष्ठते । सैव सूक्ष्मशरीरोपाधिकः सन्नानाविधकर्म कृत्वा तद्भोगाय जीवसंज्ञां लब्ध्वा स्थूलसूक्ष्मोभयात्मकशरीरत्रयेण सम्बन्धो भूत्वा लोकान्तरेषु सञ्चरति । इदमेव दार्शनिकमात्मतत्त्वं वर्णितमस्मिन् मन्त्रे । अपि च देहव्यतिरिक्तस्यात्मनः सत्ताकं कैश्चिन्न स्वीकृतम्, केचन वा कर्तृभोक्तृत्वोपेतो देहातिरिक्त आत्मास्ति इति स्वीकुर्वन्ति इत्यादिविषयोऽपि मन्त्रेऽस्मिन् सूपपादित इति वेदविदां राद्धान्तः। "अपाङ् प्राङेति ---" इत्यादिमन्त्रे देहात्मविषये वर्णितम् । तयोरन्यस्य जीवात्मनः पारमार्थिकं रूपमस्ति, तदेवोच्यते परस्मिन् मन्त्रे – **"ऋचो अक्षरे परमे व्योमन्यस्मिन् देवा अधि विश्वे निषेदुः यस्तन्न वेद किमृचा करिष्यति य इत्तद्विदुस्त इमे समासते ॥"**[17] इति । अक्षरशब्दस्य ब्रह्मवाचकत्वमुपनिषत्सु वेदान्तादिदर्शनेषु च प्रतिपादितम् । मन्त्रेऽस्मिन्नपि तदेव समासतः प्रतिपादितमिति सायणाचार्यादिभाष्यकारा व्याख्यातवन्तः। किञ्च सायणभाष्यात् प्रतीयते यदक्षरस्वरूपज्ञानमेव ब्रह्मज्ञानमात्मज्ञानं वा । अक्षर-स्वरूपज्ञानाभावे कृतेऽपि यज्ञकर्मनिचये मुक्तिर्न भवितेति निष्कर्षः सुतरां लभ्यते । अक्षरस्वरूपज्ञानोपलब्ध्या छिन्ने कर्मबन्धने जीवस्य मुक्तिर्भवितेति दार्शनिकचिन्ता मन्त्रेऽस्मिन् प्रकाशिता ।

**जीवात्मसूक्तम्**-- ऋग्वेदीयदशममण्डलस्य सप्तसप्तत्यधिकशततमं सूक्तं दार्शनिकचिन्तासमृद्धसूक्तरूपेण प्रसिद्धिं गतम्। तत्र सूक्तविषयो जीवात्मा, देवता माया, ऋषिश्च पतङ्गनामात्मकः। आम्नातश्च ऋषिणा – **"पतङ्गमक्तमसुरस्य मायया हृदा पश्यन्ति मनसा विपश्चितः। समुद्रे अन्तःकवयो विचक्षते मरीचीनां पदमिच्छन्ति वेधसः ॥ पतङ्गो वाचं मनसा बिभर्ति तां गन्धर्वोऽवदद्गर्भे अन्तः । तां द्योतमानां स्वर्यं मनीषामृतस्य पदे कवयो निपान्ति ॥ अपश्यं गोपामनिपद्यमानसा च परा च पथिभिश्चरन्तम् । स सध्रीचीः स विषूचीर्वसान आ रवीवर्ति भुवनेष्वन्तः ॥** "[18] इति। सरलार्थस्त्वेवं विद्वांसः निरुद्धेन मनसा पतङ्गमेकं ददृशुः। असुरस्य माया तं पतङ्गमाक्रमति स्म। समुद्रमध्ये एवेदं संघटितम्। तस्माद् विद्वांसो वेधसो मरीचीनां धामसु गन्तुमिष्टवन्तः। स पतङ्गो मनसा वाचं बिभर्ति। तां वाचं गर्भमध्ये देवता अवदत्। सैव वाक् दिव्या। विद्वांसस्तामेव वाचमध्यापनेन पितरम् ऋतस्य स्थाने रक्षन्ति। सर्वदा उच्चैर्गच्छति। न कदापि नीचैः पतति। एवम्बिधो अस्ति कश्चिद् देवो यस्तु नानामार्गेऽपि विचरति। क्वचित् सः अनेकं वसानं युगपत् परिधत्ते, क्वचिद्वा पृथक् पृथक् परिधत्ते। इत्थं स देवो विश्वसंसारेऽस्मिन् वारं वारमावर्तते। स हि देवो सूर्यो वा आदित्यो वेति याज्ञिकानां मतम्। सायणाचार्यादिभाष्यकाराणां मते अत्र जीवात्मपरमात्मनोरभिन्नत्वं रूपकेणात्र वर्णितम्। आत्मदेवो हि सूक्तेऽस्मिन् स्तूयते। तस्माद् दार्शनिकदृष्ट्या सूक्तस्यास्य गुरुत्वं गरीयः।

**हंसवती ऋक्**- ऋग्वेदस्य चतुर्थमण्डलान्तर्गतस्य चत्वारिंशत्तमे सूक्ते विद्यमाना ऋग्हंसवतीति नाम्ना प्रसिद्धिमगात् । अनया ऋचा परब्रह्मैव प्रतिपद्यते। अविद्यात्मककार्यजातस्य हरणात् परब्रह्मैवात्र मन्त्रे हंसपदेन विवक्षितः। स मन्त्रो हि –

**"हंसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत्। नृषद्वरसदृतसद् व्योमसदब्जा गोजा ऋतजाद्रिजा ऋतम् ॥"**[19] इति । मन्त्रस्यास्य सरलार्थो हि हंसो दीप्ते द्युलोके अवतिष्ठति। तस्मात् स हंसः शुचिषदिति कथ्यते। वसुः सर्वस्य वासयिता, वायुरन्तरीक्षे अवस्थानाद् अन्तरीक्षसत्। होता देवानाम् आह्वाता होमनिष्पादको वा यज्ञवेद्यां गार्हपत्यादिरूपेण वर्तमानाद् वेदिषदिति कथ्यते। अतिथिवत् सर्वदा पूज्यः अग्निः पाकादिसाधनत्वेन दुरोणे गृहे स्थितत्वाद् दुरोणसत्। परमात्मा परब्रह्म वा मनुष्येषु चैतन्यरूपेण सीदतीति नृषत्। किञ्च सैव परमात्मा परब्रह्म वा वरणीये मण्डले सीदतीति वरसदादित्यः। अपि च स ऋते सत्ये ब्रह्मणि यज्ञे वा सीदतीति ऋतसदग्निरूपः। एवं स परमात्मा व्योम्नि अन्तरीक्षे सीदतीति व्योमसद्वायुरूपः। स एव परमात्मा मन्त्रेऽस्मिन् आदित्यरूपेण प्रतिपन्नः। तेनासौ आदित्यः अब्जा उदकेषु जातः, गोजा गोषु रश्मिषु जातः, ऋतजा सत्यजातः, अद्रिजा अद्रौ उदयाचले जातश्च। किञ्चासौ आदित्य उदकेषु विद्युद्रूपेण वा वाडवरूपेण वा जातः। आदित्यस्य उक्तरूपत्वं "हंसः शुचिषद्" इत्यादिना ऐतरेयब्राह्मणे समाम्नातम्। भाष्यकारस्य सायणाचार्यस्य मते आदित्यमध्ये हिरण्मयः पुरुषरूपो यो मण्डलाभिमानो देवोऽस्ति, यश्च सर्वप्राणिनां चित्तरूपेण स्थितः परमात्मा अस्ति, यश्च सर्वोपाधिरहितः परमात्मा परब्रह्म विद्यते, तत् सर्वमेकमेवेति अनेन मन्त्रेण प्रतिपादितम्। । स एवादित्यः सद्रूपेण अधिष्ठितमास्ते ऋतरूपेण जागतिकं कार्यजातं नियमयन्नास्ते, बृहद्रूपेण वा भूमारूपेण च सर्वं वस्तुजातं स्वायत्तीकृत्य विराजतेतराम्। तस्मात् स एव सत्यस्वरूप ऋतस्वरूपो वा परब्रह्म परमात्मेति मन्त्रस्यास्य द्योतितोऽर्थः। श्वेताश्वेतरोपनिषदि वर्णितं यत् त्रिभुवनस्य एक एव हंसः परमात्मा विद्यते। स एव जलपरिणामेऽस्मिन् देहे अग्निरूपेण वर्तमानः। तस्य स्वरूपे उपलब्धे सति साधको मृत्युं तरति। परमपदाप्तौ नान्यः पन्था विद्यते। अतः "आत्मानं विद्धि" इति श्रुतिवाक्यमेवास्माकं शरणं मुक्तौ मोक्षाय वेति सुसङ्गतम्। तथाहि आम्नातं श्वेताश्वेतरोपनिषदि – **"एको हंसो भुवनस्यास्य मध्ये स एवाग्निः सलिले सन्निविष्टः। तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय ॥"**[20] इति। आत्मज्ञानं ब्रह्मज्ञानं वा जीवस्य जननमरणचक्रपतितदुःखनिवृत्तिहेतुतया व्यपदिष्टो वेदपरवर्ति- समयोद्भूतदर्शनेषु । परन्तु ज्ञातव्यं यद् ऋग्वेदस्य प्रथममण्डलान्तर्गतस्यास्यवामीयसूक्तस्य जननमरणदुःखपरिहाराय आत्मा ज्ञातव्या इति निर्देशयन्नाह ऋषिः दीर्घतमा – **"य ईं चकार न सो अस्य वेद य ईं ददर्श दिरुगिन्नु तस्मात् । स मातुर्योना परिवीतो अन्तर्बहुप्रज निर्ऋतिमा विवेश ॥"**इति । मन्त्रस्यास्य व्याख्यायां सायणाचार्येण परिष्कृतम् **"अत्र गर्भवासक्लेशपूर्वकजननप्रतिपादनेन तत्परिहारायात्मा ज्ञातव्या इत्यर्थात् प्रतिपाद्यते"**

**इति।**[21] इति। आत्मज्ञानेन ब्रह्मज्ञानेन वा भेदबुद्धिरपास्यते। अज्ञानवशादविवेकवशाद्वा पुरुषेषु भेदबुद्धिरुपचर्यते । मायामयत्वादस्मिन् जगति पुरुषः माययाक्तः सन्नयं निजः परो वेति चिन्तामाश्रयति । अपगते अज्ञाने नित्यशुद्धबुद्धमुक्तस्वभावः पुरुषः सच्चिदानन्दपरमात्मस्वरूपो भवतीति यत्तत्त्वमुपनिषत्सु अद्वैतवेदान्तादिषु आस्तिकदर्शनेषु च पल्लवितं तत्तु अस्यवामीयसूक्ते मन्त्रद्वये एवाम्नातम् । किञ्चात्मज्ञानस्य दुर्लभत्वमपि तत्र प्रकटितम् । तत्र प्रथमो मन्त्रो हि – **"न वि जानामि यदि वेदमस्मि निण्यः संनद्धो मनसा चरामि । यदा मागन्प्रथमजा ऋतस्यादिद्वाचो अश्नुवे भागमस्याः ॥"**[22] इति। केचन वेदभाष्यकाराः 'ऋचो अक्षरे....' इत्यादिमन्त्रे अक्षरशब्देन ॐकारं प्रणवं वा निर्दिशन्ति । प्रणवस्य सर्ववेदसारत्वं ब्राह्मणे श्रुयते । तथाहि ऐतरेयब्राह्मणे आम्नायते **'तान्वेदानभ्यतपत्तेभ्योऽभितप्तेभ्यस्त्रयो वर्णा अजायन्ताकार उकारो मकार इति तानेकधा समभरत् । तदेतदोमिति ।'**[23] इति। न हि प्रणवादधिकं किञ्चिन्मन्त्रजातमस्ति त्रिकालातीतस्य ब्रह्मणः प्रतिपादिकत्वात् । तथाह्याम्नायते कठोपनिषदि 'ओमित्येकाक्षरं ब्रह्म' इति । तैत्तिरीयारण्यके चाम्नातं **'यच्चान्यत्त्रिकालातीतं तदप्योंकार एव ओमिति ब्रह्म'**[24] इति। वेदैः प्रणवस्य स्थानप्रतिनिधिभावः सम्बन्धः। य ऋचोऽधीते इत्याद्युपक्रम्य यः प्रणवमधीते स सर्वमधीते। तथा च श्रुतिः **'ओमिति प्रतिपद्यत एतद्वै यजुःस्त्रैयीं विद्यां प्रत्येषा वागेतत् परक्षरम्'**[25] इति। प्रणवस्य सर्वमन्त्रान्मकत्वान्मन्त्रेषु सर्वदेवतानां निवासात् सर्वदेवनिवासत्वं सुतरामेव संगतम् । किञ्च ब्रह्मणि सर्वदेवानां निवासात्, ब्रह्मणश्च प्रणवाक्षराधिष्ठानत्वाच्च तज्ज्ञानेन सर्वं ज्ञातं भवेन्मुक्तिश्चोपलभ्यत इति वेदविदां दार्शनिकानाञ्च विचारः स्वारसिक एवेति नात्र सन्देहावसरः। इति शिवम् ।

**पादटिप्पण्यः**

1. बृहदारण्यकोपनिषत्, तृतीयकाण्डम्
2. श्रीमद्भगवद्गीता (९.२१)
3. आत्मतत्त्वविवेकः
4. शिवमहिम्नःस्तोत्रम्, ५
5. श्रीमद्भगवद्गीता (४.३७)
6. बृहदारण्यकोपनिषत्
7. भैमीव्याख्या
8. ऋग्वेदसंहिता (१.१६४.४६)
9. ऋग्वेदसंहिता (८.५८.२)
10. ऋग्वेदसंहिता (१.१६४.२०)
11. ऋक्संहिता, सायणभाष्यम्, (१.१६४.२०)
12. ऋग्वेदसंहिता (१.१६४.८)
13. ऋक्संहिता, सायणभाष्यम्, (१.१६४.२०)
14. श्रीमद्भगवद्गीता, २
16. ऋग्वेदसंहिता (१.१६४.३०)
17. ऋक्संहिता, (१.१६४.२)
18. ऋग्वेदसंहिता (१.१६४.३)
19. ऋक्संहिता (१०.१७७.१-३)
20. ऋक्संहिता (४.४४.१)
21. श्वेताश्वेतरोपनिषत्
22. ऋक्संहिता, सायणभाष्यम्
23. आस्यवामीयसूक्तम्, (१.१६४.३७)
24. ऐतरेयब्राह्मणम्, ५.३२
25. तैत्तिरीयारण्यकम् , ७.८
26. तैत्तिरीयारण्यकम्, २.११

## परिशीलिता ग्रन्थानुक्रमाः

1. ईशाद्यष्टोत्तरशतोपनिषदः(शङ्करभाष्यसहिताः), रमाशङ्करपाण्डेयसम्पादिताः, प्रकाशकः मोतिलाल-वनारसी-दास, पुनर्मुद्रणसंस्करण- 2007, दिल्ली ।

2. उदयनाचार्यः, आत्मतत्त्वविवेकः, गङ्गानाथ-झा-सम्पादितः, भारतीयविद्याप्रकाशनम्, दिल्ली, संस्करणम्- 1997 ।

3. ऋग्वेदसंहिता(खण्डचतुष्टयात्मिका), श्रीमत्सायणाचार्यविरचितमाधवीयवेदार्थप्रकाशसहिता, सम्पादकः- जर्मन्देशोत्पन्न इंलेण्डदेशवास्तव्यः श्रीमन्मोक्षमुलर्भट्टः, प्रकाशकः- ड. सी. गिरि, राष्टियसंस्कृतसंस्थानम्, भारतीयसंस्करणम् 2006, नवदेहली, मुद्रकः- चौखम्बा-संस्कृत-सीरिज्-अफिस, वाराणसी, उ.प्र.।

4. श्रीमद्भगवद्गीता, स्वामि-रामसुखदासः(सम्पा.), गीताप्रेस, गोरक्षपुरम्, उ.प. 2002.

5. An introduction of Indian philosophy- Satish Chandra Chatterjee & Dhirendramohan Dutta, Calcutta, University of Calcutta, 1984 (Reprint).

**********************

Volume XXI : January to June – 2023, ISSN 2250-1711
Journal of Veda Samskrita Academy [Recognised in the UGC-CARE List]

# समासेन रघुवंशस्य महाकाव्यत्वसमीक्षणम्

**Debajyoti Manna,**
Ph. D. Research Scholar,
Ramakrishna Mission Vidyamandira,
Belur Math, Howrah, West Bengal- 711202
Contact No. : 6291039183
Email id : debajyoti.rkmv@gmail.com

**उपोद्घातः**

कविकर्म काव्यमिति सुप्रसिद्धम् एव। सुकुमारबुद्धीनां तथाल्पधीनामपि जनानां काव्यादेव सुखाच्चतुर्वर्गफलप्राप्तिर्भवति परमानन्दजनकत्वात्। अपि चोच्यते तत्र भामहप्रणीते काव्यालंकारे श्लोकत्वेन-

**"धर्मार्थकाममोक्षेषु वैचक्षण्यं कलासु च ।**

**करोति कीर्तिं प्रीतिञ्च साधुकाव्यनिषेवणम्"** ॥[1]

दृश्यश्रव्यभेदेन काव्यं द्विधा विभक्तं। दृश्यकाव्यं ह्यभिनययोग्यम्। श्रव्यकाव्यं तु केवलश्रवणयोग्यम्। श्रव्यकाव्यश्रवणेनैव सहृदयानां मनसि आनन्दो जायते। श्रव्यकाव्यमपि गद्यपद्यभेदेन द्वैविध्यं धत्ते। श्रव्यकाव्यस्य गद्यभागेषु महाकाव्यमान्यतम्यं भजते। साहित्यदर्पणकारनये महाकाव्यस्य आख्यानभागो हि सर्गशब्दोपस्थापिताध्यायैः विन्यस्तो भवेत्। समासेन रघुवंशस्य महाकाव्यत्वविचारः काव्यतत्त्वदिशा आलोच्यतेऽत्र।

- **आरम्भक्रिया**

इष्टसिद्ध्यर्थं महाकाव्यस्य शुभारम्भो भवति मङ्गलाचरणेन। वस्तुतस्तु महाकाव्यस्यादौ नमस्कारात्मकम्, आशीर्वादात्मकं, विषयवस्तुनिर्देशात्मकं वा भवितुमर्हति।

**"सर्गबन्धो महाकाव्यमुच्यते तस्य लक्षणम् ।**

**आशीर्नमस्क्रियावस्तुनिर्देशो वापि तन्मुखम्"** ॥[2]

रघुवंशमहाकाव्ये पार्वतीपरमेश्वरवन्दनात्मकंमङ्गलाचरणं संलक्ष्यते। यतो हि कविरत्र जगतः पितरौ मनसि प्रणम्य काव्यमिदं सम्पादयन्नस्ति।

**"वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये ।**

**जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ"** ॥[3]

- **नायकनिरूपणम्**

महाकविभिः इतिहासपुराणादिषु प्रख्यातं वृत्तमवलम्ब्य सज्जनपुरुषाणां चरितादिकमवलम्ब्य वा महाकाव्यं विरच्यते।

**"इतिहासकथोद्भूतमितरद्द्वा सदाश्रयम्"**[4]

महाकाव्यस्य नायको भवति धीरोदात्तः।धीरोदात्तलक्षणमुदीरितं विश्वानाथेन तदीये साहित्यदर्पणाभिधेये ग्रन्थे

**"अविकत्थनः क्षमावानतिगम्भीरो महासत्त्वः ।**

**स्थेयान्निगूढमानो धीरोदात्तो दृढव्रतः कथितः"**।।[5]

देवतुल्यमानवः, सद्वंशजातः, क्षत्रियोऽथवा वंशस्य एकाधिको नृपो महाकाव्यषु नायको भवतुमर्हति। तथाहि प्रोच्यते

**"सद्वंशः क्षत्रियो वापि धीरोदात्तगुणान्वितः ।**

**एकवंशभवा भूपाः कुलजा बहवोऽपि वा"।।**[6]

रघुवंशस्य नायकाः एकवंशजाः नैके क्षत्रियाः भवन्तीति। अत्रापि महाकाव्यस्य यथोचितं नायकलक्षणं संगच्छते।

- **वर्णनीयविषयाः**

न केवलं नायकनायिकयोः काहिनी वर्णनेन महाकाव्यस्योपयोगित्वं सिद्धं भवति। अतो महाकाव्यस्य परिणतिलाभाय आनुषङ्गिका विषया अपि वर्णनीयाः।

**"सन्ध्यासूर्येन्दुरजनीप्रदोषध्वान्तवासराः ।**

**प्रातर्मध्याह्नमृगयाशैलर्तुवनसागराः ॥**

**संगविप्रलम्भौ च मुनिस्वर्गपुराध्वराः ।**

**रणप्रयाणोपयममन्त्रपुत्रोदयादयः" ॥**[7]

तृतीयसर्गे पुत्रोदयः, चतुर्थसर्गे सेनायाः प्रयाणं, पञ्चमसर्गे प्रातःकालः, सप्तमसर्गे रणः उपयमः, नवमसर्गे मृगया, त्रयोदशसर्गे समुद्रस्य वर्णनं, षोडशसर्गे ऋतुः, अन्तिमसर्गे संभोगः एते महाकाव्योचितविषयाः विभिन्ने सर्गेषु समुपलभ्यन्ते।

- **सर्गसंख्याविचारः**

साहित्यदर्पणकारनये महाकाव्यस्याख्यानभागो हि सर्गशब्दोपस्थापिताध्यायैः विन्यस्तो भवेत। तदुक्तं सर्गबन्धो महाकाव्यम् इति। महाकाव्ये अष्टाधिकाः सर्गाः स्युः। तथाहि भणितं- नातिस्वल्पा नातिदीर्घाः सर्गा अष्टाधिका इह इति। ईशानसंहितायां स्पष्टीक्रयते

**"अष्टसर्गान्न तु न्यूनं त्रिंशत्सर्गाच्च नाधिकम् ।**

**नात्यन्तविस्तरः सर्गस्त्रिंशतो वा न चोनता।।"**[8] इति।

अतो न रामायणादावतिव्याप्तिः। प्रत्येकं सर्गः एकेनैव छन्दसो विरचितो भवेत्। अपि च प्रत्येकं सर्गस्यान्तिमे भिन्नवृत्तयुक्ताः श्लोकाः स्युः। किन्तु सर्गवैचित्त्यसम्पादनाय नानावृत्तव्यवहार न दोषावहः।

**सर्गनामकरणविधानम्**

महाकाव्यस्य नामकरणविषये दर्पणकृता निगदितमस्ति

**"कवेर्वृत्तस्य वा नाम्ना नायकस्येतरस्य वा ।**

**नामास्य सर्गोपादेयकथया सर्गनाम तु"।।**[9]

अतः कवेर्नामानुसारं महाकाव्यस्य नामकरणं क्रियते। यथा भट्टिकाव्यमिति। नायकनामानुसृतं नामकरकणं विद्यते नैषधीयचरितमहाकाव्यादिषु। तद्वदत्रापि रघुवंशीयवृत्तान्तानामुपजीव्यत्वादस्य महाकाव्यस्य नाम रघुवंशम्।अस्य महाकाव्य सर्गाः भवन्त्यत्र यथाक्रमंवसिष्ठाश्रमाभिगमनं, नन्दिनीवरप्रदानं, रघुराज्याभिषेकः, रघुदिग्विजयः, अजस्वयंवराभिगमनं, स्वयंवरवर्णनं, अजपाणिग्रहणं, अजविलापः, मृगयावर्णनं, रामावतारः, सीताविवाहवर्णनं, रावणवधः, दण्डकाप्रत्यागमनं, सीतापरित्यागः, श्रीरामस्वर्गारोहणः, कुमुद्वतीपरिणयः, अतिथिवर्णनं, वंशानुक्रमः, अग्निवर्णश्रृङ्गारः इति।

➢ **रसविमर्शः**

**"शृङ्गारवीरशान्तानामेकोऽङ्गी रस इष्यते"**[10] इति महाकाव्यस्य रसविषये साहित्यदर्पणकारस्याभिप्रायः। शृङ्गारवीरशान्तरसेषु कश्चिदेक एव रसऽङ्गीरसरूपेण स्वीकार्यः। तस्याङ्गीरसस्योत्कर्षवृद्ध्यर्थमन्ये सर्वेऽपि रसाः उपकारकाः भवन्ति। रघुवंशेऽस्मिन् महाकाव्ये प्रधानभूतो रसस्तु शृङ्गारः पुनश्च वीरकरुणरसावपि संलक्ष्येते।

➢ **उपसंहृतिः**

दण्डी प्रतिपादयति यत् महाकाव्यलक्षणभूतापेक्षितेषु विषयेषु सर्वेषामेव युगपदवस्थानमनीवार्यं नास्तीति। केषांञ्चन प्रतिपादनीयानां विषयाणामनुपस्थितावपि महाकाव्यं न दुष्यति अपि तु सहृदयहृदयमामोदयति सततम्।स्पष्टीक्रियते च दण्डिना विरचिते काव्यादर्शाख्ये सुप्रसिद्धे ग्रन्थे

**"न्यूनमप्यत्र यैः कश्चिदङ्गैः काव्यं न दुष्यति ।**
**यद्युपात्तेषु सम्पत्तिराराधयति तद्विदः"।।**[11]

**तथ्यसूत्राणि**

१. काव्यालंकारः(1/2)

२. काव्यादर्शः(1/14)

३. रघुवंशम्(1/1)

४. अग्निपुराणम् (337/25)

५. साहित्यदर्पणः(3/32)

६. साहित्यदर्पणः(6/316)

७. साहित्यदर्पणः (6/322,323)

८. ईशानसंहिता

९. साहित्यदर्पणः (6/324,325)

१०. साहित्यदर्पणः (6/317)

११. काव्यादर्शः (1/20)

**सहायकग्रन्थाः**

१. साहित्यदर्पणः, विश्वनाथाचार्यः,सम्पादकः-शेषराजशर्मा रेग्मी, काशीहिन्दूविश्वविद्यालयः, वाराणासी

२. साहित्यदर्पणः,विश्वनाथाचार्यः,सम्पादकः-आचार्यः कृष्णमोहनशास्त्री, चौखाम्भासंस्कृतसंस्थानम्

३. काव्यादर्शः, दण्डी, सम्पादकः-पण्डितरङ्गाचार्यशास्त्री, प्राच्यविद्यासंशोधनमन्दिरम्

४. काव्यालंकारः, भामहः, सम्पादकः-देवेन्द्रनाथशर्मा, विहारराष्ट्रभाषापरिषत्

५. अग्निपुराणम्, सम्पादकः-आचार्यः शिवप्रसादद्विवेदी, चौखाम्भासंस्कृतप्रतिष्ठानम्

६. रघुवंशम्, कालिदासः, सम्पादकः-धारदत्तमिश्रः,जनार्दनपाण्डेयः,मोतीलालवेनारसीदासः

************

Volume XXI : January to June – 2023, ISSN 2250-1711
Journal of Veda Samskrita Academy [Recognised in the UGC-CARE List]

# शब्दपदवाच्यत्वेन साधु-असाधु-शब्दयोः भेदः महत्वञ्च

**Shibpada Mandal**
Research Scholar
Department of Sanskrit (Vyakarana)
Shree Jagannatjh Sanskrit University, Shri Vihar, Puri-752003, Odisha
Contact No. : 9062182935
E-mail : shibpadamandal14@gmail.com

**सारसंक्षेपः-**

पाणिनीयसूत्राणां प्रामाणिक प्रवक्ता पतञ्जलिः व्याकरणशास्त्रस्य साक्षात्प्रयोजनं शब्दानुशासनमभ्यधात्। पतञ्जलिमते लौकिकानां वैदिकानाञ्च शब्दानामनुशासकं व्याकरणं विद्यते । लौकिकेभ्यः शब्देभ्यो वैदिकानां शब्दानां धान्यं प्रख्यापयितुं उभयोः पार्थवयेन निर्देशः पतञ्जलिनाऽभ्युपगतः । वैदिकानामपि शब्दानां लौकिकत्वेनोभयोः कश्चिद् भेदो नास्ति । कैयटमते वैदिकशब्दानामपभ्रंशशब्दानाञ्च परस्पर साम्याऽतिशयाद् वैदिकशब्देभ्योऽपभ्रंशशब्दपरिहारः प्रयत्नसाध्यो भवति । लौकिक संस्कृतस्याऽपभ्रंशस्य च परस्पर वैषम्येण तयोः भेदाऽवगतिः सारल्येनाऽपि जायते । एतावन्माचमेव वैदिक लौकिक शब्दाना परस्परं भेदः । अतोऽन्यो वैदिकलौकिकयोः शब्दयोः नास्ति कचिद् भेद । उबटः अनन्तदेव शबरस्वामी च वैदिकशब्दानां लोकिकशब्दानां च ऐक्यमेव समाचष्ट । साधुभिरेव शब्दर्भाषितव्यं ना साधुभिरिति पाणिनीयानामाचार्याणां सिधान्तौ विद्यते। पाणिनेराचार्यस्य अष्टाध्यायी शिष्टत्वज्ञानार्थां स्वीक्रियते अष्टाध्याय्या निर्णीतसाधुशब्दानां प्रयोक्तरो हि नाम शिष्टाः सन्ति । साधुशब्दप्रयोगः समाजे शिष्टत्वख्यापनेन व्यावहारिकदृष्ट्याऽभ्युदयकारीभवति । एकः पूर्वपरयोः इति सूत्रं भाषमाण पतञ्जलिः साधुशब्दप्रयोगस्य सर्वफलप्रदायकत्वं मयुते । तन्मते हि शास्त्रव्युत्पादनयाऽनुशंसितः साधुत्वेन ज्ञातः शिक्षोत्रीत्या च प्रयुक्तः शब्दः शिष्ट प्रयोगकोशव्याकरणाधनुमापकत्वेन इह जन्मनि जन्मान्तरे - वाऽभ्युदयकारी भवति । एवं हि तत्रत्यं भाष्यमः – " एकः शब्दः सम्यग् ज्ञातः शास्त्रान्वितः सुप्रयुक्तः स्वर्गे लोके च कामधुग्भवति । व्याकरणशास्त्रस्य शब्दाऽनुशासनमिति नामकरणेनैव एतत् स्वीकुरूते यदपभ्रंशो हि व्याकरणस्य विषयो नास्तीति । " असाधुशब्देभ्यो विविच्य साधुशब्दा ज्ञायन्त इति नागेशस्याभिप्रायो विद्यते । व्याकरणेन मनस्तापस्यज्ञायन्त इति नागेशस्याभिप्रायो विद्यते । साध्वसाधुशब्दप्रयोगे सामानायामर्थावगतावपि साधभिरेव भाषितव्यं नाऽसक्तु ' साधुभिरिवेति ' पाणिनीयैराचार्यैः प्रतिपाद्यते ।

**शब्दसूचक-** वैदिक , लौकिक , साधुः, गाव्यादयः , साधवः , शब्दाः , पुञ्जीभूतः , संस्कारसम्पन्नः ।

**शब्दपदवाच्यत्वेन साधु-असाधु-शब्दयोः भेदः महत्वञ्च**

पाणिनीयसूत्राणां प्रामाणिक प्रवक्ता पतञ्जलिः व्याकरणशास्त्रस्य साक्षात्प्रयोजनं शब्दानुशासनमभ्यधात्।[1] काकवाशितादीनामव्यकावाचामपि शब्दपदवाच्यत्वेन तेषामपि अनुशासनप्रसङ्गेन पतञ्जलिः स्वयमवे अनुशासनीयस्य शब्दस्य सुस्पष्टं स्वरूपं निर्दिदेश। पतञ्जलिमते लौकिकानां वैदिकानाञ्च शब्दानामनुशासकं व्याकरणं विद्यते ।[2] लौकिकेभ्यः शब्देभ्यो वैदिकानां शब्दानां धान्यं प्रख्यापयितुं उभयोः पार्थवयेन निर्देशः पतञ्जलिनाऽभ्युपगतः । वैदिकानामपि शब्दानां लौकिकत्वेनोभयोः कश्चिद् भेदो नास्ति । कैयटमते वैदिकशब्दानामपभ्रंशशब्दानाञ्च परस्पर साम्याऽतिशयाद् वैदिकशब्देभ्योऽपभ्रंशशब्दपरिहारः प्रयत्नसाध्यो भवति । लौकिक संस्कृतस्याऽपभ्रंशस्य च परस्पर वैषम्येण तयोः भेदाऽवगतिः सारल्येनाऽपि जायते । एतावन्माचमेव वैदिक लौकिक शब्दाना परस्परं भेदः । अतोऽन्यो वैदिकलौकिकयोः शब्दयोः नास्ति कचिद् भेद ।[3] उबटः[4] अनन्तदेव शबरस्वामी च वैदिकशब्दानां लोकिकशब्दानां च ऐक्यमेव समाचष्ट । एतावति स्पष्टीकरणे सत्यपि अनुशासनीयस्य साधुशब्दस्य स्वरूपावगतिः सुस्पष्टं न भवति।

यतो हि लोके सास्नादिमत्प्रवृत्ति प्रख्यापयितुं गवादयो गाव्यादयश्च सममेव प्रयुज्यमाना अवलोक्यन्ते । अर्थाऽवगतिरपि उभये समानैव दृश्यते। बहूनाञ्च कृते गाव्यादिभिरेव साधीयानर्थसम्प्रत्ययो जायते। किम् उभयेऽपि अनुशासनीया अन्यतरो वेति जिज्ञासायां पतञ्जलिः साधिकारमभ्यघात् यद् गवादय एव शब्दा अनुशासनविषया विद्यन्ते, न गाव्यादयः। यतो गवादीनां शब्दानामनुशासन लाघवमावहति । पतञ्जलिराचार्यः " गवादयः साधवः शब्दाः " इति स्वीकुरूते, गाव्यादयश्चा साधव इति ।[5]

तत्र साधवो गवादयोऽनादयः शब्दाः सन्ति, गाव्यादयश्च आदिमन्तोऽपभ्रंशा इति शब्दतत्वविदः स्वीकुर्वते । साधुशब्दं प्रयुयुक्षमाणो जनः करणावैकल्यादिना पराधाद् जपशब्दं प्रयुक्तेइति जैमिनिराचार्यो मनुते । महता खलु यत्नेन शब्दा उच्चार्यन्ते। शब्दभावनासंस्कृतः प्राणवायुः नाभेरूत्थितः उरसि विस्तीर्णः कण्ठे पुञ्जीभूतः ऊर्ध्वं गच्छन् मूर्द्धानमाहत्य आस्यावयवेषु परावृत्तौ वाक्रे विचरन् विविधान् वर्णान् जनयति। तत्र करणवैकल्यादिना वक्तृत्वादौवैल्याद् वक्तासाधुशब्देप्रयोक्तव्ये असाधुशब्दोच्चारणेन अपराध्यति। यथा कश्चित् चक्षुष्मान् शुष्के पतितुमिच्छुः अपि कर्दमे पतति। एवञ्चाऽपराधात् प्रवृत्तत्वेन गाव्यादिशब्दानामऽपभ्रंशानां सादित्वं कार्यत्वं वा सिद्धयति । गवादिसाधुंशब्दानान्तु अविच्छिन्नपारम्पर्यत्वेन अनादित्वम्। अपभ्रंशं परिभाषमाणस्य भर्तृहरेराचार्यस्यापि एवं विधमेवापभ्रंश-स्वरूपमभिमतं दृश्यते । तन्मते हि सास्नादिमदर्था भिधानाय गीरिति साधुशब्दे प्रयुयुक्षिते तदर्थे निविशमानो यः संस्कारहीनो गाव्यादिशब्द् उच्चार्यते सोऽपभ्रंशः।तत्र संस्कारसम्पन्नः शब्दः साधु, संस्कारहीन अपभ्रंशश्चाऽसाधुः स्वीक्रियते । साधूनां शब्दानां ज्ञापनार्थम् अपभ्रंशानाञ्च शब्दानां व्यावृत्यर्थं लक्षणमारव्धव्यम् ।

व्याडिनाऽपभ्रंशस्य प्रकृति साधुशब्द प्रतिपादितः । संस्कृतशब्दानांप्राकृतशब्देभ्यः प्राग्भवत्वम्, प्राकृतशब्दानां वा संस्कृतशब्देभ्यः प्राग्भवत्वमिति विषये आचार्याणां परस्परं वैमत्यं दृश्यते । केचन प्राकृतशब्दानामेव प्राग्भवत्वं प्रतिपादयन्ति प्रकृतो भवः प्राकृत इति व्युत्पत्तेः । साधु शब्दानां प्रकृतित्वात् खलु प्राकृत इति नामकरणमिति तेषामाशयः प्रतीयते । केश्चित् संस्कृतशब्दानामेव प्राग्भवत्वं स्वीकृत्य प्राकृतानां शब्दानां मूलं संस्कृताः शब्दा इति व्याचक्षते । महाभाष्यं व्याचक्षाणो भर्तृहरिराचार्याणां वैमत्यमिदं निरदिशत् ।

' **शब्दप्रकृतिरपभ्रंशः** 'इति व्याडिमतं व्याचक्षाणः स्वोपज्ञकारः सर्वस्याऽप्यपभ्रंशस्य साधुशब्द एव प्रकृतिरिति प्रत्यपादयत् । ' अपभ्रंशः शब्दः स्वतन्त्रो प्रकृतिर्वान भवति । प्रसिद्धिवशाद् रूढितापधमानाः केचनाऽपभ्रंशाः स्वातन्त्र्यम् अधिगच्छन्ति । तेषामपि अपभ्रंशानां कालान्तरे आलस्याद् वक्तृत्वदौर्बल्याद्वा कश्चिदन्योऽपभ्रंशविशेषो जायते । एतादृशानाम् अनुनिष्पादिनाम्अपभ्रंशानां प्रकृतिः ततः प्राक्तनोऽपभ्रंशो भवति । एवञ्च सामयिक एवाऽयं साध्वसाधुप्रविवेको भवति । कस्यापि शब्दस्य रूपमात्रप्रतिबद्धमसाधुत्वं वक्तु न शक्यते । ' साम्प्रतं केश्चिद् असाधुत्वे नाभिमतानां शब्दानां कालान्तरे साधुत्वं सम्भवि , साधुत्वेन वाऽभिमतानां शब्दानाम् असाधुत्वमपि सम्भवि । अतोऽत्र विषये नहिकश्चिद् वाचनिको नियमः सम्भवति । सर्वथा स्वाभाविकः सामयिकंश्च खल्वेष विषयः । येष्वभिधातृषु अपभ्रंशा एवं प्रसिद्धिम् आगताः तैरपभ्रंशैरेवार्थो भिधीयते , अवबोध्यते च ।

भाषातत्त्वदृष्ट्या शब्दस्य द्वे रूपे भवतः । तत्र १. शब्दतत्त्वम् , २. साधुत्वञ्च । तत्र शब्दत्वान्वितं शब्दरूपन्तु श्रवणेन्द्रियेण गृह्यते , परं शब्दगतं साधुत्वं व्याकरणेनैव अवगन्तुं शक्यते । अन्यथाऽनधीतव्याकरणाः सामान्या लौकिका अपि साधुत्वं प्रतिपद्येरन् । " असन्देहार्थञ्चाऽध्येयं व्याकरणम् " इति पस्पशायां ब्रुवाणस्य पतञ्जलेरयमेवाऽभिप्रयो विद्यते । यद्याकरणेन खलु शब्दस्याऽसंदिग्धं साधुत्वमगवतं भवति भर्तृहरिरपि एतच्छब्दान्तरेण इत्थं प्रस्तावीत् –

**साधुत्वस्वरूपम् अर्थप्रवृत्तितत्त्वानां शब्दा एव निबन्धनम् । तत्त्वाऽवबोधः शब्दानां नास्ति व्याकरणादृते ॥** [6]

**साधुत्वस्वरूपम्-**

शब्दगतं द्विविधं हि साधुत्वं सम्भवति । तत्र 1. **श्रुतिलक्षणं साधुत्वम्** । 2. **प्रक्रियालक्षणञ्च साधुत्वम्** इति ।

1.**श्रुतिलक्षणं साधुत्वम्-** श्रवणजन्यो ज्ञातसाधुभावोऽनपभ्रंशः शब्दः श्रुतिलक्षणः साधुः । तत्र प्रकृतिप्रत्यय विभागावगमेन साधुत्वं

व्यवस्थाप्यते । गौरिति प्रयोगे सुप्रत्ययविधौ गौ शब्दस्य साधुत्वं विद्यते । प्रत्ययविधौ उद्देश्यत्वेन यस्याऽनपभ्रंशशब्दस्वरूपस्य प्रकृतित्वं कल्प्यते तस्य श्रुतिलक्षणं साधुत्व ज्ञेयम् । यथा खलु नागेशो व्याकरणव्यङ्ग्यमर्थविशिष्टं जातिविशेषं हि साधुत्वं मनुते ।[7] व्याकरणव्यङ्ग्यः शब्दागतजातिविशेषः शिष्टत्वादिख्यापनरूपपुण्यजने न साधनं हि नाम साधुत्वमिति नागेशस्याऽभिप्रायः । एव विधानां विचारकाणां मते गावीत्याद्यपभ्रंशशब्दोपरं विभक्तिः न प्रयुज्यते । प्रत्ययविधीं उद्देश्यभूतप्रकृतेः साधुत्व स्वीकारात् । अन्ये शाब्दिकाः अपभ्रंशानामपिप्रत्ययविधो उद्देश्यत्वं[8] मन्वते । अत एव पस्पशायां पतञ्जलिः " **यर्वाणः तर्वाणः** "इति णान्तादपभ्रंशाद् विभक्तिं प्रायुन्ते । अर्थवच्छब्दस्वरूपात् प्रातिपादकसञ्ज्ञकात् सुबुत्पचिरिति स्वीकारे च न काचिच्छास्त्रीया अर्थवत्प्रतीतेः । व्यवस्था न्याहन्यते । गावीत्यादिभिरपभ्रंशशब्दस्वरूपैरपि अर्थवत्प्रतीतेः।

**2.प्रक्रियालक्षणं साधुत्वम्-** प्रक्रियालक्षणं साधुत्वमनुशासनपद्धितिसापेक्ष भवति। अनुशासन -दृष्टया परिनिष्ठिता हि शब्दाः साधव उच्यन्ते । परिनिष्ठिताः शब्दाः न प्रयुज्यन्ते । कस्यचिन्नित्यस्य शब्दशास्त्रीयस्य नियमस्य विधेर्वा अनुद्देश्यभूत एव शब्दः परिनिष्ठितो[9] भवति तस्यैव च प्रयोगः शाब्दिकैरभिमतः । विधिशास्त्रेण प्रयोगसाधनपुर सर साधुत्वव्यवस्था प्रयोगनियमच व्याकरणे विधीयते । तथा हि " आद् गुणः " इति विधिशाखेण अवर्णादचि पूर्वपरयोः गुणो भवति , गुणवान् शब्दः साधुः भवति , स न प्रयोक्तव्य इति निर्णयते । न ह्यक्तगुण संस्कारः शब्दः साधुर्भवति न वा च स प्रयोक्तव्यः तस्यापरिनिष्ठितत्वेनासाधुत्वात् । यथा- " शब्देन ' इत्ययमेव साधुः शब्दः अयमेव च प्रयोक्तव्यः , न तु " शब्द+ टा " आहोस्वित शब्द +इन इत्यपि । अत्र इनविधेः गुणविधेच प्रवृत्तिसत्वेनाऽपरिनिष्ठितत्वात् ।

कश्चिदपि शाब्दः शब्दस्वरूपतः साधुरसापुर्वा न भवति । प्रवृत्तिनिमित्तविशेष संलक्ष्यैव शब्दाना साधुत्वमसाधुत्वञ्च व्यवस्थापयितुं शक्यते । यः शब्दो लोके यस्यप्रवृत्तिनिमित्तस्य तदात्रयस्य वा व्यभिव्यक्तये जनैः स्वीकृतः स एव शब्दः तदतिरिक्त प्रवृत्तिनिमित्त प्रयुक्त असाधुर्भवति । गोणीशब्दस्य आवपनरूपे पात्रविशेषेर्थे साधुत्व प्रागचर्चयम् । तसयैव शब्दस्य सास्नालाङ्गूलादिमदर्थे साधुत्वमपि शाब्दिकैः स्वीकृतम् । इत्थमेव अस्वादिशब्दोऽपि शेयः । एवञ्चप्रवृत्तिनिमित्तविभेद एव शब्दानां साधुत्वाऽसाधुत्वयोर्निर्णायकौ भवति । अस्व गोण्यादयः शब्दाः साधवो विषयान्तरे , निमित्तभेदात्सर्वत्र साधुत्वञ्च व्यवस्थितम् ।

" **नाऽनृतं वदेदिति** "र शिष्टानामाचारपद्धतिः स्मर्यते । द्विविधं खल्वबृतं भवतीति मिश्रोपनामा २ हरदत्तः स्वीचकार । तत्र-

1. अर्थाऽनृतम्
2. शब्दाऽनृतञ्चेति विद्यते ।

प्रतिपतृत्वदौर्बल्याद यदाऽर्थस्याऽन्यथा प्रतिपत्तिर्भवति तदा अर्थाऽनृतं भवति । प्रयोक्तरि प्रतिपत्तिरिचोभयत्रापि च अर्थाऽनृत सम्भवति । यथा कक्षित अवचिज्ञिगभिषु परिधृतवेशो दण्डी पुरुष लक्षणबुद्धया सैन्धवमानये " प्रयुति आहोस्वित् कक्षित् प्रतिपक्षा पदा प्रस्थातुकामेन अश्वबुद्ध्या प्रयुक्तस्य सैन्यशब्दस्य बुद्धि विजानाति तदा अर्थाऽनृत जायते । शब्दस्याऽन्यथोचारणं पाब्दानृतम् उच्यते तत्र साधो शब्द प्रयोक्तव्ये अपगतसंस्कारस्य अपभ्रंशस्य वा साधुशब्दस्योचारण शब्दाऽनृतं भवति । तदत्र ' ना नृतं वदेदिति " ति निषेधवाक्पेन द्विविधमपि अनृत प्रतिषिध्यते अपराधाद्धि असाधुशब्दोचारण - प्रवृत्तिर्जनानामिति । । जैमिनिमतमतः प्रागुपन्यस्तमस्माभिः । यथा अर्थाऽनृत बदती जनस्य प्रत्यवायः स्मर्पते तथा शशब्दाऽनृत वदतोऽपि जनघ्येति निष्कर्ष ।

केवलां सौत्री प्राप्तिमेव संलक्ष्य शब्दानां साधुत्वाऽसाधुत्वे निर्णेतुं न शक्यते । आचार्याणामिष्टिरपि तत्र हेतुर्भवति । अष्टाध्यायी भाषमाणेन पतञ्जलिना एतद् रुचिरमुदाहृतम् । तथा हि एवं हि कश्चिद् वैयाकरण आह- कोऽस्य रथस्य प्रवेता इति ? सूत आह- आयुष्मन्नहमस्य रथस्य प्राजिता इति । वैयाकरण आह - अपशब्द इति । सूत्र आह प्राप्तिज्ञो देवानां प्रियो न त्विष्टिज्ञ दृश्यते एतद्रूपमिति । वैयाकरण आह - आहो खल्वनेन दुरूतेन बाध्यामहे इति सूत आह- न खलु वेनः , सूतः , सुवतेरेव सूतः । यदि सर्वतः कृत्सा प्रयोक्तव्या दुःसूतेनेति

वक्तव्यम् । यदर्थप्रतिपादनाय यस्मिन् शब्दे प्रयोक्तव्ये स्वरवर्णादिदोषात् ततोऽर्थान्तरं प्रतिपादयत् शब्दोपऽशब्दो भवति । स चाऽनिष्टजनक इति शिष्टैः प्रतिषिध्यते

**दुष्टः शब्दः स्वरतो वर्णतो वा मिथ्या प्रयुक्तो न तमर्थमाह । स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतो पराधात् ॥**

**पाणिनीयेव्याकरणेऽसाधुशब्दस्योपेक्षाकारणम्-** पाणिनीयैराचार्यैः साधुशब्देष्विवअसाधुशब्देष्वपि अर्थरोधकता शक्तिः स्वीकृता । कात्यायनः पतञ्जलिश्च शास्त्रं प्रयोगाणां नियामकमात्रं भवतीति प्रत्यपादयत् । अर्थात्यर्थःखलुशब्दः प्रयुज्यते अर्थाऽवगतिश्च क्वचित् केषाञ्चित्कृते साधुशब्दापेक्षया असाधुशब्देरेव सुस्पष्टं भवति । साधु शब्दप्रयोगे वा अर्थाऽवगतो कश्चिद् भेदो न भवति ।

एकञ्चाऽर्थ बोधने उभयोः साध्वसाध्वोः शब्दयोः समाने शक्तत्वे कथमनेन पाणिनीयेन शास्त्रेण साधव एव अनुशिष्यन्ते नाऽसाधवः ?कथं वा साधव एव प्रयोक्तव्या नाऽसाधवः ?इति जनैः स्वभावतो जिज्ञास्यते । अत्रैतत् समाधीयते पाणिनीयैराचार्यैः वेदाङ्गेषु व्याकरणं मुखभूतं परिगणितम् । षड्ङ्गेषु व्याकरणस्य प्राधान्यं प्रतिपाद्यते । " रक्षार्थं वेदानामध्येयं व्याकरणमिति " पतञ्जलिर्व्याचष्ट । पाणिनीयं व्याकरणं शब्दाऽनुशासकं विद्यते । शब्दाश्च वैदिकादारभ्य आसमुद्रघोषणं परिगणिताः । पाणिनीयस्यास्य तन्त्रस्य वेदोपकारकत्वेन, समुद्रघोषणादीनाञ्च वेदाऽनुपयोगित्वेन समुद्रघोषणादयो न व्युत्पाद्यन्ते पाणिनीयेन शब्दशास्त्रेण । अतएवाऽनुशासनीयशब्दक्षेत्र व्यवस्थापयन् पतञ्जलिः " लौकिकानां वैदिकानाञ्चेति " उज्जुघोष । लौकिकेष्वपि शब्देषु अपगतसंस्काराणाम् अपभ्रंशानाञ्च शब्दानां पाणिनीयेऽस्मिन् तन्त्रेऽनुशासनं नाऽभिमतम् , वेदाऽनुपयोगित्वादेव । लौकिकाः शब्दास्तावद् नियतवर्णाऽनुपूर्विका भवन्ति । यथा-

**गामभ्याज शुक्लाम् ,**

**अभ्याज गां शुक्लाम् ,**

**शुक्लां गामभ्याज इत्येवम् ।**

वैदिकाः शब्दास्तु नियतवर्णाऽनुपूर्विका जायन्ते । यथा-

1. **अग्निमीडे पुरोहितम् ।**
2. **इषेत्वोर्जे त्वा ....**
3. **अग्न आ याहि वीतये ।**
4. **शन्नोदेवीरभिष्टये ।**

**देवीवाग् व्यवकीर्णेयमशक्तैरभिधातृभिः । अनित्यदर्शिनां त्वस्मिन् वादे बुद्धिविपर्ययः ।।**[11]

## संदर्भ-सूची


1. अथशब्दाऽनुशासनम् । महाभा. , पस्पशा. ।
2. केषां शब्दानां ? लौकिकानां वैदिकानाञ्च अष्टा. महाभा. पस्पशा. ।
3. वैदिकानां लौकिकत्वेऽपि प्राधान्यख्यापनाय पृथकुपादानम् ।... तेषां तु प्राधान्यं यत्नेनाऽपभ्रंशपरिहारात् । अष्टा. महाभा.पस्पशा. प्र. ।
4. य एव वैदिकास्त एव लौकिकाः त एव तेषामर्थाः वाज. प्रा.१/३/उ.भा.।(द्र. वाज.प्रा., १/३ अ. भा.) द्र.- मीसा.द.१/३/२०शा. भा.
5. एकैकस्य शब्दस्य बहवोपभ्रंशाः । तद्यथा - गौरित्यस्य शब्दस्य गावीगोणीगोतागोपोतलिकादयोपभ्रंशाः । अष्टा. महाभा. अपस्प ।
6. वा. पा. १/१३ ।
7. साधुत्वञ्च व्याकरणव्यङ्ग्योर्थविशिष्टशब्दनिष्ठपुण्यजनकता वच्छेदको जातिविशेषः । वै. सि. ल., मं. शक्तिनि ।

8. नन्वपभ्रंशानां शक्तत्वेऽर्थवत्वादर्थववत्सूत्रेण प्रातिपदिकान्ज्ञापतिः इति चेत्। इष्टापत्तिः। वै. सि. ल. मं. शक्तिनि ।

9. अप्रवृत्तनित्यविध्युद्देश्यता वच्छेखकानाक्रान्तत्वं हि परिनिष्ठि तत्वम्। शब्दर. प्रो. मनो. वै. सि. कौ. स्वरसं।

10. अष्टा. महाभा , पस्पशा. मन्त्रो हीनः............................पा.शि.५२ इत्येतावन्मात्रपा. भेदेन पाणिनीय शिक्षायामपि श्लोकोऽयं पठ्यते। ( ले. )

11. वोपदेव. १/११५

## संदर्भ-ग्रंथ-सूची

1.वाक्यपदीयम्- श्री भर्तृहरि,श्रीकाशीनाथ वासुदेव , अभ्यङ्कर यूनिवार्सिटी आफ पुना, संस्कृत एण्ड प्राकृत सीरीज पूना 1965

2. वैयाकरणसिद्धान्तकौमुदी-श्री भट्टोजिदीक्षि,श्रीमोतीलाल बनारसीदास , वाराणसी 1980

3. वैयाकरण भूषणसार: - श्रीकोण्डभट्टः, चौखम्बा प्रकाशन ,वाराणसी1969

4.वैयाकरणसिद्धान्तलघुमञ्जूषा- श्रीनागेश भट्ट , चौखम्बा प्रकाशन ,वाराणसी1973

5. सिद्धान्तकौमुदी-श्री भट्टोजिदीक्षि, प्रथम संस्करण श्रीगोपालशास्त्रीनेने, चौखम्बा संस्कृत सीरीज आफिस , वाराणसी 1977

6. व्याकरण तत्त्व मञ्जरी- ( प्रथमोभागः ) डॉ. शङ्करजी , झादीनबन्धु ग्रन्थ माला प्रकाशनम्, इसहपुर मधुवनी (विहार) 1986

7 . व्याकरणाशाखेतिहास- लोकमणिदाहालः, भारतीय विद्या प्रकाशन , 1990

8 . प्रौढमनोरमा-श्री भट्टोजिदीक्षि ( स शब्दरत्न बाल प्रकाशिका )-श्री द्वारिकाप्रसाद द्विवेदी,चौखम्बा-सुरभारती प्रकाशन, वाराणसी 1972

************

**Volume XXI : January to June – 2023, ISSN 2250-1711**
**Journal of Veda Samskrita Academy [Recognised in the UGC-CARE List]**

# मन्त्रकोशाध्यायविमर्शः

**V. R. Hariprasad**
Ph. D. Scholar, Vedanta Vibhaga
Karnataka Sanskrit University,
Chamaraja Pete-560018, Bengaluru, Karnataka
Contact No. : 9964144251
E-mail : vrh251@gmail.com

अतः परं प्रवक्ष्यामि मन्त्रं सर्वार्थसिद्धिदम् । येन विज्ञातमात्रेण बन्धपाशद्विमिच्यते ॥१॥

सर्वार्थसिद्धिदं मन्त्रं वदिष्यामि । अस्य मन्त्रस्य विज्ञानेन जन्मबन्धात्मकः दुःखपाशः निवृत्तो भवतीति श्लोकस्य तात्पर्यम् । एतादृशस्य श्लोकस्य श्रवणेन एते प्रश्नाः मनसि जायन्ते – मन्त्रस्य विज्ञानेन पुरुषः बन्धपाशात् विमुक्तो भवति वा ? उत मन्त्रस्य जपः कार्यः ? अध्ययनेन ज्ञानं जायते ? आहोस्वित् तपसा ज्ञानं सिद्ध्यति ? तादृशी शक्तिः मन्त्रे वर्तते चेत् मन्त्रो नाम कः ? इत्यादयः । प्रथमं तावत् मन्त्रो नाम कः इति विवार्यते । मन्त्रो नाम कः इति चेत् – मननात् त्रायते इति मन्त्रः इत्युच्यते । मत्रि–गुप्तभाषणे इति धातोः निष्पन्नमिदं पदं वर्तते । गुप्तं भाषणं नाम अस्माभिः भाषितमन्यैः न श्रोतव्यमित्यर्थः । गुप्तभाषणार्थकात् धातोः निष्पन्नत्वात् मन्त्रोऽपि अन्यैः न श्रोतव्य इत्यर्थः धातुप्रत्यययोः योगादेव सिद्ध्यति । अयञ्च यौगिकः अर्थ इत्यर्थः । व्यवहारे तु यौगिकार्थः उपयुज्यते किमित्यपि संशयः मानसे जायते । एवमेव मन्त्रः सर्वेभ्यः अपि प्रदेयः ? उत न प्रदेयः ? इति कैश्चित् विचारः क्रियते । कैश्चित् वादोऽपि क्रियते । मन्त्रः सर्वेभ्यः अपि न प्रदेयः इति बहवः वादं कुर्वन्ति । यः पुरुषः आचारेण शुद्धः तस्मै एव उपदेशः कर्तव्यः इति । एतादृशेन मन्त्रोपदेशेन स पुरुषः दीक्षितो भवति इति विश्वासः । अन्येषां केषाञ्चित् एवं वादो वर्तते – मन्त्रोपदेशः सर्वेभ्यः अपि कर्तव्यः । तेन मन्त्रेण दीक्षितो भूत्वा सर्वेभ्यः पापेभ्यः निर्मुक्तो भवति । अत्र अस्माकं वादादपि सम्प्रदायः एव मुख्यः । प्राचीनकाले वैदिकसम्प्रदाये अर्हेभ्यः पुरुषेभ्यः अपि मन्त्राः नोपदिष्टाः इति बहुभिः जनैः खेदः अभिव्यज्यते । मन्त्राः न केवलमेकस्य पुरुषस्य कुटुम्बस्य वा उपयोगाय न भवेयुः, किन्तु सर्वस्य मनुकुलस्य उपयोगाय भवेयुः इत्याशयेन रामानुजाचार्याः सर्वेभ्योऽपि मन्त्रोपदेशं कृतवन्तः । न केवलमत्र लौकिकं प्रयोजनम् । अलौकिकं प्रयोजनमपि मनसि निधाय परमपूज्याः रामानुजाचार्याः इत्थं प्रोचुः । तात्पर्यम् एवं वर्तते – चतुर्विधपुरुषार्थेषु मोक्ष एव परमः पुरुषार्थः इत्युच्यते शास्त्रे । अत्र परमः पुरुषार्थः मोक्षः सर्वैरपि प्राप्तुं योग्यः स्यात् इति । कुतः ईदृशी चिन्तना इति चेत् – जगदिदं दुःखात्मकं वर्तते । दुःखापसरणमूलकं सुखं प्राप्तव्यमिति जगति विद्यमानानां सर्वेषामपि जन्तूनामिच्छा वर्तते । किन्तु इमामिच्छां परिपूर्णां कर्तुं मनुजः नानाविधैः मार्गैः गवेषणं करोति । ज्ञानेनैव हि कैवल्यमिति अद्वैतवादिनः शङ्कराचार्यशिषाः प्रतिपादयन्ति । ज्ञानं विद्याभ्यासश्च सर्वेषामपि न सुलभसाध्ये विद्येते । अतः शरणागतिः रामानुजाचार्यमते स्वीकृता वर्तते । शरणागतिः नाम प्रपत्तिः । मदीयम् अपराधं सर्वमपि

क्षमित्वा मामनुगृहाण इति प्रार्थना एव प्रपत्तिः । अयमेव भक्तिमार्गः । अयं मार्गः सर्वैरपि अनुसर्तुं योग्यो वर्तते । इत्थं सर्वं समालोच्य, मोक्षोपयोगिनो ये मन्त्राः सन्ति ते सर्वेऽपि सर्वेभ्यः प्रदेयाः इति रामानुजाचार्यैः निश्चितम् ।

अत्र सिद्धान्तः । चातुर्वर्ण्यं समाश्रित्य वेदे त्रैवर्णिकानामेव अधिकारः ? उत सर्वेषामपि वर्तते ? इति विचार्य सिद्धान्तः वक्तव्यो भवति । कुतः इति चेत् – वैदिकसम्प्रदायानुसारेण त्रैवर्णिकानामेव वेदाध्ययने अधिकारः । रामानुजाचार्यैस्तु सर्वेभ्योऽपि मन्त्रः उपदिष्टः इति परस्परं विरोधो वर्तते । अयं विरोधः इत्थं समाधीयते – आहारशुद्धिः, सत्त्वशुद्धिः, उपवासः, इन्द्रियनिग्रहः, सदाचारः इत्यादिना ब्राह्मणत्वं सम्पाद्य, पुनरपि उपनयनादिना संस्कारेण द्विजत्वं प्राप्य वेदाध्ययने प्रवृत्तो भवेत् इति वेदाध्ययनविषये नियमः । किन्तु मोक्षसिद्धिदान् मन्त्रान् पुराणपठितान् आगमपठितान् वा अध्येतुम् अनुष्ठातुं च ब्राह्मणत्वं नापेक्षितम् इति । अत एव रामानुजाचार्यैः सर्वेभ्यः मन्त्रः उपदिष्ट इति हेतुना धर्मविरोधः सम्प्रदायविरोधो वा न सञ्जायते । ज्ञानार्जने मोक्षे च सर्वेषामपि अधिकारः वर्तते इति कारणेन रामानुजाचार्यैः सर्वेभ्योऽपि मन्त्राः उपदिष्टाः । इत्थं व्याख्यानेन पूर्वोक्तः विरोधः परिहृतो भवति ।

अत एव मन्त्राणां मोक्षसाधनत्वं मोक्षसाधकत्वं च उभे अपि सामर्थ्ये वर्तेते । साधनं नाम मोक्षप्राप्तौ मन्त्रः उअपकरणवत् सहाय्यं करोतीति भावः । मोक्षसाधकः मन्त्रः इत्यस्य तु मोक्षसाधने कर्तृत्वं मन्त्रस्यैव वर्तते इति अपरो विशेषः । अत एव केचित् ज्ञानिनः मन्त्रेण सिद्धिं विन्दन्ति । अपरे केचन अज्ञानिनः मन्त्रशक्त्या अपि सिद्धपुरुषाः भवन्ति । अतः मन्त्रस्य करणत्वशक्तिः कर्तृत्वशक्तिः उभे अपि वर्तेते । एतत्सर्वं साररूपेण सङ्गृह्य अस्यां विष्णुतत्त्वसंहितायां मन्त्रकोशाध्याये मन्त्रस्य प्रयोजनमादौ निरूपितमस्ति । तद्यथा – [1]अतः परं प्रवक्ष्यामि मन्त्रं सर्वार्थसिद्धिदम् । येन विज्ञातमात्रेण बन्धपाशाद्विमुच्यते ॥ इति । अत्र बन्धपाशो नाम दुःखात्मको जननमरणरूपः संसार एव, न त्वन्यत् । इत्थं सर्वार्थसिद्धिदेन मन्त्रेण संसारनिवृत्तिर्भवति । तन्मूलकं मोक्षः सिद्ध्यतीति मन्त्रस्य परमं प्रयोजनम् । इत्थं मन्त्रकोशाध्याये मन्त्रस्य परमं प्रयोजनं निरूपितम् ॥

एतादृशस्य मन्त्रस्य विज्ञानेन मोक्षः सिद्ध्यति चेत् कोऽयं मन्त्र इति जिज्ञासा जायते । मन्त्रस्तु सङ्क्षिप्य तृतीयश्लोके उक्तो वर्तते । – मकारं बीजसंयुक्तं विन्यसेदक्षरेश्वरम् । हकारादिककारान्तं प्रादक्षिण्येन विन्यसेत् ॥

अत्र हकारादिककारान्तमिति एकं पदं श्रूयते । हकारादारभ्य ककारपर्यन्तमिति विलोमानुक्रमो वा ? उत छन्दोभङ्गनिवारणाय पदयोजना वा ? इति प्रश्नः जायते । कुतः एतादृशः प्रश्नः इति चेत् – मातृकासु ळकारस्य, क्षकारस्य च तत्र तत्र प्रयोगः दृश्यते । हकारात् ककारपर्यन्तं मातृकाणां स्वीकारे एतौ वर्णौ परित्यक्तौ स्याताम् । एवमेव स्वरवर्णा अपि त्यज्यन्ते । एवमेव सर्वासां मातृकाणाम् एकस्मिन्नेव मन्त्रे प्रयोगः प्रायः न दृश्यते । तस्मात् इत्थं बीजाक्षराणि सन्तीति केवलं निर्देशः अत्र कृतः । एषां प्रयोगस्तु प्रयोजनमनुसृत्य, मुनीनामाचार्याणाञ्च वचनमनुसृत्य करणीयो भवति । मातृकाणां विन्यासः [2] परमेश्वरसंहितायां सम्यक् प्रदर्शितो वर्तते ॥

मकारं बीजसंयुक्तम् इत्यस्य अयमर्थः – हकारादयो वर्णाः बीजाक्षराणि । तेषु प्रत्येकं मकारं योजयेत् इत्यर्थः । यथा – हम्, शम्, कम्, खम् इत्यादि । अत्र मकारस्य योगेऽपि [3] व्याकरणसूत्रानुसारं मकारस्य अनुस्वारो भवति । परतः व्यञ्जनवर्णस्य अभावेऽपि अनुस्वारलेखनं रूढौ दृश्यते । यथा – [4] कं खं गं घं ङं । अत्र मातृकासु एकैकस्य

बीजाक्षरस्य बहु वैशिष्ट्यं वर्तते । लम् इति पृथिवीतत्त्वात्मकं बीजम् । रम् इति अग्नितत्त्वात्मकं बीजम् । यम् इति वायुतत्त्वात्मकं बीजम् । हम् इति आकाशतत्त्वात्मकं बीजम् । अत्र केचन खम् इति पाठान्तरम् इच्छन्ति । वस्तुतः खम् नाम गगनम् । खशब्दस्य अर्थानुसारं बीजाक्षराणि न प्रयुज्यन्ते । एकैकस्य अक्षरस्य विशिष्टा शक्तिः मुनिभिः दृष्टा वर्तते । तां शक्तिमनुसृत्य बीजाक्षराणां प्रयोगः एवं कर्तव्य इति मुनिभिः प्रोक्तम् । तदनुसारं लोके प्रयोगः क्रियते । अतः खशब्दार्थं मनसि निधाय खमिति बीजाक्षरस्य आकाशतत्त्वमिति न निर्णेतव्यम् । हम् इत्येव आकाशतत्त्वे साधुः प्रयोगः ।

एतादृशाः बीजाक्षरमन्त्राः वेदे पठिताः किम् ? इति प्रश्ने कृते सति, वेदे न पठिताः इत्येव सर्वे जनाः अभिप्रयन्ति । साक्षात् बीजाक्षरमन्त्राः वेदे न दृश्यन्ते ।

यदीगं् शृणोत्यलकगं् शृणोति । अथापि एतादृशानां मन्त्राणां वैशिष्ट्यं वेदे एव प्रतिपादितं वर्तते । वेदार्थमनुसृत्य उद्धृताः ते मन्त्राः पुराणेषु आगमेषु च लिखितरूपेण स्पष्टीकृताः वर्तन्ते । तद्यथा – क्लीं (क्लीम्} इत्येतत् बीजाक्षरं वेदे न दृश्यते । किन्तु कृष्णयजुर्वेदान्तर्गतायां तैत्तिरीयशाखायाम् आरण्यके अस्य महत्त्वं व्याख्यातं दृश्यते । तत्र तु मन्त्रे – [5] यदीगं् शृणोत्यलकगं् शृणोति । नहि प्रवेद सुकृतस्य पन्थामिति – इत्येकं वाक्यं श्रूयते । वेदो नाम न केवलं स्तुतिरूपः, यागप्रतिपादको वा वर्तते । एकैकस्य अक्षरस्यापि विविधं व्याख्यानं विविधेषु ग्रन्थेषु कृतं दृश्यते । अत एव वेदो नाम ज्ञानराशिः इत्युच्यते । अत्रायं मन्त्रः बीजाक्षरपरतया व्याख्यात इति विद्वद्भिः अभिधीयते । अस्य मन्त्रस्य पदच्छेदस्तु एवं वर्तते – यदि ईम् शृणोति । अलकं शृणोति । सुकृतस्य पन्थां न प्रवेद । इति । अलकम् इत्यस्य लकारककारशून्यम् इत्यर्थः । ईम् शृणोति इत्यस्य ईकारं शृणोति इत्यर्थः । लकारककारशून्यम् ईकारं शृणोति चेत् सुकृतस्य पन्थानं न जानातीत्यर्थः । अत्र पन्थानम् इति पदे प्रयोक्तव्ये सति पन्थाम् इति वैदिकः प्रयोगः । लकारककारशून्यः ईकारः नाम केवलम् ईकारः । सः पुण्यस्य पन्थानं न दर्शयति इति भावः । किन्तु लकारेण ककारेण च युक्तश्चेत् ईकारः पुण्यलोकं स्वर्गं वा दर्शयतीत्यर्थः । अत्र लकारस्य ककारस्य च संयोगे ल्कीम् (ल्+क्+ई) इति रूपं भवति खलु इति पुनः संशयः जायते । वस्तुतः लकारः प्रथमम् ईकारे योजनीयः । अनेन ल् + ई = ली इति रूपं सिद्ध्यति । तदनु पुनः ककारः योजनीयः । क् + ली = क्ली इति रूपं सिद्ध्यति । अत्र विष्णुतत्त्वसंहितायाम् – मकारं बीजसंयुक्तम् इत्युक्तं वर्तते । अतः क्ली इति बीजाक्षरे मकारोऽपि योजनीयः । इत्थम् क्लीं (क्लीम्) इति बीजाक्षरमन्त्रः सिद्ध्यति । अयञ्च मन्त्रः पुण्यलोकप्राप्तिफलकः इति तात्पर्यम् । एवं प्रकारेण वेदेषु विद्यमानाः निगूढाः अर्थाः गुरुमूलकमेव विज्ञेयाः । एतादृशाः सूक्ष्मार्थप्रतिपादकाः विषयाः केवलं वेदभाष्यस्य स्वयम् अध्ययनेन नोपलभ्यन्ते । अतः गुरूणामनुग्रहः अत्र अवश्यम् अपेक्षितः । इत्थं बीजाक्षराणां वैशिष्ट्यमपि कुत्रचित् वेदे उक्तं भवति । आचार्यैः

तत्सर्वं सङ्गृह्य एकत्र मन्त्ररूपेण दर्शितं भवति । अत्र विष्णुतत्त्वसंहितायाम् – हकारादिककारान्तं प्रादक्षिण्येन विन्यसेत् इत्येव उक्तं वर्तते । एतस्य श्लोकार्धस्य तत्त्वं नीगूढार्थं च अन्येभ्यः ग्रन्थेभ्यः आकलय्य प्रयोजनं प्राप्तव्यम् । अत एव अग्रे एकादशे श्लोके – मूले वर्णविकारेण मूर्तयः कीर्तिताः पृथक् । इत्युक्तम् । अत्र वर्णविकारो नाम वर्णानाम् आनुपूर्वीभेद इत्यर्थः । यथा – श्रीम् ह्रीम् क्लीम् इति प्रयोगेण या शक्तिः जायते सा – ह्रीम् क्लीम् श्रीम् इति मन्त्रप्रयोगेण न जायते । अतः देवतामूर्तयः अपि विभिन्नाः सञ्जाताः इत्यर्थः ।

मायातलसमायुक्तं बीजं हिं सविचित्रितम् ॥१८॥ अत्र मायाबीजस्य उल्लेखः कृतः । इदमेव विद्याबीजमियपि उक्तं वर्तते । वस्तुतः अत्र विष्णुतत्त्वसंहितायाः सम्पादने "हिम्" इति प्रयुक्तं वर्तते । किन्तु व्यवहारे ह्रीम् इत्यस्य मायाबीजमिति व्यवहारः । अस्यैव विद्याबीजमित्यपि नामधेयम् । अस्य बीजाक्षरस्य जपेन विद्यालाभो भवतीति कारणेन विद्याबीजमिति नामधेयम् । वेदमन्त्रैः यत् फलं साध्यते तस्मादपि शीघ्रं बीजाक्षरमन्त्रस्य फलं लभ्यते इति कारणेन बीजाक्षरमन्त्रं बहवः उपासते । एतादृशबीजाक्षरेषु वर्णाः एव देवतामूर्तिः । अतः आनुपूर्वीभेदेन मूर्तिभेदः जायते इति स्पष्टं विज्ञायते । एवं प्रकारेण विष्णुतत्त्वसंहितायाम् मन्त्रकोशाध्याये स्थूलरूपेण बीजाक्षराणां महत्त्वं, प्रयोजनं, वैशिष्ट्यं च प्रतिपादितं वर्तते । अत एवास्य विष्णुतत्त्वसंहितायां मन्त्रकोश इति अध्यायः अन्वर्थकः सार्थकश्च वर्तते इति शम् ॥

**पादटिप्पणी :**

१. विष्णुतत्त्वसंहितायाम् मन्त्रकोशपटले प्रथमः श्लोकः ॥

२. परमेश्वरसंहिता । पत्रसङ्ख्या – ३४.

३. मोनुस्वारः – ८–३–२३. पाणिनिसूत्रम् ।

४. चण्डिकापारायणम् । [दुर्गासप्तशती] ।

५. तैत्तिरीयम् आरण्यकम् – प्रथमः प्रश्नः–तृतीयः अनुवाकः ।

**********

**Volume XXI : January to June – 2023, ISSN 2250-1711**

**Journal of Veda Samskrita Academy [Recognised in the UGC-CARE List]**

# भगवद्गीतोपोद्घातगताद्वैतविशिष्टाद्वैताचिन्त्यभेदाभेदभाष्यसमीक्षणम्

**Dr. Tridib Roy Mondal**

Assistant Professor, Department of Advaita Vedanta
Diamond Harbour Women's University,
Harindanga, P.O.: Diamond Harbour,
South 24 Paraganas, West Bengal-743331
Contact No. : 9875459288
E-mail : tridibram@gmail.com

**कुञ्चिशब्दाः**

ब्रह्म, आत्मा, मोक्षः, कर्म, संसारः

**उपोद्घातः**

कृत्स्नानर्थरूपजन्ममृत्युजराव्याध्यादिदुःखचक्रस्वरूपसंसारकारणभूताज्ञाननाशिन्याः शरीरेन्द्रियादिभिन्नजीवात्मयाथात्म्य-स्वरूपावबोधिन्याः अद्वयब्रह्मसत्यत्वज्ञापिन्याः जीवब्रह्मैक्यरूपोपनिषदर्थप्रतिपादिन्याः गीतोपनिषदाख्यायाः श्रीमद्भगवद्गीतायाः विद्यमानेषु द्वैताद्वैतविशिष्टाद्वैताचिन्त्यभेदाभेदशुद्धाद्वैतादिपरकेषु बहुषु व्याख्यानेषु भारतवर्षस्य सनातनसंकृतौ जीवात्मनां स्वस्वरूपसत्यज्ञानानन्तानन्दैकाद्वयब्रह्मतत्त्वबोधनाय भगवच्छङ्कररामानुजबलदेवविद्याभूषणप्रणीतभाष्याणि मूर्धन्यस्थानमधिरोहन्ति। भगवद्गीतायाः केवलाद्वैतपरकोपोद्घातभाष्ये भगवच्छङ्कराचार्यैः परमात्मन एव सत्यत्वं, ज्ञानस्य एव साक्षान्मोक्षसाधनत्वं, परमात्मनो निराकारत्वं निर्गुणत्वं चेत्यादयः विषयाः प्रतिपादिताः। भगवद्गीतायाः विशिष्टाद्वैतपरकोपोद्घातभाष्ये भगवद्रामानुजाचार्यैः जीवेशप्रकृतिनां त्रयाणां नित्यत्वं, परमात्मनः साकारत्वं सगुणत्वं च, ज्ञानकर्मणोः मोक्षसाधनत्वं चेत्यादयः विषयाः गदिताः। भगवद्गीतायाः अचिन्त्यभेदाभेदपरकोपोद्घातभाष्ये बलदेवविद्याभूषणाचार्यैः जीवेशप्रकृतिकालानां चतुर्णां नित्यत्वं, परमात्मनः साकारत्वं सगुणत्वं निराकारत्वं निर्गुणत्वं चेत्यादयः विषयाः कथिताः। एवं परस्परं विप्रतिपत्तौ सत्यां कस्याचार्यस्य मतं ग्रहणयोग्यं ग्रहणायोग्यञ्च, ग्रहणयोग्यत्वायोग्यत्वयोः सप्रमाणं युक्तयः सक्ष्मातिसूक्ष्मतया शोधपत्रेऽस्मिन् निरूप्यन्ते।

**समीक्षणम्**

केवलाद्वैतविशिष्टाद्वैतदर्शनयोः मुमुक्षुरधिकारीत्युक्तम्। किन्त्वचिन्त्यभेदाभेददर्शने न केवलं मोक्तुमिच्छुरत्राधिकारी। सोऽधिकारी सनिष्ठपरिनिष्ठनिरपेक्षभेदेन त्रिविधः। तथा चोक्तं गीताभूषणभाष्ये यत् "स च सनिष्ठपरिनिष्ठतनिरपेक्षभेदात् त्रिविधः- तेषु.."[1] इति। ननु प्रायः समेषां शास्त्राणां मुक्त्यवाप्तौ तात्पर्यत्वात् मुमुक्षोरेव अधिकारित्वं युक्तियुक्तं भाति। बलदेवविद्याभूषणाचार्यैः स्वर्गादिप्राप्तीच्छोरपि अधिकारित्वं भणितम्। किन्तु "तद्यथेह कर्मचितः लोकः.."[2], "सत्यं ज्ञानमनन्तं ब्रह्म"[3] चेत्यादिभिः श्रुतिभिः ब्रह्मणः नित्यत्वादिकथनात् तद्भिन्नस्य च स्वर्गादेरनित्यत्वक्षयित्वादिकथनात् स्वर्गाद्यनित्यवस्तुनः प्राप्तौ शास्त्रतात्पर्यं न स्यादित्यतः बलदेवविद्याभूषणमतमसमीचीनमित्याशङ्का न कर्तव्या। यतो हि अधिकारिणोऽपरिपक्वाल्पपरिपक्वपरिपक्वादिभेदेन क्रमेण अधिकारिभेदाः सनिष्ठपरिनिष्ठनिराश्रमाः युक्तियुक्ता एव।

शाङ्कराद्वैते ब्रह्मैव नित्यं वस्तु। विशिष्टाद्वैतदर्शने "भोक्ता भोग्यं प्रेरितारं.."[4] इति श्रुत्यनुसारं जीवेशप्रकृतयः नित्याः स्वीकृताः। अचिन्त्यभेदाभेददर्शने जीवेशप्रकृतिकालाः नित्याः भवन्ति। बलदेवविद्याभूषणाचार्यैरुच्यते यत् "तस्यां खल्वीश्वरजीवप्रकृतिकालकर्माणि.."[5] इति। किन्तु सर्वा उपनिषदः परिशील्यन्ते चेत् ब्रह्मण एव नित्यत्वमवगम्यते। अपि च स्मृतिशास्त्रेष्वपि मायादीनाम् अनित्यत्वं भणितम्।

"तेषामसौ विरजो.."[6], "इन्द्रो मायाभिः.."[7] चेत्यादिषु श्रुतिषु मायायाः मिथ्यात्वं ब्रह्मज्ञानिनाञ्च तद्रहितत्वं श्रूयते। गौडपादाचार्येण माण्डूक्यकारिकायामपि मायाजीवयोरनित्यत्वं स्पष्टमुच्यते यत् "यथा मायामयाद्बीजाज्जायते.."[8], "यथा मायामयो.."[9] च इति।

अतः रामानुजबलदेवविद्याभूषणनययोः मायाजीवयोः नित्यत्वकथनं चिन्त्यं भवति। ननु तन्नययोः प्रकृतेः नित्यत्वं भणितम्, न तु मायाया इत्याशङ्का न कर्तव्या, "मायां तु प्रकृतिं.."[10] इत्यस्यामृचि तयोरेकत्वं निगदितम्। एवञ्च रामानुजाचार्यैः मायाजीवयोः सत्यत्वप्रतिपादिनी "भोक्ता भोग्यं प्रेरितारञ्च.."[11] इत्येषा उदाहृता श्रुतिः सर्वस्य ब्रह्माभिन्नत्वेन सत्यत्वं प्रतिपादयति, न तु ब्रह्मभिन्नत्वेन जीवमाययोः सत्यत्वं प्रतिपादयतीत्यतः रामानुजमतमपि विचार्यम्।

श्रीमद्भगवद्गीतादिस्मृतिशास्त्रेष्वपि ब्रह्मणः सत्यत्वं मायायाश्च मिथ्यात्वं स्पष्टमेव भगवता श्रीकृष्णेन गद्यते यत् "ब्रह्मणो हि प्रतिष्ठाममृतस्याव्ययस्य.."[12], "ज्ञानेन तु तदज्ञानं.."[13], "मायामेव ये प्रपद्यन्ते.."[14] चेत्यादि। ब्रह्मज्ञानेन मायायाः विनश्यत्वप्रतिपादनात् नित्यस्य च वस्तुनोऽविनश्यत्वात् मायाया अनित्यत्वं स्पष्टमेव। अतः मोहोत्पादिन्याः मायायाः सत्यत्वं वदतां रामानुजबलदेवविद्याभूषणाचार्याणां मतं विचारणीयं भवति। यदि एतयोः रामानुजबलदेवविद्याभूषणाचार्ययोः ब्रह्मात्मना जीवादीनां सत्यत्वप्रतिपादनमिष्टं स्यात्तर्हि तन्मतमविचारणीयं ग्रहणयोग्यञ्चेति। यदि तन्मतयोः ब्रह्मभिन्नेन जीवकालादीनां सत्यत्वप्रतिपादनमिष्टं स्यात्तर्हि शाङ्करमतमेव ग्रहणयोग्यं श्रुत्यनुसारि च, न तु रामानुजबलदेवविद्याभषणमते। श्रुतौ जीवादेः सर्वस्य ब्रह्मत्वं ब्रह्मणश्च सत्यत्वं श्रुतम्। तथा च श्रुतयः- "सर्वं खल्विदं ब्रह्म"[15], "आत्मैवेदं सर्वम्"[16] चेत्यादि।

शाङ्करनये द्विविधा मुक्तिः। सद्योमुक्तिः क्रममुक्तिश्चेति। परमात्मनोऽपरोक्षज्ञानोदयसमकाले तत्स्वरूपसच्चिदानन्दात्मना अवस्थितिरूपिण्यां सद्योमुक्तौ जीवन्मुक्तिविदेहमुक्त्योरन्तर्भावः। सगुणब्रह्मविद्यानुशीलनवतां ब्रह्मलोकावस्थित्यैश्वर्यभोगाभ्याम् अनन्तरं क्रमेण लब्धमुक्तित्वात् इयं क्रममुक्तिः भण्यते। रामानुजनये भगवत्समलोकनिवासत्वसमैश्वर्यत्वनिकटवर्तित्व- समरूपत्वैकत्वावाप्तिरूपाः सालोक्यसार्ष्टिसामीप्यसारूप्यसायुज्याः पञ्च मुक्तयः। बलदेवविद्याभूषणनये षड्विधा मुक्तिः। सालोक्यसार्ष्टिसामीप्यसारूप्यसायुज्याः पञ्च कृष्णसाक्षात्कारात्मिका च परामुक्तिः। चैतन्यचरितामृतग्रन्थे उच्यते यत् "त्वत्साक्षात्करणाह्लादविशुद्धाब्धि स्थितस्य.."[17] इति।

ब्रह्मसाक्षात्कारात्मिका मुक्तिरेतैः शङ्कररामानुजबलदेवविद्याभूषणाचार्यैः स्वीकृता वर्तते। श्रुतिषु ब्रह्मसाक्षात्कारा- भिन्नमुक्तेः प्रसिद्धत्वात् शाङ्करमते न संशयः। किन्तु प्रसिद्धोपनिषत्सु सालोक्यसार्ष्टिसामीप्यादिमुक्तिनामकथनात् लोकादीनाञ्च क्षयित्ववचनात् यद्यपि सालोक्यादिमुक्तिकथनं न श्रुत्यनुसारि तथापि स्मृतिशास्त्रेषु तत्प्रसिद्धत्वात् तत्किञ्चियुक्तमपि भाति।

ब्रह्मसाक्षात्कारं प्रति साधनविषये शङ्कररामानुजबलदेवविद्याभूषणाचार्याणां मतविरोधोऽस्ति। शङ्कराचार्याणां नये परमात्मयाथात्म्यज्ञानादेव जन्ममृत्युजराव्याध्याद्यनर्थलक्षणात् संसारात् मुक्तिः लभ्यते। तथा चोच्यते भगवता शङ्कराचार्येण यत् "तस्यास्य गीताशास्त्रस्य संक्षेपतः प्रयोजनं परं निःश्रेयसं.."[18] इति। किन्तु रामानुजाचार्याणां नये ज्ञानकर्मसमुच्चयः भक्तियोगश्च मुक्तिसाधनं भवति। रामानुजाचार्यैर्गद्यते यत् "परमपुरुषार्थलक्षणमोक्षसाधनतया वेदान्तोदितं.."[19] इति। बलदेवविद्याभूषणाचार्यैः कर्मणः परम्परया मोक्षसाधनत्वम् अङ्गीकृतम्। गीताभूषणभाष्ये कथ्यते यत् "तत्र श्रुततत्फलनैरपेक्षेण कर्तृत्वाभिनिवेशपरित्यागेन चानुष्ठितस्य.."[20] इति। बलदेवविद्याभूषणाचार्यैः ज्ञानभक्त्योश्च साक्षान्मोक्षसाधनत्वं स्वीकृतं यत् "मोक्षधर्मे पितापुत्रादि संवादात्.."[21] इति। एवं मुक्तिसाधनविषये मतविरोधे सति सर्वदा परमप्रमाणभूतश्रुत्यनुसारि मतमेव ग्रहणयोग्यम्। शङ्करबलदेवविद्याभूषणयोः ज्ञानभक्त्योः साक्षात्साधनत्वं कर्मणश्च परम्परया साधनत्वमङ्गीकृतम्। एताभ्यां मताभ्यां सह रामानुजोक्तं विरोधि वचनं यत् "आत्मावलोकनं प्राप्तुमिच्छोः.."[22] इति। किन्तु "न कर्मणा न प्रजया.."[23] "विद्ययाऽमृतमश्नुते"[24] चेत्यादिषु श्रुतिषु ज्ञानेनैव मोक्षसाधनत्वमुक्तम्, कर्मणाञ्च मोक्षसाधत्वं वारितम्। अपि च "ज्ञानाग्निस्सर्वकर्माणि.."[25] "न हि ज्ञानेन.."[26] चेत्यादिषु स्मृतिषु ज्ञानेन कर्मणां विनश्यत्वं भणितम्। "कर्मणैव हि संसिद्धिमास्थिता.."[27] इत्यत्र तु चित्तशुद्धिप्राप्तिद्वारेण कर्मणां संसिद्धित्वमुक्तम्। अतः कर्मयोगस्य साक्षान्मोक्षसाधनत्वरूपं रामानुजमतम् असमीचीनं भाति।

**उपसंहारः**- एवमस्माभिः शोधपत्रेऽस्मिन् श्रीमद्भगवद्गीतोपोद्घातगताद्वैतविशिष्टाद्वैताचिन्त्यभेदाभेद-भाष्याणाम् आलोचनपुरःसरम् इतरेतरा विप्रतिपत्तिः, तत्र च समाधानानि भगवच्छङ्कररामानुजबलदेवविद्याभूषणोक्तमतसमर्थनपरकगूढार्थदीपिका- नीलकण्ठ्या नन्दगिरिकृतव्याख्यानुभूतिकृतटिप्पनीभाष्यार्कप्रकाशतात्पर्यचन्द्रिकासारार्थवर्षिण्यादिव्याख्यापर्यावलोकनेन सम्पोषितानि इति शम्।

## अन्त्यटीका

1. श्रीमद्भगवद्गीता (गीताभूषणभाष्येण सारार्थवर्षिण्या च समलङ्कृता), पृष्ठाङ्कः- ५-६ 2. छान्दोग्योपनिषत्- ८/१/६
3.तैत्तिरीयोपनिषत्- २/१/१ 4. श्वेताश्वतरोपनिषत्- १/१२ 5. श्रीमद्भगवद्गीता(गीताभूषणभाष्येण सारार्थवर्षिण्या च समलङ्कृता), पृष्ठाङ्कः- ३
6. प्रश्नोपनिषत्- १/१६ 7. बृहदारण्यकोपनिषत्- २/५/१९ 8. माण्डूक्याकारिका(अलातशान्तिप्रकरणम्)- ५९
9. माण्डूक्याकारिका(अलातशान्तिप्रकरणम्)- ६९ 10. श्वेताश्वतरोपनिषत्- ४/१० 11. श्वेताश्वतरोपनिषत्- १/१२
12. श्रीमद्भगवद्गीता- १४/२७ 13. श्रीमद्भगवद्गीता- ५/१६ 14. श्रीमद्भगवद्गीता- ७/१४ 15. छान्दोग्योपनिषत्- ३/१४/१
16. छान्दोग्योपनिषत्- ७/२५/२ 17. चैतन्यचरितामृतम्- १/७/५ 18. श्रीमद्भगवद्गीता(वासुदेवानन्दस्वामिभिः व्याख्याता अनुदिता) पृष्ठाङ्कः- १३ 19. श्रीमद्भगवद्गीता(श्रीरामानुजभाष्य-हिन्दी-अनुवादिसहिता), पृष्ठाङ्कः- ४ 20. श्रीमद्भगवद्गीता(गीताभूषणभाष्येण सारार्थवर्षिण्या च समलङ्कृता), पृष्ठाङ्कः- ५ 21. तत्रैव 22. श्रीमद्भगवद्गीता(बङ्गपुस्तकम्, रामानुजभाष्यसहितम्), पृष्ठाङ्कः- २०३
21. तत्रैव 22. श्रीमद्भगवद्गीता(बङ्गपुस्तकम्, रामानुजभाष्यसहितम्), पृष्ठाङ्कः- २०३ 23. कैवल्योपनिषत्- ३ 24. ईशोपनिषत्- ११
25. श्रीमद्भगवद्गीता- ४/३७ 26. श्रीमद्भगवद्गीता- ४/३८ 27. श्रीमद्भगवद्गीता- ३/२०

## अवलोकितग्रन्थसूची

1. तैत्तिरीयोपनिषत् (बङ्गपुस्तकम्). शाङ्करभाष्यसमेता. सम्पादकः अनुवादकश्च- महामहोपाध्यायः दूर्गाचरणसांख्यवेदान्ततीर्थः. कलिकाता : देव-साहित्य-कूटीर-प्राइभेट-लिमिटेड, २००८

2. छान्दोग्योपनिषत् (बङ्गपुस्तकम्). शाङ्करभाष्यसमेता. सम्पादकः अनुवादकश्च- महामहोपाध्यायः दूर्गाचरणसांख्यवेदान्ततीर्थः. कलिकाता : देव-साहित्य-कूटीर-प्राइभेट-लिमिटेड, २००२

3. ईशादि नौ उपनिषत्. शाङ्करभाष्यसमेता. गोरखपुर : गीताप्रेस (प्रकाशक एवं मुद्रक), सं.-२०६८

4. बृहदारण्यकोपनिषत्. शाङ्करभाष्यसमेता. गोरखपुर : गीताप्रेस (प्रकाशक एवं मुद्रक), सं.-२०७०

5. कठोपनिषत् (बङ्गपुस्तकम्). अनुवादकः व्याख्याकारश्च- स्वामी भूतेशानन्दः. कलिकाता : उद्बोधन-कार्यालयः. २००९

6. श्रीमद्भगवद्गीता (बङ्गपुस्तकम्). अनुवादकः व्याख्याकारश्च- स्वामी वासुदेवानन्द. कलिकाता : उद्बोधन-कार्यालयः, २०१४

7. श्रीमद्भगवच्छङ्कराचार्यविरचितं श्रीमद्भगवद्गीताभाष्यम्. श्रीमदनुभूतिस्वरूपाचार्यविरचितः श्रीमदानन्दगिरिस्वामिविरचितः श्रीबेल्लङ्कोण्ड-रामरायकविविरचितश्च प्रथमः द्वितीयश्च खण्डः. संशोधकः- मीमांसा-वेदान्ताचार्य-श्रीमणिद्राविडः. वाराणसी : श्रीदक्षिणामूर्तिमठप्रकाशनम्,

8. श्रीमद्भगवद्गीता. श्रीरामानुजभाष्य-हिन्दी-अनुवादसहिता. अनुवादक- श्रीहरिकृष्णदासगोयेन्दका. गोरखपुर : गीताप्रेस (प्रकाशक एवं मुद्रक),

9. मुण्डकोपनिषत्. सम्पादकः- ब्रह्मचारिमेधाचैतन्यः. दण्डिस्वामी-दामोदर-आश्रमः, २००८

10. श्वेताश्वतरोपनिषत्. व्याख्याकारः अनुवादकश्च- स्वामी विश्वरूपानन्दसरस्वती. मुम्बई : सत्साहित्य-प्रकाशन-ट्रस्ट, २००८ (द्वितीयसंस्करणम्,जानुयारिमासः)

11. श्रीमद्भगवद्गीता. रामानुजभाष्यं बङ्गानुवादसहितम्. अनुवादकः- श्रीमद्यतीन्द्ररामानुजाचार्यः. कोलकाता : श्रीबलराम-प्रकाशनी, १४०६ (बङ्गाब्दः)

12. चिद्घनानन्दस्वामी. आचार्य शङ्कर ओ रामानुज (बङ्गपुस्तकम्). प्रकाशकः- स्वामी-विश्वनाथानन्दः. कलकाता : उद्बोधन-कार्यालयः, २०००

13. विद्यारण्यस्वामी. पञ्चदशी. रामकृष्णकृतव्याख्यया-विषमस्थलटिप्पणी-पाठान्तर-श्रुतिकोशश्लोक-विषयसूच्यादिभिः-श्रीमत्परमहंस परिव्राजकाचार्य-महेश्वरानन्दगिरि-महामण्डलेश्वरमहोदयानां भूमिकया च समलङ्कृता. संशोधकः- नारायणराम-आचार्य (काव्यतीर्थः). दिल्ली : चौखम्बा संस्कृत प्रतिष्ठान, २००८

14. उपनिषद्भाष्यम्. प्रथमखण्डः, श्रीमदानन्दगिर्याचार्यकृतटीकया-कठ-माण्डूक्य-तैत्तिरीयभाष्याणां प्रसिद्धाचार्यान्तरटीकाभिः-सटीकतैत्तिरीय वार्तिकेन च समलङ्कृतम्. सम्पादकः- सं्. एस. सुब्रह्मण्यशास्त्री. वाराणसी : श्रीदक्षिणामूर्ति-मठ-प्रकाशन, २०००

15. सदानन्दयोगीन्द्रः. वेदान्तसारः (बङ्गपुस्तकम्). सम्पादकः- विपद्भञ्जनपालः. कलकाता : संस्कृतपुस्तकभाण्डारः, २०१०(नवमसंस्करणम्)

16. धर्मराजाध्वरीन्द्रः. वेदान्तपरिभाषा. सम्पादकः- श्री सीताराम-शास्त्री-मुसलगावकरः. Baranasi : Chowkhamba Vidya Bhavan, २०१०

17. श्रीमद्भगवद्गीता. शाङ्करभाष्याद्येकादशटीकोपेता, प्रथमः भागः. संशोधकः- 'साधले' इत्युपाह्व-शम्भुजनुर्गजाननशर्मा. दिल्ली : पब्लिकेशन्स। 2014 (Third Edition)

18. सुरेश्वरः. नैष्कर्म्यसिद्धिः. व्याख्याकारः- स्वामी प्रज्ञानानन्दसरस्वती. वाराणसी : दक्षिणामूर्ति-मठ-प्रकाशनम्, २०६६ (वैकमाब्दः , द्वितीयसंस्करणम्)

19. मधुसूदनसरस्वती. अद्वैतसिद्धिः. (प्रणेता)। सम्पादकः- स्वामी विशुद्धानन्दगिरिः. वाराणसी : श्री दक्षिणामूर्तिमठः, १००० (प्रथमसंस्करणम्)

20. ईशोपनिषत्. Delhi : Narendra Prakash Jain , Matilal Banarsidass, २००२

21. श्रीमद्भगवद्गीता. श्रीपादविश्वनाथचक्रवर्तिमहोदयविरचित-सारार्थवर्षिणीटीकया एवं श्रीयुतबलदेवविद्याभूषणमहोदयविरचित-गीताभूषण भाष्येण समलङ्कृता. प्रकाशकः- कृष्णदासबाबा. मथुरा : राधाकुण्ड, कुसुमसरोवर, २०२३

22. सर्वज्ञात्मुनिः. संक्षेपशारीरकम्. पञ्चप्रक्रियासहित-श्रीस्वामिरामानन्दकृत-भावदीपिका-हिन्दीव्याख्यासहितम्. सम्पादकः- स्वामी योगीन्द्रानन्दः. वाराणसी : चौखम्बा विद्याभवन, १९८७

23. श्रीमद्भागवतपुराणम्. श्रीधरस्वामिविरचितया भावार्थबोधिनीनाम्ना संस्कृतटीकया समुपेतम्. संस्कृता- आचार्यजगदीशलालशास्त्री. दिल्ली : मोतीलाल बनारसीदास, १९८८

24. श्रीमन्महर्षि-वेदव्यासः. विष्णुपुराणम् (बङ्गपुस्तकम्).सम्पादकः-आचार्यपञ्चाननतर्करत्नः कोलकाता:नवभारत-पावलिशार्स,१३९०(बङ्गाब्दः)

25. भगवच्छङ्कराचार्यः. अपरोक्षानुभूतिः. श्रीस्वामिविद्यारण्यमुनिविरचितया दीपिकया सहिता. व्याख्याकारः सम्पादकश्च- चित्तनारायणपाठकः. वाराणसी : चौखम्बा विद्याभवन, २०१२

26. जगद्गुरुश्रीभगवत्पादाचार्यः, विशिष्टाद्वैतसिद्धान्तः. पं. विश्वनाथशास्त्रिदातारः कृतविमर्शसहितः. सम्पादकः- राष्ट्रपतिसम्मानित-देवर्षि-कलानाथ-शास्त्री. राजस्थानम् : सीकर, रेवासा, २००३

27. श्रीमद्भगवद्गीता. अष्टटीकोपेता. सम्पादकः- प. वासुदेवलक्ष्मणशास्त्री-पणशीकर. दिल्ली : चौखम्बा संस्कृत प्रतिष्ठान, २००९

28. पण्डितप्रवर-कृष्णजोयिस्. शाङ्करदर्शनमर्मप्रकाशः. Editor - Dr. M.L. Narakrishna Murthy. Tirupati : Rastriya Sanskrit Vidyapeetha, २००९

29. श्रीमत्पद्मपादाचार्यः. पञ्चपादिका. चतुःसूत्रीशारीरकभाष्यव्याख्या. वाराणसी : श्रीदक्षिणामूर्तिमठप्रकाशन, २०११

30. महर्षि-पतञ्जलिः. पातञ्जलयोगदर्शनम्. व्यासभाष्यसम्बलितं तच्च योगसिद्धि-हिन्दी-व्याख्योपेतम्. व्याख्याकारः- सुरेशचन्द्रश्रीवास्तवः. वाराणसी : चौखम्बा सुरभारती प्रकाशन, २००८

31. कृष्णदास-कविराजः. चैतन्यचरितामृतम् (बङ्गपुस्तकम्). गोरखपुर : गीताप्रेस (प्रकाशक एवं मुद्रक), एकादश-संस्करणम् २०१६

*********

**Volume XXI : January to June – 2023, ISSN 2250-1711**
**Journal of Veda Samskrita Academy [Recognised in the UGC-CARE List]**

# वैदिकवर्णव्यवस्था – एका समीक्षा

**Sushama Saren**
Research Scholar
Sidho Kanho Birsha University
Purulia, West Bengal- 723104
Contact No. : - 8967896100
E-mail : sushamasaren90@gmail.com

**कुञ्चिशब्दाः -**

वर्ण, ब्राह्मण, क्षत्रियः, वैश्यः, शूद्रः

**भूमिका-**

जातिव्यवस्थाभारतेअनिर्वचनीयसामाजिकःविपदःअस्ति। भारतंसिन्धुनद्याःतटेनिर्मितम्अस्ति। वेदिकसभ्यतायाःमुख्यमन्त्रःआसीत् अमृतवाणीअमृतस्यपुत्रः[1]। विश्वसंस्कृतिःप्रत्येकंप्राणिनांअमृतंपुत्रंघोषयति। ब्रह्माण्डेप्रत्येकंजीवःअमृतस्यपुत्रःपरिकीर्तितः। जातिप्रयुक्ताःसर्वेशब्दाःब्राह्मणक्षत्रियवैश्यशूद्राःइति। वर्णःयत्विकल्पेनस्वीकुर्वितुंशक्यते। वर्णप्रथाशास्त्रेषुशब्दाःनास्तितत्रवर्णाश्रम्जातित्वंवा। शब्दार्थविश्लेषणंकृत्वावर्णशब्दस्यधातुविज्ञानार्थःवृणोतिइतिद्रष्टुंशक्यतेयस्यअर्थःचयनार्थः। "वर्णोवृणोतेः"[2] । कालपरिवर्तनेनपुण्य-माश्रितजातिव्यवस्थाजन्माधारिताअभवत्। "व्रतमितिकर्म्मनाम्वृणोतीतिसतः"[3] अत्रव्रतम्शब्दःकर्मनाम। वृ-धातुनाआवृतः अर्थं वोधयति। अतएववैदिकधर्मःवर्णाश्रमधर्मउच्यते। एषःजातिव्यवस्थाविषयेचर्चायाविषयः।

**पर्यालोचना –**

कर्माणा अल्पार्थः प्रकृतिः एव। प्रकृतिः सरल धर्मः। ज्ञानं रक्षां अर्जनं औद्यौगिकं च कार्याणि इति चत्वारि वर्णाः मानवजातेः कृते नियुक्ताः आसन् । एते चत्वारः वर्ण विराट पुरुषः अर्थात् सृष्टिकर्ता सिद्धान्तः विविधरूपेण कन्पितः अस्ति। "ब्राह्मणोहस्य मुखमासीद् बाहू राजन्यः कृतः। उरु तदस्य यद्वैश्यः पद्भ्यां शूद्रोहजायत"[4] । वर्णव्यवस्थासामान्यतः ब्राह्मणक्षत्रियवैश्यशूद्रंनिर्दिशति। अस्मिन्वर्णव्यवस्थायांभेदःनास्तिकिन्तुसामञ्चस्यंलक्षते। यथा – "रुचंनोधेहिब्राह्मणेषुरुचंराजसुनस्तृहि। रूचंविश्येषुशूद्रेषुमयिधेहिरूचारुचम्लक्ष्यते "[5] । "प्रियं मा दर्भ कृणु"[6], "अज्येष्ठासोअकनिष्ठासएतेसंभ्रातरोवावृधुः"[7]।

वर्णव्यवस्थागुणानुसारंकर्माणिनिर्दिशति। केचनक्षात्रवलप्रशासनंकेचनमहायज्ञादिइष्टकर्मकेचनवित्तीयव्यवस्थाःएवंभिन्नस्वभावानांगुणवन्ताः। स्वानुसारेणकर्माणिकर्तुंहेउषानित्यंत्वंज्योतिषाअन्धकारात्संसारंप्रबोधयति। वर्णाश्रमस्यसुन्दररुपरेखाउपलभ्यतेयथा- "नानानांवाउनधियोविव्रतानिजनानाम् "[8] ।

**ब्राह्मणः -**

ब्राह्मणस्यगुणाःविषयेवेदेलक्ष्यतेसंवत्सरंतपःभवेयुःअवश्यंसौम्याशान्तःवैदिकनियमानानांकठोरतापूर्वकंपालनंअवश्यकरणीयम्। नित्यंध्यानंपूजाचकर्तव्यअर्थात्ब्राह्मणसोअतिरात्रेनसोमेसरोपुर्णमभितोवदन्तःसंवत्सरस्यतदहःपरिष्ठ। "

आदर एतानि सर्वाणि ब्रह्मणः निहिताः कर्म सन्ति।

**क्षत्रियः –**

क्षन्दतिरक्षतिजनान्क्षत्र।क्षरतेहिस्वतेनश्यतेपदार्थोयेनसक्षत्र।"क्षत्रंराजन्य"[10] । "क्षत्रस्यवाएतद्रुपंयद्राजन्य "[11] । क्षत्रियस्यगुणविषयेउक्तम्- क्षत्रियःशूरःपरोपकारीधनपालःकुशलःशासकःशत्र्दमनश्चभवेत्। "
प्रजानांरक्षणंदानमिज्याध्ययनमेवच।विषयेष्वप्रसक्तिश्चक्षत्रियस्यसमासतः "[12] । अर्थात् क्षत्रियस्य कर्म व्रह्मचर्यः वेदस्य अध्ययनं अग्निहोत्रयज्ञं कृत्वा सुपात्रे दानं जनरक्षणं जितेन्द्रियं प्रति असक्तः सन्।। क्षत्रियः शब्दस्य अर्थः क्षतात् त्रायते। गीतायां अपि उक्तम् शौर्यं तेनो धृतिर्दाक्ष्यं..अर्थात् शौर्य तेजः निपुणता कौशलं दानं शासनं क्षत्रियस्य स्वाभाविकं कर्म।"अयमस्तु धनपतिर्धनानामयं विशां विशपतिरस्तु राजा...कृणुहि शत्रुमस्य"[13] अर्थात् क्षत्रियः तावत् वीरः अदिवयः परोपकारी जनजीवनस्य वृत्तकौशलस्य च शत्रुदमनस्य च भवेत्।

**वैश्यः –**

वैश्यःविशःमनुष्यनाम्- योयत्रतत्रव्यवहारविद्यासुप्रविशतिसःवैश्यः।व्यवहारविद्याकुशलःजनोवा।वेदेवैश्यस्यकर्तव्यविषयेउक्तम्- वैश्यव्यापारकेन्द्रानिआलस्यंकार्यंकर्तुंप्रोत्साहयिष्यदानेननिरप्रेक्षान्जागरिष्यतिअर्थात्"इन्द्रमहंवणिजंचोदयामिसनऐतुपुरएतायो अस्तु। नुदान्नरतिंपरिपन्थितंमृगंसईशानोधनदाअस्तुमह्यम् "[14] । व्यापारेपरधनसाञ्चयिनः असीमान्दण्डयिष्यतिअर्थात् "पशूनांरक्षणंदानमिज्याध्ययनमेवच।वणिक्पथंकुसीदञ्चवैश्यस्यकृषिमेवच "[15] । पशुपालनंचविद्याधर्मस्य प्रचारप्रवर्धनप्रवर्धनयोः धनव्ययःअग्नियज्ञंकुरुतवेदानाम्अध्ययनम्सर्वविधव्यापारःवृद्यर्थंवित्तपोषनम्एतेवैश्यस्यगुनांकर्माणिच।अर्थात् आजीव्य विशन्ति इति वैश्य।

**शूद्रः –**

आशु द्रवति अर्थात् श्रमकुशलाः शूद्रा इति स्मृता। शोचनीयाः शोच्यांस्थितिमापन्नोवा सेवायां साधुरअविद्यादि गुणसहितोमनुष्योवाअर्थात्शूद्रःसएवयःअविद्यायाःकारणात्उन्नतिंनप्राप्नुयात्।यश्चहीनत्वात्स्वस्यउन्नतिंचिन्तयतिसःभगवतःपोषणंम न्यते।"असतोवाएषसम्भूतोयत्शूद्रः"[16] । "एकमेवतुशूद्रस्यप्रभुःकर्मसमादिशत्एतेषामेववर्णनांशुश्रूषांमनसूयया "[17] अर्थात्ब्राह्मणक्षत्रियवैश्यानांनिन्दांईर्षाअवमाननाचपरित्यज्यसम्यक्सेवांकर्तुंशूद्रस्यकर्तव्यम्।एतदेवशूद्रस्यतेनजीवनंचरितुंएकमेवगुनं कर्मच।मनुस्मृतौ उक्तम् –"एकमेव तु शूद्रस्य प्रभूः कर्म समादिशद् एतेषामेव वर्णनां शुश्रुषामनसूयया"[18] । शूद्रस्य कर्तव्य निन्दा ईर्षा च त्यक्ता वर्णत्रयं सेवितुं तेन जीवनं यापयति। एषःएव शूद्रस्य गुणः कर्तव्य।

**उपसंहारः -**

उपयुक्तंचर्चांदृष्ट्वावर्णव्यवस्थागुणवादंकर्मधारितंवर्णाश्रमधर्मंचपुनःपुनःवर्णयति।यद्यपिपूर्वजन्मकर्माधारेणईश्वरेणदत्तम्।वर्णःअस्माक म्स्वकीयःप्राधान्यःगुणानुसारंस्वीकृतःच। अतः गीतायां उक्तम् "चातुर्वण्यं मया सृष्टं गुणकर्मविभागशः" । वेदेषु जातिःकस्मिंश्चित्धर्मेनआश्रितः।शूद्राःअपिदैवतंप्राप्यउच्चतमपीठेस्थितवन्तःइतिबहुप्रमाणम्अस्ति।अतःअस्माभिःपुण्यवेदप्र

काशेनवर्णाश्रमव्यवस्थायाःनिर्माणंपुस्तिकातःपीडींयावत्कर्तव्यम्।वैदिकयुगस्यचन्यायंसमतावादीअभेदसमाजंस्थापयेत्।

## पादटिप्पणी

1. ऋ.वे. 10/13/1
2. निरुक्त 2/3
3. निरुक्त 2/13
4. ऋ.वे 10/90
5. यजु.वे. 18/48
6. अ.वे 13/32/8
7. ऋ.वे. 5/60/5
8. ऋ.वे 9/112/1
9. मनु.स 1/88
10. ऐ.ब्रा 8/6
11. श.ब्रा 13/1/5
12. म.सं 1/89
13. अ.वे 4/22/3
14. अ.वे 3/15/1
15. मनु.सं 1/90
16. तै.सं 3/2
17. म.सं 1/91

**Bibliography**


- Niruktam of Yāska, Ed. By Chhajjuram Shastri. New Delhi : Meharchanda Lachmandas Publication, 2016.
- Niruktam of Yāska, Ed. By Chndramani Vidyalankar. Delhi : Arya Kanya Gurukul Narela,
- ṚgṚ veda kā Subodhabhāṣyṣ a, Ed. By Sripad Damodar Satavlekar. Balsad : Swadhyay Mandal, Pardi, 1985.
- ṚgṚ vedabhāṣyṣ am, Ed. By Maharshi Dayananda Sarasvati. Delhi : Manav Utthan Sankalpa Sansthan Gautam Nagar, 2010.
- ṚgṚ vedasaṁhitā, Ed. By Vishvabandhu. Hoshiarpur : VVRI, 1965.
- Sāmaveda kā Subodhabhāṣyṣ a, Ed. By Sripad Damodar Satavlekar, Balsad : Swadhyay Mandal Pardi, 1985.
- Śatapathabrāhmaṇaṇ m, Ed. By Swami Satyaprakash. Delhi : Vijay Kumar Gobindaram Hasananda, 2010.
- Śatapathabrāhmaṇaṇ m with commentary of Sāyaṇaṇ , Ed. By Nag Publication. Delhi : Javahar
  Nagar, 1939.
- Tāṇḍṇ yḍ amahābrāhmaṇaṇ m with commentary of Sāyaṇaṇ , Ed. By Chaukhamba Sanskrit Sansthan. Varanasi : Chaukhamba Sanskrit Sansthan Publisher, 2002.
- Yajurveda kā Subodhabhāṣyṣ a, Ed. By Sripad Damodar Satavlekar. Balsad: Swadhyay Mandal Pardi, 1989.
- Yajurvedabhāṣyṣ am with commentary of Maharṣiṣ Dayānanda Sarasvatī, Ed. By Manav Utthan Sankalpa Sansthan. Delhi : Gautam Nagar, 2010.
- Aitareyabrāhmaṇaṇm, Ed. By Sudhakar Malaviya. Varanasi : Tara Book Agency, 2015.
- Aitareyāraṇyṇakam, Ed. By A. B. Kaith. Delhi : Eastern Book Linkers, 2005.
- Aitareyāraṇyṇakam, Ed. By Jamuna Pathak. Varanasi : Chaukhamba Krishnadas Academy,2013.


**************

**Volume XXI : January to June – 2023, ISSN 2250-1711**
**Journal of Veda Samskrita Academy [Recognised in the UGC-CARE List]**

# पाणिनीयतन्त्रे भूतपूर्वगतिमाश्रित्य केषाञ्चन सिद्धान्तानामालोचनम्

**Suman Das**
Ph. D. Scholar, Department of Sanskrit
Ramakrishna Mission Vidyamandira
Belur Math, Howrah-711202, West Bengal
Contact No. : 9609540676
E-mail : suman28das@gmail.com

भाषाविषयकं चिन्तनं वैदिकयुगादेव प्रचलितमिति सर्वसम्मतम्। भाषाया मूलं तत्त्वं वागिति कथयन्तो वैदिका ऋषयः अक्षरं पदं वाचं च वहुधा प्रयुक्तवन्तः। यथा- 'सहस्राक्षरा भुवनस्य पंक्तिः'(अथर्ववेदः ९.१०.२१), 'चत्वारि वाक्यपरिमिता पदानि'(ऋग्वेदः,१.१६४.४५)। भाषायां मूलत्वेन प्रयुज्यमानस्य तत्त्वस्य वाक्यस्य विश्लेषणेन पदानि लभ्यन्ते। पुनः पदविश्लेषणेन प्रकृतिप्रत्ययांशौ प्राप्येते। भाषायाः प्रयोग एव प्रथमत्वेन क्रियते तदनु शास्त्रीयं विश्लेषणं जायते। भाषाव्यवहारसमये यानि पदानि प्रयुज्यन्ते तेषां पदानां प्रकृतिप्रत्ययविभागपूर्वकं साधुत्वं प्रतिपादयति व्याकरणशास्त्रम्। हरिणा वाक्यपदीये कथ्यते- 'साधुत्वज्ञानविषया सैषा व्याकरणस्मृतिः'[1] इति।व्याकरणेषु प्राधान्यं पाणिनिव्याकरणं,तत्र लौकिकवैदिकोभयशब्दानां व्युत्पादितत्वात्। पदव्युत्पत्तये केचन उपायाः सूत्रकृता अवलम्बिताः। येन पदानां सिद्धिः सुष्ठु सम्पद्यते। केचन उपायाः यथा- अनुकर्षणम्, अनुवर्तनम्, प्रश्लेषः,योगविभागः, भूतपूर्वगतिश्चेत्यादयः। अन्येऽपि उपायाः शास्त्रमध्ये दृश्यन्ते।भूतपूर्वगतिरूपमुपायमाश्रित्य कुत्र राद्धान्ताः प्रदर्शिता इति शोधप्रबन्धस्यास्य आलोचितो विषयः।वर्तमानावस्थायाम् इष्टस्य कस्यचन धर्मस्याभावे प्रागवस्थामाश्रित्य कार्यस्य सिद्धिः क्रियते चेत् सा पद्धतिः भूतपूर्वगतिः। अधुना कानिचन उदाहरणानि प्रदर्श्यन्ते अधस्तात्।

- संयोगे परे ह्रस्वं गुरुसंज्ञं स्यिदिति 'संयोगे गुरु' इति सूत्रार्थः। यथा- शिक्षधातुरित्यत्र

शिक्षधातुघटकीभूतः इकारः गुरुसंज्ञकः संयोगस्य परत्वात्। ननु 'भेत्ता' इति पदं कथमुपपन्नम्। यतः 'भिद् ता' इत्यवस्थायां लघूपधामवलोक्य 'पुगन्तलघूपधस्य चे'त्यनुशासनेन गुणो न प्राप्नोति, धात्ववयवभूतदकारप्रत्ययावयवभूततकारयोः अव्यवधानेन तयोः 'हलोऽनन्तराः संयोगः' इति संयोगसंज्ञायां संयोगपरत्वेन 'भिद् ता' इत्यत्र इकारस्य 'संयोगे गुरु' इति गुरुसंज्ञायां लघूपधायाः अदर्शनात्। अत्र समाधीयते लघुशब्देन्दुशेखरकृता तदीये ग्रन्थे- 'भेत्ता इत्यादौ गुणस्य क्नोः कित्त्वसामर्थ्येन भूतपूर्वलघूपधग्रहणाद् बोध्यः'[2] इति। 'भिद्' इत्यत्र प्रत्ययविधानात् प्राक् यो लघूपधः तमाश्रित्य 'पुगन्तलघूपधस्य च' इति सूत्रेण लघूपधगुणे 'भेत्ता' इति रूपमुपपन्नं भवति। अत्र मानं 'त्रसिगृधिधृषिक्षिपेः क्नुः' इति सूत्रस्थस्य प्रत्ययस्य कित्करणम्। क्षिप्धातोः क्नुप्रत्यये क्षिप्नुः इत्यस्य सिद्धिः। क्नुप्रत्ययस्य कित्करणं कथं विहितमित्यत्रोत्तरं भवति 'क्ङिति च' इति गुणनिषेधाय । क्षिप्धात्ववयवपकारप्रत्ययावयवनकारयोः अव्यवधानेन तयोः संयोगसंज्ञायां संयोगपरत्वेन धात्ववयवेकारस्य गुरुसंज्ञायां लघूपधत्वाभावात् गुणस्याप्राप्तेः कथम् अप्राप्तगुणस्य निषेधसम्भवः। अतः लघूपधत्वाभावादेव गुणाप्राप्त्या कित्त्वस्य वैयर्थ्यं स्यात्। कित्करणं ज्ञापयति- भूतपूर्वलघूपधामाश्रित्य गुणस्य प्राप्तिर्भवति, तद्वारणाय कित्करणम्। अत्र कित्करणं भूतपूर्वावस्थामाश्रित्य कार्यसिद्धिं ज्ञापयति।

- 'नशेः षान्तस्य' इति णत्वनिषेधविधायकं सूत्रम्। नशेः षकारान्तस्य णकारादेशो न भवतीति

काशिकावृत्तौसूत्रार्थोपदिष्टः। अत्रोदाहरणं दर्शितं- प्रनष्टः। प्रनष्ट इत्यत्र 'उपसर्गादसमासेऽपि णोपदेशस्य' इत्यनेन प्राप्तस्य णत्वस्य प्रतिषेधः 'नशेः षान्तस्य' इत्यनेन विहितः। अत्र सूत्रे अन्तग्रहणप्रयोजनं किमिति विचारणीयम्। अन्तग्रहणमन्तरेणापि नशेः षः इति सूत्रशरीरे कृते 'येन विधिस्तदन्तस्य' इति तदन्तविधौ षान्तस्य इति लभ्यते। तर्हि कथम् अन्तपदं सूत्रकृता सूत्रशरीरे उपदिष्टम्। अन्तग्रहणतात्पर्यं काशिकावृत्तौ सुनिर्दिष्टम्- 'अन्तग्रहणं षान्तभूतपूर्वमात्रस्यापि यथा स्यात्- प्रनङ्क्ष्यति,परिनङ्क्ष्यति'[3]इति। तत्त्वबोधिन्यामाह- 'षस्येत्युक्तेऽपि पदस्येत्यस्य विशेषणेन षान्तस्येति लाभादन्तग्रहणं व्यर्थं सज्ज्ञापयतीत्याह-भूतपूर्व'[4] इति। 'णश अदर्शने' इति 'भूवादयो धातवः' इत्यनेन धातुसंज्ञायां 'णो नः' इति नियमेन णस्य नकारे 'नश्' इत्यवस्थायां प्रपूर्वकनशधातोः लृटि तिपि स्य-इत्यागमे 'मस्जिनशोर्झलि' इत्यनेन नुमागमे 'प्रनन्श् स्य ति' इत्यवस्थायां 'व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः' इत्यनेन षत्वे 'प्रनन्ष् स्य ति' इति कृते 'षढोः कः सि' इत्यनेन कत्वे 'प्रनन्क् स्यति' इति प्राप्ते 'आदेशप्रत्यययोः' इति नियमेन षत्वे 'नश्चापदान्तस्य झलि' इत्यनेन अनुस्वारे 'अनुस्वारस्य ययि परसवर्णः' इत्यनेन परसवर्णे 'प्रनङ्क्ष्यति' इति रूपं सिद्धं भवति। 'प्रनङ्क्ष्यति' इत्यत्र 'उपसर्गादसमासेऽपि णोपदेशस्य' इत्यनेन प्राप्तणत्वस्य निषेधः 'नशेः षान्तस्य' इति सूत्रस्थितेन अन्तग्रहणसामर्थ्येन। न्यासे कथितम्-

'पूर्ववत् षत्वे षढोः कः सि इति कत्वम्। अत्र यद्यन्तग्रहणं न क्रियेत,कत्वे षान्तता नास्तीति प्रतिषेधो न स्यात्। अस्मिंस्तु सति कत्वेऽपि कृते भवति। एतदेव हि तस्य प्रयोजनम्- भूतपूर्वेऽपि षान्ते प्रतिषेधो यथा स्यात्'[5]।

भाष्यकृता भाषितम्-

' इह पुनर्नशेः षः इतीयता सिद्धं,सोऽयमेवं सिद्धे सति यदन्तग्रहणं करोति तस्यैतत्प्रयोजनं षान्तभूतपूर्वस्यापि यथा स्यात्।[6]'

- 'उगिदचां सर्वनामस्थानेऽधातोः' इति सूत्रे अधातुग्रहणाभावे उगितो धातोरपि नुम् स्यात्। उगितो

धातोःनुमिसिद्धेसूत्रे अञ्चुधातोरपि नुमसिद्धो भवति। पुनः सूत्रे अञ्चुग्रहणं व्यर्थीभूय ज्ञापयति-'धातोश्चेदुगित्कार्यं तर्ह्यञ्चतेरेव' इति। अतः स्रंसु ध्वंसु चेत्यादिभ्यो उगिद्धातुभ्यो नुमः अप्राप्तिः। अञ्चुधातोरेव उगित्कार्यमिति ज्ञापनेन अनेभ्यो धातुभ्यः उगित्कार्यं निवारितं स्यात्। अतः सूत्रे अधातुग्रहणं निरर्थकम्। अधातुग्रहणं ज्ञापयति -साम्प्रतिकाभावे भूतपूर्वगतिः इति। अधातुग्रहणसार्थ्यात् अयमर्थः आयाति- यः शब्दः इदानीं धातुस्वरूपः किन्तु प्राक् अधातुरासीत् ततोऽपि नुम् सिध्यति। तेन गोमन्तमिच्छति विग्रहे 'गोमत् अम्' इत्यस्मात् 'सुप आत्मनः क्यच्' इति क्यचि धातुत्वे तदवयवस्य सुपो लुकि 'गोमत्य' इत्यस्मात् क्विपि अनुबन्धलोपेऽतो लोपे 'लोपो व्योर्वलि' इति यलोपे गोमत् इत्यस्य कृदन्तत्वात् प्रातिपदिकत्वे सौ 'गोमत् सु' इत्यवस्थायां 'क्विबन्ता विजन्ताश्च प्रातिपदिकत्वं न जहति धातुत्वमपि न मुञ्चति' इति सिद्धान्तेन साम्प्रतिकाधातुत्वाभावेऽपि भूतपूर्वाधातुत्वमादाय नुम् सिद्यति। 'उदिगचां सर्वनामस्थानेऽधातोः' इति सूत्रभाष्ये लिखितम्-

"अधातोरिति किमर्थम्। उखास्रत्,पर्णध्वत्। अधातोरिति शक्यमवक्तुम्। कस्मान्न भवति- उखास्रत् पर्णध्वदिति।

उगित्यञ्चतिग्रहणात् सिद्धमधातोः(वा)। उगित्यञ्चतिग्रहणादधातोः सिद्धम्। अञ्चतिग्रहणं नियमार्थं भविष्यति-अञ्चतेरेवोगितो धातोर्नान्यस्योगितो धातोरिति। इदं तर्हि प्रयोजनमधातुभूतपूर्वस्यापि यथा स्यात्। गोमन्तमिच्छति गोमत्यति गोमत्यतेरप्रत्ययो गोमानिति।"[7]

- बहुव्रीहिसमासे पूर्वनिपातालोचनावसरे सप्तमीविशेषणे बहुव्रीहौ इति सूत्रस्थभाष्यादौ एकं वार्तिकं पठितम्- 'सर्वनामसंख्ययोरुपसंख्यानं कर्तव्यमिति'। अस्य वार्तिकस्यार्थः खलु बहुव्रीहिसमासे सर्वनाम्नः तथा संख्यायाः पूर्वनिपातो भवति। सर्वनाम्नः उदाहरणं दीक्षितेन प्रदर्शितम्- सर्वश्वेतः। अस्य विग्रहः खलु- सर्वः श्वेतः यस्य।अत्र सर्वशब्दस्य सर्वनामसंज्ञाविधानात् उपर्युक्तेन वार्तिकेन सर्वशब्दस्य पूर्वनिपाते सर्वश्वेतः इति रूपं सिद्ध्यति । उत्पद्यते शङ्का साम्प्रतम्- बहुवीहौ सर्वोपसर्जनत्वाद् अन्यपदार्थस्य प्राधान्यात् सर्वशब्दस्य सर्वनामत्वस्य हानौ कथं सर्वनामसंख्ययोरुपसंख्यानम् इति वार्तिकेन सर्वनामत्वमाश्रित्य सर्वशब्दस्य पूर्वनिपातः सम्भवतीति चेत् उपसर्जनत्वेऽपि भूतपूर्वगत्या सर्वनामत्वम्।

- दिङ्नामन्यन्तराले इति बहुव्रीहिसमासविधायकं सूत्रम्। काशिकावृत्तौ सूत्रार्थो निर्दिश्यते –

'दिङ्नामानि सुबन्तानि अन्तराले वाच्ये समस्यते, बहुव्रीहिश्च समासो भवति'। अत्रोदाहरणम्- दक्षिणपूर्वा। 'दक्षिणस्याः च पूर्वस्याः च अन्तरालम्' इति लौकिकविग्रहे 'दक्षिणा ङस् पूर्वा ङस्' इति अलौकिकविग्रहे 'दिङ्नामान्यन्तराले' इति सूत्रेण बहुव्रीहिसमासे प्रातिपदिकसंज्ञायाम् सुब्लुकि 'सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः' इति भाष्यवार्तिकेन 'दक्षिणपूर्व' इति जाते लोकव्यवहारात् सामासिकशब्दस्य स्त्रीलिङ्गे टापि 'दक्षिणपूर्वा' इति जाते सुविभक्तौ विभक्तिकार्ये 'दक्षिणपूर्वा' इति पदं सिद्धम्। उदाहरणेऽस्मिन् शङ्कैका उत्पादिता- 'वृत्तिमात्रे सर्वनाम्नः पुंवद्भावो' भवतीति नियमः,किन्तु दक्षिणा, पूर्वा चेति बहुव्रीहिसमासघटकीभूतपदयोः असमासस्थले सर्वनामत्वाक्षुण्णत्वेऽपि बहुव्रीहौ सर्वोपसर्जनत्वात् दक्षिणा पूर्वा चेति पदयोः सर्वनामसंज्ञायाः विरहात् पुंवद्भावो न कदापि भविष्यति।तर्हि कथं सर्वनामत्वमाश्रित्य पुंवद्भावः क्रियते।अत्रापि समाधानं भवति- भूतपूर्वसर्वनामतामाश्रित्य पुंवत्त्वं कृतम्। बालमनोरमाकृता लिखितम्-

'यद्यप्युपसर्जनत्वान्न सर्वनामत्वम्। तथापि भूतपूर्वगत्या सर्वनामत्वमादाय पुंवत्त्वं भवति।'[8]

नामि, अनचि च,जुसि च इत्यादिसूत्रेष्वपि उपायोऽयमाश्रितः।

**उपसंहारः-**

व्याकरणस्य महत्त्वं सर्वातिशायि वर्तते इति विदुषां नाविदितम्। व्याकरणशास्त्रेणैव शब्दानां साधुत्वासाधुत्वविज्ञानं सम्भवति। अद्यत्वे तु शब्दस्य साधुत्वासाधुत्वव्यवस्था पाणिनिव्याकरणशास्त्रानुसारेणैव सर्वामान्याऽस्ति। व्याकरणशास्त्रे खलु लक्ष्यं दृष्ट्वा लक्षणं कृतमस्ति। लक्ष्ये लक्षणानां समन्वये बहवः मार्गाः आश्रिताः अष्टाध्यायीकृता। शब्दसाधुतानिर्वाहनाय भूतपूर्वगतिरिति महान् उपायः सूत्रकृता सुकल्पितः। येनोपायेन अनेकानां शब्दानामुत्पत्तिः सुष्ठु सम्पादिता।

**पादटिप्पणी-**

१.वाक्यपदीयम्(ब्रह्मकाण्डम्)।कारिका-१४२।

२.लघुशब्देन्दुशेखरः(संज्ञाप्रकरणम्)।पृष्ठा-२०८।

३.काशिका(दशमभागः)।पृष्ठा-४४७।

४. वैयाकरणसिद्धान्तकौमुदी(तृतीयो भागः)। पृष्टा- ३३७।

५. काशिका(दशमभागः)।पृष्ठा-४४७।

६.महाभाष्यम्(षष्ठो भागः)। पृष्ठा-२२७।

७. महाभाष्यम्()।पृष्ठा-६२।

८. वैयाकरणसिद्धान्तकौमुदी(द्वितीयो भागः)। पृष्ठा-१५७।

**परिशीलितग्रन्थसूची-**

१. पतञ्जलिः। महाभाष्यम्। सम्पा.श्रीभार्गवशास्त्री जोशी।दिल्ली चौखम्बा संस्कृत प्रतिष्ठान।२००७।

२. वामनजयादित्य । काशिका। सम्पा. जयशङ्करलालात्रिपाठी। वाराणसी: तारा वुक एजेन्सी,२०००।

३. भर्तृहरिः। वाक्यपदीयम्(ब्रह्मकाण्डम्)।सम्पा.सूर्यनारायणशुक्ल,रामगोविन्दशुक्ल।वाराणसी: चौखम्बा संस्कृत संस्थान।२०१९।

४. नागेशभट्टः। लघुशब्देन्दुशेखरः। सम्पा.विश्वनाथमिश्रः।वाराणसी: चौखम्बा सुरभारती प्रकाशन।२०१७।

५. भट्टोजिदीक्षितः। वैयाकरणसिद्धान्तकौमुदी(द्वितीयो भागः)। सम्पा. गिरिधरशर्मा परमेश्वरानन्दशर्मा। दिल्ली: मोतिलाल बनारसीदास।२०१७।

६. भट्टोजिदीक्षितः। वैयाकरणसिद्धान्तकौमुदी(तृतीयो भागः)। सम्पा. गिरिधरशर्मा परमेश्वरानन्दशर्मा। दिल्ली: मोतिलाल बनारसीदास।२०११।

*********

**Volume XXI : January to June – 2023, ISSN 2250-1711**
**Journal of Veda Samskrita Academy [Recognised in the UGC-CARE List]**

# सुसंगठितजीवनप्राप्तये आयुर्वेदः – एकं सामान्यमध्ययनम्

**Manash Mondal**
Research Scholar, Sanskrit Department
Tilak Manjhi Bhagalpur University,
Bhagalpur, Bihar-812007
Contact No. : 9564886260
E-mail : manashmondal82@gmail.com

**भूमिका –**

एवमनुश्रुयते यद् ऋग्वेदाद् ज्ञानं यजुर्वेदादुत्तमानि कर्माणि सामवेदाच्चोपासनामार्गो दर्शितः। एतेषां त्रयाणाम् अपि उत्तमरीत्या ज्ञानप्राप्तये अथर्ववेद एव सहायको भवति। अत एवायं वेदः ब्रह्मवेदः आत्मवेदोऽमृतवेदो वा चतुर्थवेदनाम्ना ज्ञायते। अमृतवेदः इति विषये गोपथब्राह्मणे उच्यते –

**'एतद्वै भूयिष्ठं ब्रह्म यद् भृग्वङ्गिरसः। येऽङ्गिरसः स रसः। येऽथर्वाणस्तद्भेषजम्। यद्भेषजं तदमृतम्। यदमृदं तद्ब्रह्म।।'**[1]

विवेचनानुसारम् व्युत्पत्त्यनुसारं चअथर्वशब्दस्य वेदस्यास्य ज्ञानक्षेत्रविस्तारोऽपि दर्शितः। आत्मनो ज्ञानं स्वसामीप्यमेव विद्यते तत एव च ज्ञातुं शक्यत इत्यथर्ववेदस्य ज्ञानक्षेत्रं समायाति। अथर्वन् शब्दस्य व्युत्पत्तावपि परमेतत् शरीरं प्रति इत्यर्थः प्रतिपादितः। तत्रापि शरीरादेव देव शक्तिलाभो भवतीति दृष्ठ्या नीरोगतोपलब्धिविषयमन्त्रास्तीति प्रतीयते। थर्वशब्दस्यार्थः चञ्चला विद्यते। एतेन ज्ञायते यद् शान्तेरेकाग्रतायाः प्रतिपादकोऽयं वेद इति।

**आयुर्वेददिशा स्वास्थ्यम् –**

वदेषु आध्यात्मिकम् आधिदैविकम् आधिभौतिकञ्च सर्वमपि ज्ञानं सुप्रतिपादितमस्ति। विशेषतश्च अर्थर्ववेदे सर्वविधानां कर्मजव्याधीनाम् जीवननिर्माणविषयाणां च विचारः दृश्यते। व्याधीनां निवारणस्य सुक्तानि अपि विद्यन्ते। अत एव 'अथर्ववेदे सामानिभैषजा यजूंषि'[2] इत्युक्तम्। गोपथब्राह्मणस्य पूर्वार्चे कथयति –

**'योऽथर्वाणस्तद् भेषजं तदमृतं तद्ब्रह्म।'**[3]

इति अनुवाकः इदं प्रमाणयति यत् अथर्ववेदे सर्वेषामपि शारीरिक-मानसिक-आत्मिक-रोगाणां निवृत्तेः उपायाः प्रदर्शिताः सन्ति। ताण्ड्यब्राह्मणेऽपि कथितमस्ति यत् भेषजं वा आथर्वणानि। तत्रैव उक्तं यत् अथर्वऋषिभिः दृष्टाः अथर्ववेदमन्त्राः देवेभ्यः भेषजप्रतिपादकाः विद्यन्ते। येभ्य आरोग्यं लभ्यते। यथा –

**'भेषजं वै दैवानामथर्वाणः भेषज्यायैवादिष्टै'**[4]

भेषज्यस्य प्राचुर्यात् आर्युर्वेदस्य उद्गमस्थलम् अथर्ववेद एव मन्यते यथोक्तं सुश्रुतस्य सूत्रस्थाने –**'इह खल्वायुर्वेदानां यदुपाङ्गमथर्ववेदस्य'**[5]

अथर्ववेदे पदार्थविज्ञानं मनोविज्ञानं कर्मजव्याधिविज्ञानम् आयुर्विज्ञानं चिकित्साविज्ञानञ्च बहुधा वर्णितं दृश्यते। सहैव आधीनाम् व्याधीनां च निवारणप्रयोगाः अपि वर्णिता वर्तन्ते। आयुर्वेदविषयकानि विविध-औषधि-भैषज्यादि-विषयकाणि बहुनि सूक्तानि विद्यन्ते। एतैः सह अन्येषाम् अनिष्टानां निवारणाय अपि अनेकानि सूक्तानि सन्ति।

अथ च अथर्ववेदे शरीरस्योत्पत्तिः, उत्पत्तैर्मूलतत्वानि, शरीरस्य विकासकधातवः, शरीरस्याधारस्थानं, शरीरस्य वृद्धिक्रमः,

शारीरिकाणां बाह्याङ्गानां परिगणनम्, आन्तरिकीणां सूक्ष्मवृत्तीनां निर्देशः, गर्भो गर्भस्य च स्थितिः, प्रसूतिवर्णनं चेति शरीरस्य सुरक्षा सम्बन्धिनामुपचाराणां च प्रतिपादकः विषयो वर्तते।

शरीरस्योत्पत्तिमधिकृत्याथर्ववेदे कथितमस्ति यद् शरीरस्याधिष्ठाता जीवो नित्यः। यदाऽकाशीयाः ग्रहाः नक्षत्रादयश्चोत्पन्नाः बभूवस्तदा जीवो मोहवशात् कर्मानुसारं मनुष्य-पशु-प्रभृतियोनिषु उत्पन्नः। रस-मांसादयः सप्त धातवः शरीरस्य अवयवाः सन्ति तैरेव शरीरं निष्पन्नम्।

अथर्ववेदे दर्शितमस्ति यद् वात-पित्त-कफ-रस-रक्त-मांसमेदोऽस्ति मज्जा-शुक्रादयो ये सप्त धातवः सन्ति ते शरीरस्य निर्माणं कुर्वन्ति।

**जीवशरीरम् –**

वेदेषु उपनिषत्सु च मानवस्य शरीरं ब्रह्मपुरी इति निगदितम्। अस्यां पुर्यां निवासकारणादेव ब्रह्मणं पुरुषम् इति कथयन्ति। यथा –

**'ऊर्ध्वो नु सृष्टा स्तिर्य नु सृष्टा सर्वा दिशः पुरुष वा बभूव। पुरं यो ब्रह्मणो वेद यस्याः पुरुष उच्यते।।'**[6]

इदं मानवशरीरम् अमृतेन आवृत्ता विद्यते। अस्या आधारश्च अमृतमेव विद्यत इत्यपि तत्रैव प्रतिपादितमस्ति –

**'यो वै तां ब्रह्मणो वेदाऽमृतेनावृतां पुरम्।'**[7]

अथर्ववेदस्योपदेशोऽस्ति यत् स्वकीये क्षेत्रे नीरोगा भूत्वा तिष्ठन्तु। इदं शरीरं केनापि आध्यात्मिकेन आधिदैविकेन आधिभौतिकेन वा रोगेण क्लिष्टा मा भवन्तु। दैहिक-दैविक-भौतिकत्रितापा एव व्याधयः सन्ति यैः प्राणिनः सन्तप्ता वसन्ति –

**'स्वे क्षेत्रे अमीषा वि राज'**[8]

शरीरस्य आरोग्याय व्याधिनाम् निवृत्तये भारतीयवैदिकीचिकित्सापद्धतिः त्रिविधा विद्यते –

1. आसुरी चिकित्सा – शल्यक्रियारूपिणी
2. मानुषी चिकित्सा – औषधिरूपिणी
3. दैवी चिकित्सा – प्राणायाम-योग-हवन-जपानुष्ठान-मणिबन्धनादिरूपिणी

एतासु आसुरी चिकित्सा न उत्तमा मन्यते। मानुषी-चिकित्सा-पद्धतिपूर्वकम् औषधानां सेवनात् शरीरस्थानां रसानां जीर्णता दूरी भवति, नवीनायाः शक्तेः संचारो भवति स्थायी प्रभावश्च वर्धते। इयं पद्धतिरुत्तमा मन्यते यतोऽनया पद्धत्या न केवलं शरीरमेव शुद्ध्यति परं सहैव मनसोऽपि शुद्धिभवति ततश्च शरीरं सुसंस्कृतं सुदृढं स्वास्थ्यपूर्णं पवित्रं च सम्पद्यते।

प्रकृतिस्थायामवस्थायां सत्यां शरीरं पालयन्ति कुपितायां च स्थितौ शरीरं रोगिणं विदधति, मारयन्ति। एते वात-पित्त-कफादयः शरीरं व्याप्य सदा तिष्ठन्ति।

अथर्ववेदे वर्णितमस्ति यद् जीवात्मनः चेतनाशक्तेः प्रेरितः प्राणो हृदये प्रविष्टः सन् रक्तवाहिनीनां नाडीनां रक्ताशयान् भूयः भूयः कम्पयति। तासु भ्रमन् रक्तो जीवात्मनः स्थिरतायाः जीवनस्य कारणं भवति। स प्राणो रक्तं पूर्वस्माद् रक्ताशयाद् द्वितीयस्मिन् रक्ताशयेऽगणितसूक्ष्मतन्तुशालिना मार्गेण प्रेरयति। एवमेवानेकानेकमार्गेन रक्तसञ्चारो नियतरूपेण प्रचलन्नेव दृश्यते। रक्ताशयानां माध्यमेन गमनागमनायां जीवस्य शरीरेण सह सम्बन्धः स्थिरतां गच्छति। अयमेव शरीरस्य आधारस्तम्भः।

शरीरे क्रोध-भय-चिन्ता-शंका-प्रभृतीनां मानसिकविकारसमुत्पन्नानां चतुर्विंशिप्रकारकाणां विषाणामुत्पत्तिर्भवति। तानि विषाणि उपाकृत्य शारीरिक-नाडीनां विशुद्धिं विधाय शरीरस्य निर्विषत्वसाधनाय दैवी चिकित्साप्रणाली विद्यते। तया सहैव स्थूलानां रोगाणां चिकित्सा नानाविधैरोषधिविशेषैः संसाध्यते। इयमौषधिविशेषसाध्या चिकित्सा मूलरूपेण अथर्ववेदादेव प्रवृत्तेति कथने नास्ति कोऽपि संशयः।

अथर्ववेदोक्तानां विभिन्नानाम् विज्ञानानां ज्ञाने चिकित्साविज्ञानमपि समाविशति। उच्यते –

**'विषितं ते वस्तिबिलं समुद्रस्योदधेरिव। एवा ते मूत्रं मुच्यतां बहिर्वालिति सर्वकम्।।'**[9]

ऋग्वेदे दशमे मण्डले एकसप्ततितमस्य सूक्तस्य पञ्चमे –

**'उत त्वं तस्यै स्थिरपीतमाहुनेन हिन्वन्त्यपि वाजिनेषु। धेन्वा चरति माययैव वाचं शुश्रुवां सकलामपुष्पाम्।।'**[10]

इति मन्त्रैः वेदिक्याः वाचः फलपुष्पवत्वं प्रतिपादितम्। तत्र पत्रं भौतिकं विज्ञानं, पुष्पं दैविकं विज्ञानं, फलञ्च आत्मिकं विज्ञानं भवतीति निरुक्तकारस्य यास्कस्य अध्यात्माधिदैवते वाचः पुष्पं फले इति व्याख्यानतः अवगम्यते। इदं भौतिकं विज्ञानम् आयुर्वेदिकमपि सम्भवति। आयुर्वैदिके हि भौतिकानां द्रव्याणां पृथिव्या औषधीनाम्, अन्वेषामपि अप्तेजोवाय्वाकाशानामपि भूतानाम् औषधोपचारतया प्रयोगः प्रदृश्यते। यथा वृक्षस्य पत्राणि छायाप्रदानेन श्रान्तान् पथिकान् सुखयन्ति तथैव भौतिकविज्ञानं क्लान्तानां प्राणिनाम् आरोग्यजीवनप्रदानेन कल्याणाय कल्पते।

**उपसंहारः –**

आयुर्वेदस्य समस्तप्राणिनां जीवने नितान्तं आवश्यकता विद्यते। यथा यः स्वस्थः विद्यते स तद् विषये स्थैर्यं वाञ्छति क्रमशः शक्तिं प्राप्तुं चेष्टते। वयोजन्या विकारा अपि न व्यथयेयुः इति सर्वेषाम् अभीप्सितम्। यो रोगी वर्तते स रोगनिवृत्तिं कामयते। रोगविनाशानन्तरं पुनस्ते रोगा न भवेयुरित्यपि तस्य कामना भवति। शरीरस्य शिथिलताया निवारणाय महत्याः स्फूर्तेश्च संचारा य सर्वदा तत्परा भवन्ति। इयं प्रवृत्तिर्मानवमात्रस्य स्वाभाविकी।

सुसंगठितजीवनप्राप्तये अस्य आयुर्वेदस्य उपयोगिता सर्वैः स्वीक्रियत एव। न केवलं भारतीया एव अपि तु विश्वस्य सर्वे प्राणिनस्तत्र विश्वसन्ति इति शम्।

**पादटीका–**

1. गोपथब्राह्मणम् 3-4
2. अथर्ववेदः 11-6-14
3. गोपथब्राह्मणम् – ¾
4. ताण्ड्यब्राह्मणम् – 12-6-10, 16-10-10
5. सुश्रुतसूत्रम् 1-6-7
6. अथर्ववेदः 10-2-28
7. अथर्ववेदः 10/2/29-30

8. अथर्ववेदः 11/1/22
9. अथर्ववेदः 1/3/8
10. ऋग्वेदः 10/71

**सन्दर्भग्रन्थसूची –**


- ऋग्वेदसायणभाष्य, श्रीराम शर्मा आचार्य, सनातनधर्मयन्त्रालय, मुरादावाद, 1986
- ऋग्वेदः, आर्यसाहित्य मण्डल लि., अजमेर, 1936
- अथर्वपरिशिष्ट, जार्ज मैलक्कि, बोलिंग-मुद्रित, 1909
- आयुर्वेद का संक्षिप्त इतिहास, महेन्द्रनाथ शास्त्री, हिन्दी ज्ञान मन्दिर लिमिटेड, वम्बई, 1985
- आयुर्वेद का इतिहास, सूरमचन्द्र वी. ए., लो. वाजार, शिमला
- चिकित्सा कलिका, तोसटाचार्यकृत, वैधसारथि मुद्रणालय, 1950
- अथर्ववेदीय चिकित्साशास्त्र, स्वामी ब्रह्ममुनि परिव्राजक, जन ज्ञान हिन्दी मासिक, जुलाई-अगस्त, 1974
- वेदो में आयुर्वेद, वैद्य रामगोपालशास्त्री, मदनमोहन लाल आयुर्वैदिक अनुसन्धान ट्रस्ट, दिल्ली 1956
- चरकसंहिता, आयुर्वेददीपिका सहिता, काशीनाथ शास्त्री, स. गंगासहायपाण्डेय, चौखम्बा संस्कृत संस्थान, वाराणसी, 2007
- भैषज्यरत्नावली, विद्योतनी टीका, गोविन्द दास, अम्बिकादत्तशास्त्री, चौखम्बा संस्कृत संस्थान, वाराणसी, 1997


***********

**Volume XXI : January to June – 2023, ISSN 2250-1711**
**Journal of Veda Samskrita Academy [Recognised in the UGC-CARE List]**

# यतीन्द्रविमलचतुर्धुरीणरचितयोः यतीन्द्रविमल-भारतविवेक-नाटकयोः प्रपञ्चितं धर्मतत्त्वम्

**Dr. Santu Singha**
Assistant Professor, Dept. of Sanskrit
Bankura University
P.O.: Purandarpu- 722155, Bankura, West Bengal
Contact No. : 8017018043
E-mail : santusingha03@gmail.com

**भूमिका** –अर्वाचीनसंस्कृतकाव्यकारेषु अनन्यो हि यतीन्द्रविमलचतुर्धुरीणः। स हि वङ्गवास्तव्यः। तेन बहूनि नाटकानि रचितानि। प्रायशः तेन महापुरुषाणां जीवनचरितमाश्रित्य नाटकानि रचितानि। तेन श्रीराकृष्णदेवं, स्वामिविवेकानन्दं, रामानुजाचार्यं, मीरावाई- महाभागां, सारदादेवीम्, अरविन्दं चाश्रित्य नैकानि नाटकानि रचितानि। तेषु रामानुजाचार्यं तथा स्वामिविवेकानन्दम् आश्रित्य नाटकद्वयं हि यतीन्द्रविमलम् इति भारतविवेकम् इति च। अधुना प्रकृते प्रबन्धे नाटकद्वये कथं धर्मतत्त्वं तेन कविना प्रपञ्चितं तदेव समालोच्यते यथामति। यतीन्द्रविमलकविरचितेषु रूपकेषु तत्कालीनपारिवेशकप्रभावेण समं तत्कालीनधार्मिकप्रभावो दृश्यते। तत्रापि रूपकेषु यदि लोकनायकाश्रितं रूपकं स्यात्तर्हि निश्चिततया तत्र धर्मप्रभावः स्यादेव। तथा च, यतीन्द्रविमलचतुर्धुरीणरचितरूपकेषु नैकानि रूपकाणि लोकनायकं लोकनायिका चाश्रित्य रचितानीति तेषु धर्मप्रभावः भवेदेवेति। तेषु अपि यतीनद्ररचितेषु लोकनायकाश्रितेषु भारतविवेकं यतीन्द्रविमलं इत्यनयोः नाटकयोः तत्कालीनधर्मतत्त्वप्रभावो भूयसा संलक्ष्यते। तत्र प्रपञ्चितं धर्मतत्त्वं त्रिधा उपस्थापयितुं शक्यते – 1. धार्मिकविश्वासः, 2. धर्मिकाचारः 3. धार्मिकविचारश्च।
अधो यतीन्द्रविमलम् इति भारतविवेकम् इति च नाटकद्वयमाश्रित्य धर्मतत्त्वमुपस्थाप्यते –

**धार्मिकविश्वासः –**

यतीन्द्रविरचिते यतीन्द्रविमले भारतविवेके च बहूनां धार्मिकविश्वासानामुल्लेखो दृश्यते। तत्र धर्मानुरूपं कार्यं हि पुण्यम्, तद्विपरीतं च पापमित्युच्यते। किञ्च, धर्मविपरीतचिन्तनमपि पापमित्यपि उल्लिख्यते - **पापजनकमेतद्वच इति नात्र संशयलेशो मे।**[1] इति।

यतीन्द्रविमलरचिते यतीन्द्रविमले दृश्यते ब्रह्मराक्षसेन ग्रस्ता राजकुमारी तथा श्रीरामानुजाचार्यनुरोधाद् ब्रह्मराक्षसेन त्यक्ता। इत्थं हि यतीन्द्रविमले तदीयरूपके लौकिकविश्वासस्यापि स्थानं दृश्यते। व्यक्तिविशेषे ईश्वरसत्तारोपः अपि कश्चन धार्मिकविश्वासः। स च यतीन्द्रविमलेन भारतविवेके न्यक्कृतः। तथाहि तत्र उक्तम् –

**मानवशरीरे भागवतसत्तारोपं नाहं कदापि स्वीकरिष्यामि। धिङ्मम विद्यां यदित्थमपप्रलापमिवाहं कृतवान्। धिङ्माम्।।**[2] इति।

भारतविवेके केषाञ्चिद् धार्मिकविश्वास उपस्थापितो दृश्यते। तेषां नये ईश्वराविश्वासिनो न शान्तिमुपगच्छन्ति कदाचन। किन्तु ते हि निराशावन्तः भवन्ति –

**एतदीश्वरविश्वासि पदं शान्तेरनाकुलम् । आश्वासस्थानमेतच्च निराशानां स्वजीवने।।**[3] इति।

श्रीरामकृष्णेन उक्तं यद्देवी माता तं यथाज्ञापयति तथा कुरुते, यथा दर्शयति तथेक्षते, माता न कदापि तं कुपथे प्रचालयेत्कदापीति। एतद्धि धार्मिकविश्वासस्य अनन्यमुदाहरणम्। तथाहि भारतविवेके श्रीरामकृष्णेन उक्तम् –

**नरेन्द्र, किमहं करिष्यामि। माता यथा निर्दिशति, तथैवाहं वदामि। यथा दर्शयति तथा पश्यामि। मातृनिर्देशक्रमेणैव सर्वं करोमि च।**

**..... विश्वसिहि नरेन्द्र, नाहं किमपि करोमि। माता सर्वं कारयति। ..... न मम माता कदापि मां विपथे चालयति।**[4] इति।

**धार्मिकाचारः –**

यतीन्द्रविमलरचितयोः नाटकयोः भारतविवेकम्, यतीन्द्रविमलम् इत्यनयोः बहुधा धार्मिकाचारानुष्ठानं संलक्ष्यते। यथा यतीन्द्रविमलनाटके वामकर्णेन गुरुमुखात् मन्त्रग्रहणरूप-दीक्षाग्रहणं दृश्यते। अयं हि कश्चन प्रसिद्धः धार्मिकाचारः। अपरतश्च, वैष्णवानाम् अनन्यो धार्मिकाचारो हि तिलकधारणम्। तथा च, यतीन्द्रविमलनाटके वैष्णवरीतिमाश्रित्य शरीरे विष्णोर्भगवतः शङ्ख-चक्र-गदादीनां चिह्नानाम् अङ्कनप्रसङ्गः उल्लिखितो दृश्यते। अयमपि वैष्णवानां विशेषः कश्चन धार्मिकाचारः। देवदेवीनां नामजपं, स्तुतिश्च धार्मिकाचारान्तर्गता। तथा च, भारतविवेकनाटके बहुधा देवीस्तुतिर्दृश्यते। तथाहि क्वचिद् भगवता श्रीरामकृष्णेन गीयते –

**जयति जयति यतिजनगतिजननी भवतारिणी नियतविहितसुतशतहितबन्धमोक्षसाधिनी।**

**गृहशतशतविचरणरतकोटिदुःखहारिणी ममताघनकरुणनयनतृपितशान्तिकारिणी।।**[5] इति।

**इच्छाजातं तव सर्वम् इच्छामयी तारासि त्वम्।**

**त्व कर्म करोषि त्वमम्ब। लोको वदति करोम्यहम्।।**[6] इति। क्वचिद् श्रीरामकृष्णशिष्येण विवेकानन्देन गीयते –

**मनो निभृतं पश्य श्यामाजननीम्। श्मशानवासिनीं नृमुण्डमालिनीं**

**हिमाचलनन्दिनीं विश्वपालिनीम्।।**[7] इति। क्वचिद् भावपूर्णः श्रीरामकृष्णः नृत्यन् गायति।

**धार्मिकविचारः-**

यतीन्द्रविमलरचितरूपकेषु यत्र तत्र धार्मिकविचारो वरीवर्ति। तथा च, तद्रचितयोः भारतविवेक-यतीन्द्रविमलनाटकयोः वैष्णवमूलको धार्मिकविचारो दृश्यते। तदनुसारं वैष्णवमूलकविचारः अध उपस्थाप्यते –

वैष्णवमूलकविचारः प्राधान्येन त्रिषु स्तरेषु विभज्यते – भगवान् अथवा भगवद्भक्तिः, गुरुः ज्ञानं च। यतीन्द्रविमलरचितेषु नाटकेषु यानि वैष्णवनायकाश्रितानि तत्र यथा वैष्णवधर्मविचारः दृश्यते तथा यानि न वैष्णवनायकाश्रितानि नाटकानि तत्रापि तादृशविचार उपलभ्यते। यतीन्द्ररूपकेषु बहुत्र भगवद्भक्त्या आप्लुतः भक्तः गीतं गायन् नृत्यति। किञ्च, भक्तस्य विश्वासः भगवद्भक्त्या सर्वं हि प्राप्तुं शक्यते भक्तेन –

**यस्य प्रसादकलया वधिरः श्रृणोति पङ्गुः प्रधावति जवेन च वक्ति मूकः।**

**अन्धः प्रपश्यति सुतं लभते च बन्ध्या तं देवमेव वरदं शरणं गतोऽस्मि।।**[8] इति।

किञ्च, भारतविवेकनाटके अपि भगवद्भक्तस्य भक्तिपरिपूर्णस्य भगवतः शक्तिर्वर्णिता –

**करिणं बध्नासि पङ्के पङ्गुं लङ्घयसि गिरिम्। कस्मैचन ब्रह्मपदार्पणं करोष्यन्यमधोगामिनम्।।**[9] इति।

नरेन्द्रः भगवद्विषये रामकृष्णः पृच्छति – ईश्वरः अनन्तो वा, कथं तत्स्वरूपं निर्णेतुं शक्यते, ईश्वरश्चेत्सर्वेषां हृदि तिष्ठति कथं न उपलभ्यते – **ईश्वरः अनन्तः। तस्य स्वरूपनिर्णये कथं वयं समर्था भवामः। ईश्वरो वर्तते सर्वेषां हृद्देशेष जनविशेषं कथं स स्वकात्मना परिगृह्णीयात्।**[10] इति

श्रीरामकृष्णो ब्रूते ईश्वरो राजते सर्वत्र। परं तस्य शक्तेः प्रकाशः सर्वत्र न समानः। भगवान् कुत्रचिद् अविद्याशक्तिरूपेण राजते क्वचिच्च विद्याशक्तिरूपेण इति भेदः। कुत्रचित् शक्तेराधिक्यं क्वचिच्च न्यूनता। अतो न मनुष्याः सर्वे समानशक्तिमन्तः।

तथाहि तेन उक्तम् –**नरेन्द्रेण साकम् आस्ते मतैक्यम्। भगवान् सर्वत्र विराजते किल। किन्तु प्रकाशस्य तस्य तारतम्यमपि विद्यते सत्यम्। शक्तेर्विशेषप्रकाशः स्यादेव।**[11] इति। नरेन्द्रनाथेन पृष्टः रामकृष्णः – किम् अवाङ्मानसगोचर ईश्वरः। रामकृष्णेन उत्तरितं च न ईश्वरः शुद्धबुद्धिगोचरः। शुद्धिबुद्धिमन्तः शुद्धात्मानः समानाः। ऋषयः शुद्धबुद्धयः शुद्धात्मानः आसन् इति ते भगवन्तं दृष्टवन्तः। श्रीरामकृष्णमतमेव समर्थयन् गिरीशचन्द्र उक्तवान् यत् भगवान् अस्ति, स मनुष्यरूपेण अवतरति। ज्ञानभक्तिदानार्थं हि नररूपेण भगवतः आगमनम् इह भवति। अन्यथा कथं शिक्षयेत्। तथाहि उक्तम् – **मनुष्यावतारं विना मानुषान् को बोधयेत्। मानुषेभ्यो ज्ञानभक्तिदानाय तस्य नराकारेण प्रादुर्भावः अवतारत्वेन अभिधीयते ।**[12] इति।

ईश्वरविषये श्रीरामानुजाचार्येण उक्तम् – ईश्वराद् हि सृष्टं जगद्। यथा बीजादुत्पन्नः वृक्षः। ईश्वरः स्नेहपूर्णः। अतस्तदुत्पन्नं जगदिदं स्नेहपूर्णम्। तथाहि – **यथा बीजाद् अङ्कुरोत्पत्तः अङ्कुराच्च महीमहीरुहेः परिणतिः, तद्वत् त्वत्तो जातमिदं विश्वं प्रपञ्चेन सर्वं परिदृष्टं त्वत्स्नेहपुष्टं राजतेतराम्।**[13] इति। यथा शर्करा तथा भगवान्। शर्करा जलेन अथवा विना जलेन भुज्यते मिष्टत्वं न जहाति तथा भगवान् इति बोध्यम् – **यथाहि शर्कराखण्डः सजलो निर्जलोऽथवा। भुक्तः प्रतीयते मिष्टो ज्ञातव्यो भगवास्तथा।।**[14] इति।

भगवदिच्छया सर्वं जायते । भगवच्छराणा गतिर्हि परमागतिः। भगवति आत्मसमर्पणेन हि मुक्तिर्जायते। श्रीरामकृष्णनये अपि भगवत्या जनन्या विनेच्छां नाग्निर्ज्वलति, न हस्ती चलति इति किमपि संघटते। तथाङि श्रीरामकृष्णेन उक्तम् – **माता नेच्छति चेत् मानवबाहुर्नोत्तोलितो भवति कदापि। जनन्या अभिलाषं विना नाग्निर्दहति, पवनो न वाति, सूर्याचन्द्रमसौ न भातः। सर्वमेतत् जगज्जनन्या इच्छाक्रमेण भवति।**[15] इति। यथा वैष्णवः विष्णुं स्वीकरोति तथा श्रीरामकृष्णकः भगवत्याः मातुः कालिकाया आराधक आसीत्। परं वैष्णवेन सह श्रीराकृष्णस्य विचारः समान आसीत्। श्रीरामकृष्णमते ब्रह्मैव काली, काली च ब्रह्म। अग्नेर्दाहिकाशक्तिरिव ब्रह्मणः शक्तिः काली एव। तथाहि उक्तम् **– तव ब्रह्मैव काली। काली आद्या शक्तिः।**[16] इति।

यतीन्द्रविमलनाटकप्रारम्भे एव वैष्णवमूलकविचारेण जायते। तथाहि दृश्यते यादवाचार्यशिष्याः अध्यापितविषयं स्पष्टीकर्तुमागताः – **तस्य यथा कप्यास्यं पुण्ड्रीकमेवमक्षिणी।**[17] इति। यादवाचार्येण उक्तम् – **कप्यास्यं वानरस्य पश्चाद्भागः अपानदेशो वा। ततः अस्य मन्त्रांशस्य अर्थो भवति – तस्य सुवर्णवर्णपुरुषस्य चक्षुर्द्वयं वानरपृष्ठान्तवल्लोहितपद्मतुल्यमिति।**[18] इति।
रामानुजाचार्यः भिन्नमतम् उपस्थापितवान् –

**विश्वं विशालं प्रविभाति रम्यं देवस्य मे यस्य शरीरभासा तन्नेत्रयोर्वानरपामराङ्गं साम्यं समाप्नोतु कथं ह्यमेध्यम्।।**[19] इति।

ततः रामानुजाचार्यः यादवाचार्याश्रमं परित्यज्य यमुनाचार्यसमीपं गतः। यमुनाचार्यः तं पाठितवान् आदिष्टवान् च वैष्णवमतप्रचारार्थम्। रामानुजः शिष्यं कुरुनाथं यादवाचार्यं च वैष्णवमतं शिक्षितवान् ।एका भिक्षुरमणी पृष्टवती रामानुजाचार्यं यद् ब्रह्मज्ञानार्जने किं नारीणामधिकारो वर्तते वा इति। तदुत्तररूपेण रामानुजाचार्य उक्तवान् – ओम्, पुरुषाणामिव नारीणामपि ब्रह्मज्ञाने अस्ति समानः अधिकारः। चण्डालपत्नी रामानुजं पृष्टवती का नाम भक्तिः इति। रामानुजाचार्येण अपि वैष्णवमतसम्मतं भक्तिस्वरूपं प्रपञ्चितम् । वैष्णवसम्प्रदाये भगवान् गुरुश्च श्रेष्ठौ। तेषां नये नास्ति गुरुभगवतोः कश्चन भेदः। भगवान् हि भुवि अप्रत्यक्षः, गुरुश्च प्रत्यक्षः। तथाहि तेन रामानुजाचार्येण उक्तम् – **अहो भगवतो गुरोश्च न भेदो वर्तते। वस्तुस्तु तौ समावेव।**[20] इति।रामानुजाचार्यैरपि उक्तम् – गुरुर्हि नृदेहधारी परमेश्वरः। यदि कश्चन गुरुमुपेक्ष्य अन्यरूपेण परमेश्वरस्य अनुसन्धानं करोति स मूर्ख एव। तस्य जनस्य संसारे सर्वविधा शान्तिर्नश्यति। रामानुजनये न जातिं वंशं जन्म वा निरीक्ष्य गुरुः चेतव्यः। परं ध्यानं,

तपः, जपं, ज्ञानं च गुरोः गुणा इति बोध्यम्। तथाहि उक्तम् –**जातिर्न वंशानुगतेति मे मतिः .... स्याद् गुरुता कुतो न ते** [21] इति। भारतविवेकनाटके अपि यतीन्द्रविमलेन गुरुमहिमा कीर्तितः। तथाहि तत्र सुरन्द्रनाथैः गुरुमहिमविषये उक्तं यत् गुरोर्माहात्म्यम् अनिर्वाच्यम्। यत्र गुरू राजते तत्स्थलं हि देवमन्दिरं भवति।

नरेन्द्रनाथेन पृष्टः श्रीरामकृष्णः – धर्मसाधनस्य मूलमन्त्रः कः इति तदा श्रीरामकृष्णेनागादि – जीवपूजया शिवपजूनं हि मूलमन्त्रः। तस्य तात्पर्यं हि सर्वेषु भूतेषु समदर्शनं विधेयम्। तेषां सेवया हि भगवतः शिवस्य पूजा भवति। सर्वेषु जीवेषु हि भगवान् शिवो निवसति। भगवल्लाभमार्गः न कुसुमास्तीर्णः। मायापाशच्छेदनेन हि भगवल्लाभो भवति।

अन्ततः श्रीरामकृष्णेन कथं जीवे सेवा विधेया यया हि मोक्षप्राप्तिर्ध्रुवा इति सविशदं प्रपञ्चितम् -- **वैष्णवा उपदिशन्ति नाम्नि रुचिः, जीवे दया, वैष्णवपूजनं चेति। अभेदो नामनामिनोः इति सानुरागं नाम जपनीयमेव। किन्तु जीवे दयेत्येतत् किम्। जीवे दया इति मह्यं न रोचते। कीटानुकीटजीवः कथम् अन्यस्मिन् दयेत। कस्त्वं नाम दयाप्रदर्शनाय। न हि नहि नरेन्द्र। जीवे दया इति न, शिवज्ञानेन जीवाः सेवनीया इत्येव युक्तम्।** [22]

**निष्कर्षः** – अस्मिन् प्रकृते प्रबन्धे वङ्गवास्तव्येन यतीन्द्रविमलेन रचितयोः यतीन्द्रविमल-भारतविवेकनाटकयोः धर्मतत्त्वं समालोचितम्। तत्र धर्मतत्त्वं त्रिधा उपलब्धम् – धार्मिकविश्वसः, धार्मिकाचारः, धार्मिकविचारश्च। तत्र सोदाहरणं सोद्धृति धार्मिकविश्वासः, धार्मिकाचारश्च मया उपन्यस्तौ। अन्ततश्च नाटकद्वयमाश्रित्य धार्मिकविचारः समालोचितः। तत्र मुख्यतः ग्रन्थकृता वैष्णवमूलको विचार एव प्रख्यापितः। अतः तदनुसारि वैष्णवमूलकधार्मिकविचार एव न्यस्तः। तत्रापि भगवल्लाभोपायः, भगवत्स्वरूपं, भगवल्लाभे गुरोः कियद् गुरुत्वं, कथं भगवल्लाभो भवति, तल्लाभे च के अधिकारिण इत्येतत्सर्वं यथाग्रन्थं वैष्णवमतानुसारं निरूपितम्। अन्ततश्च भारतविवेकनाटकमाश्रित्य रामकृष्णपरमहंसदेवमतानुसारं वैष्णवमतमपि समालोचितम् इति दिक्।

**पादटिप्पणी**

1. विमलयतीन्द्रे 6
2. भारतविवेके 8पृष्ठाङ्के
3. तत्र12
4. तत्र16-17
5. भारतविवेके 4
6. तत्र 9
7. तत्र 9
8. विमलयतीन्द्रे. 21
9. भारतविवेके10
10. तत्र 31,
11. तत्र 32
12. तत्र 32
13. विमलयतीन्द्रे 24
14. भारतविवेके13
15. भारतविवेके 24
16. भारतविवेके 33
17. यतीन्द्रविमले 6
18. तत्र 40
19. तत्रैव
20. यतीन्द्रविमले 40
21. विमलयतीनद्रे 41
22. भारतविवेके 26

## सहायकग्रन्थाः

1. उपाध्याय, रामजी, आधुनिकसंस्कृतनाटक, चौखम्बा विद्याभवन, वाराणसी, 1996।
2. चौधुरी, यतीन्द्रविमल, आनन्दराधम्, प्राच्यवाणी प्रकाशन, कलकत्ता, 1962।
3. चौधुरी, यतीन्द्रविमल, निष्किञ्चनयशोधरम्, प्राच्यवीणी प्रकाशन, कलकत्ता, 1960।
4. वन्द्योपाध्याय, सुरेन्द्रनाथ, संस्कृतसाहित्ये वाङालिर दान, प्रथमसंस्करणम्, संस्कृतपुस्तकभाण्डार, कलकात्ता, 1962।

*************

**Volume XXI : January to June – 2023, ISSN 2250-1711**
**Journal of Veda Samskrita Academy [Recognised in the UGC-CARE List]**

# कालिदासोत्तरकाव्येषु प्रतिफलिता राजनीतिः

**Amal Kumar Kar**
Assistant Professor, Dept. of Sanskrit
Alipurduar Mahila Mahavidyalaya
Alipurduar- 736121, West Bengal
Contact No. : 9735645025
E-mail : kar.amalkumar@gmail.com

**सारः -**

"आन्वीक्षिकीत्रयीवार्तानां योगक्षेमसाधनो दण्डः" (अर्थशास्त्रम्)।

अतीतः वर्तमानो वा भवतु- आरम्भः अन्त्यश्च, राष्ट्रनीतिमाश्रित्यैव राष्ट्रम्। साहित्ये जीवनशैली, सामाजिकम्, आर्थिकं, धर्मनिरपेक्षता, लोकतन्त्रं च प्रतिफलितम् अस्ति। न केवलं शृङ्गाररससम्पन्नं काव्यं पश्यामः, अपि तु वीर-रौद्र-भयानक-इत्यादीनाम् अङ्गिरसानां काव्यमपि पश्यामः। यत्र राष्ट्रतन्त्रम्, शासनव्यवस्था, प्रशासनकार्याणि, राजनीतिमार्गः- एतानि सर्वाणि स्पष्टानि सन्ति। संस्कृतसाहित्ये कालिदासोत्तरकालिकानां कवीनां काव्येषु राजनीतेः प्रतिबिम्बं प्रतिफलितम् अस्ति। रामायणमहाभारतार्षमहाकाव्यद्वयं प्राचीनभारतस्य राजनीतेः दीप्तिमत् उदाहरणम् अस्ति, महाकाव्यद्वयम् ऐतिहासितथ्यं च अवलम्ब्य भवभूतितः विशाखदत्तः, श्रीहर्षः, राजशेखरः, भारविः, भर्तृहरिः, क्षेमेन्द्रः, माघः इत्यादयः कवयः अद्यापि संस्कृतकाव्यजगतः उत्तमासनेषु विराजन्ते। अपि च आधुनिकबङ्गसाहित्यम्, अनुवादसाहित्यं सर्वत्रापि प्रेमप्रणययोः अन्तराले विस्तृता प्रभाविता च वर्तते राष्ट्रनीतिः। कानिचन काव्यानि तु प्रत्यक्षरूपेण राजनीतिमाश्रित्य एव संरचितानि सन्ति।

**कूटशब्दाः**- साहित्य, सामाजिकम्, राष्ट्रतन्त्रम्, शासनव्यवस्था, राजनीतिमार्गः

**मूलपर्यालोचनम् -**

*दृश्यकाव्ये* प्रथमम् आगच्छति शुद्रकस्य 'मृच्छकटिकम्' इति। यद्यपि दशाङ्कविशिष्टप्रकरणे उज्जयिनीनगरस्य उदारचेतसः मनस्विनः वनिजः चारुदत्तस्य वारविलासिन्याः वसन्तसेनायाः च प्रेमकथा दृश्यते, तथापि राजनीतेः सुनिर्दिष्टः मार्गः परिलक्ष्यते। न केवलं नायकनायिकयोः, अपि तु शर्बिलक-मदनिका-प्रेमवृत्तान्तं सम्बद्धम् अस्ति। प्रेम्णा सह योजना अपि वर्तते। कथं राजश्यालकस्य शकारस्य वसन्तसेनायाः अनुसरणं, बलात् प्रेमार्पणं च कर्तुम् असफलः अभवत्; आघातेन वसन्तसेनायाः मृत्योः उत्तरदायी चारुदत्तः भवति। वस्तुतः राज्ञा दण्डप्राप्तस्य तस्य चारुदत्तस्य श्रमणवसन्तसेनयोः तस्मिन् समये उपस्थितिकारणात् निर्दोषता सिद्धा, किञ्च शकारस्य मृत्युदण्डे घोषिते चारुदत्तस्य अनुरोधेन क्षमया च मृत्युदण्डः निषिद्धः अभवत्। अपि च राजवादिनः आर्यकस्य कारागारात् पलायनम्, राजनैतिक-अराजकतायाः च अवसरे सः पालकं सिंहासनात् निष्काश्य स्वयं राजा अभवत्, तस्य अनुरोधेन चारुदत्तः वसन्तसेनायाः विवाहं कृत्वा कुलमर्यादां सम्मानितवान् ।

श्रीहर्षस्य 'प्रियदर्शिका' इति चतुरङ्कविशिष्टं नाटिकाश्रेण्युपरूपकम् अस्ति, यत्र उदयनस्य प्रियदर्शिकायाः च प्रेमकथा वर्णिता। कलिङ्गराजः प्रियदर्शिकायाः पाणिप्रार्थी इति कारणात् राजनैतिकनीत्या अङ्गराजः दृढवर्माणम् वन्दीकृतवान्। ततः वत्सराजः उदयनः विन्ध्यकेतुं पराजितवान्। ततः अारण्यकारूपेण प्रियदर्शिका राजनैतिकपथा वन्दिनी जाता। नानावृत्तान्तमाध्यमेन आत्मपरिचयस्य प्रकाशः उदयन-प्रियदर्शिकयोः च मेलनम् अस्या नाटिकायाः विषयः अस्ति। अन्यत् 'रत्नावली' इति नाटकम् । सिंहलराजविक्रमबाहुपुत्री रत्नावली। प्रसङ्गवशात् सागरिका इति नाम्ना उदयनस्य अन्तःपुरे राजमहिषीवासदत्तायाः समीपे समर्पिता।

प्रेम्णा अवरुद्धा। विदूषकस्य योजना, काञ्चनमालायाः योजना, वासवदत्तायाः निन्दा, अग्निवृत्तान्तम्- एवं परस्परं वत्सराज-उदयन-वासवदत्ता-रत्नावलीनां प्रेम-प्रणय-पूर्वरागानुरागाणां पृष्ठतः राजनैतिकनीतिः उद्भासते।

भवभूतिकृतः 'मालतिमाधवः' इति। दशाङ्कविशिष्टप्रकरणे यद्यपि उज्जयिनीमन्त्रिपुत्र्या मालत्या सह राज्यान्तरात् आगतस्य युवकशिक्षार्थिनः मन्त्रिपुत्रस्य प्रणयः नाटकस्य विषयः अस्ति, तथापि मुख्यनायकस्य नायिकायाः च मेलनं सुलभं नास्ति। अतः चामुण्डामन्दिरे कापालिक-अघोरघण्टस्य शिष्या कपालकुण्डला मालतीं चोरयित्वा बलिं प्रदातुम् उपक्रमितवती। परं माधवः अघोरघण्टं मारयित्वा मालतीमादाय गतवान्। परन्तु कपालकुण्डला अद्यापि प्रतिहिंसाम् इच्छति। फलतः राजनैतिक-योजना निरन्तरं प्रवर्तते। पुनः मालती तया अपहृता, पश्चात् सौदामिनिना उद्धारिता, तयोः विवाहः च सम्पन्नः।

अन्ये द्वे नाटके 'महावीरचरितम्' 'उत्तररामचरितं' चेत्येतौ सप्ताङ्कविशिष्टौ। रामायणविषयाधारितं स्वकाल्पनिकम् एतन्नाटकद्वयम् अस्ति। रामस्य जन्मतः विवाहितजीवनं, वनवासजीवनं, रामस्य परशुरामस्य च परस्परम् आक्रोशः, कैकेय्याः मन्त्रणा, रावणस्य छलः, विभीषणस्य राजनैतिकविचारधारा च उल्लेखनीया। लव-कुशाभ्यां सह युद्धवृत्तान्तम्, दूतप्रेरणम्, सङ्कल्पः, प्रशंसा, प्रतिज्ञा चेति सर्वम् अत्र वर्तते।

भट्टनारायणस्य षष्ठाङ्कविशिष्टः 'वेणीसंहारः' इति। यः महाभारते कुरुपाण्डवानां युद्धम् अवलम्बते। द्रौपदीं पणरूपेण स्थापयित्वा क्रीडायां पराजितः युधिष्ठिरः, यस्य परिणामेण द्रौपदी केशाकर्षणेन अपमानिता, क्रुद्धस्य भीमस्य प्रतिज्ञाकरणम्, दुःशासनस्य च रक्तपानं, दुर्योधनस्य उरुभङ्गेण शोणिते द्रौपद्याः मुक्तवेणीसंहारः इत्येतत् सर्वमादाय बेणीसंहारनाटकं वीररसप्रधानम्। सिंहासनार्थं सङ्घर्षः महाभारतस्य कथा इति नास्ति कस्यचित् अज्ञातम्, यत्र सिंहासनस्य कृते राजनैतिकी योजना स्वयम् आत्मानं ध्वंसते इत्येतत् दृष्टान्तमूलकम्।

राजशेखरस्य 'बालरामायणम्' इति दशाङ्कविशिष्टनाटकम्, यत्र रामायणस्य विषयवस्तु अवलम्ब्य रचितम्। यत्र रामस्य बाल्यकालात् सीतायाः उद्धारः, अयोध्यां प्रति पुनरागमनं, राज्याभिषेकं च वर्तते। अन्यत् नाटकं 'बालभारतम्' इति, यत्र द्रौपद्याः स्वयंवरसभा, अक्षक्रीडा, द्रौपदीनिग्रहः, वनवासः च वर्णिताः सन्ति।

'कर्पूरमञ्जरी' इति तस्य एका सट्टकजातीयरचना। अत्र प्राकृतभाषायां लिखितं विदर्भराजकुमार्याः राज्ञा चन्द्रपालेन सह प्रणयवृत्तान्तं वर्णितम्। महाराज्ञ्याः क्रोधः, तान्त्रिकस्य भैरवानन्दस्य अलौकिकं कार्यं, राजमहिष्याः आज्ञानुसारं नायिकायाः अवरोधः, अन्ते च परिणयः, एतेषु च मध्ये वर्तते राजनैतिकप्रतिबिम्बम्।

ततः एका 'विद्धशालभञ्जिका' इति चतुरङ्कविशिष्टनाटिका। यत्र लाटराजचन्द्रवर्मणः पुत्र्याः मृगाङ्कवल्याः राज्ञः विद्याधरमल्लस्य च प्रेमकथा वर्तते। नायकः शालभञ्जिका अर्थात् शिलायाम् उत्कीर्णां स्त्रीमूर्तिं परिलक्ष्य तां प्रति आसक्तः। विद्याधरमल्लस्य प्रासादे मृगाङ्कवलीनाम्ना अज्ञातराजकुमारी मृगाङ्कवर्मा इति नाम्ना कुमारस्य वेषेण आश्रितवती। मन्त्रिणः भागुरायणस्य चतुररणनीत्या नायक-नायिकयोः प्रणयः जातः। परन्तु विद्याधरमल्लः मन्त्रिणः चातुर्येण एतत् वास्तविकं मेलनं स्वप्नरूपेण अनुभूतवान्। राजमहिष्या वारिते अपि विदूषकस्य कौशलेन नायकनायिकयोः दर्शनम् अन्ते च राज्ञ्याः अनुमतिं प्राप्य उभयोः विवाहः सम्पन्नः।विशाखदत्तस्य 'मुद्रारक्षसम्' इति एकम् अन्यतमं नाटकम् अस्ति। सम्पूर्णे नाटके राजनीतिः अस्ति। शत्रुपराजयस्य रणनीतिः रक्तरञ्जितसङ्घर्षापेक्षया नीतिद्वारा प्रदर्शिता भवति। चाणक्यस्य प्रसिद्धं वचनं- "येन मया सर्वं लोकप्रकाशं नन्दवंशध्वंसप्रतिज्ञाय निस्तीर्णा दुन्तरा प्रतिज्ञासरित्"[1] इति। राजनीतेः जटिलता अस्य विषयवस्तु। चाणक्यः राक्षसः च परस्परं प्रतिद्वन्द्विनौ स्तः। उभौ अपि चतुरौ राजनीतिविदौ। एकस्मात् नन्दवंशस्य उन्मूलनेन मौर्यस्य सिंहासने स्थापनम्, अपरस्मात् च नन्दवंशं प्रति आनुगत्येन प्रतिकुलतः

रक्षणम्। सर्वतः गुप्तचराः, विषकन्याप्रयोगः, शिबिरस्थापनं, स्तम्भस्य निर्माणं ध्वंसः च, चन्द्रगुप्तस्य प्राणनाशाय प्रयासः, विषयुक्तौषधस्य प्रयोगः, अग्निदग्धस्य चन्दनदासस्य शूलारोहणम् इत्यादयः सन्ति-

"विनैव युद्धादार्येन जितं दुर्जयं परबलमिति लज्जित एवास्मि।"[2] (चन्द्रगुप्तः)- युद्धं विनैव आर्यः चाणक्यः शत्रुसैन्यं पराजितवान्।

- महाकाव्येषु राजनीतिः - वैदर्भीमार्गस्य अनुगामि कुमारदासस्य 'जानकीहरणम्' इति। एकविंशतिसर्गेषु दशरथस्य उत्पत्तितः रामसीतयोः दाम्पत्यजीवनं, वनवासः, बालिवधः, सीताहरणं, राक्षसानां श्रृङ्गारक्रीडा, रामेण रावणस्य पराजयः इत्येते विषयाः सन्ति।

कविभट्टीविरचितं द्वादशसर्गेषु निबद्धं 'भट्टिकाव्यम्' इत्यपि रामायणम् आश्रित्य रचितम्, यस्य अपरनाम 'रावणवधकाव्यम्' इति। यद्यपि अस्य काव्यस्य विशेषवैशिष्ट्यम् अन्यतमत्वं भजते तथापि राजनैतिकक्षेत्रे इदम् इतोऽपि मधुरं जातम्। प्रकीर्णकाण्डम्, अधिकारकाण्डम्, प्रसन्नकाण्डं तिङन्तकाण्डं चेति चतुर्षु काण्डेषु रामजन्म, सीताविवाहः, वनवासः, सीतावनवासः, सीतान्वेषणम्, अशोकवनविनाशः, हनुमन्निग्रहः, विभीषणस्य रावणं प्रति उपदेशः इत्यादिविषयाः वर्तन्ते।

अष्टादशसर्गेषु निबद्धं कविभारविविरचितं 'किराताजुनीयम्' इत्येतत् महाभारतस्य वनपर्वणः कथामाश्रित्य रचितम्। वनवासकाले शिवस्य समीपात् पाशुपतास्त्रदानम् अस्य मुख्यविषयः। परन्तु प्रथमसर्गे एव राजनीतेः प्रतिबिम्बं परिलक्ष्यते। यत्र द्रौपद्याः तेजस्विता, मनस्विता स्वगतोक्तिः-

क) "शठे शाठ्यं समाचरेत्"

ख) "ब्रजन्ति ते मूढधियः पराभवं भवन्ति मायाविषु ये न मायिनः॥"[3]

ग) "अमर्षशून्येन जनस्य जन्तुना न जातहार्देन न विद्विषादरः।"[4]

घ) "परैरपर्षातिवीर्यसम्पदां पराभवोऽप्युत्सव एव मानिनाम्"[5]

ङ) "भवादृशाश्चेदधिकुर्वते रतिं निराश्रया हन्त हता मनस्विता।"[6]

च) "शमेन सिद्धिं मुनयो न भूभृतः।"[7]

छ) "अरिषु हि विजयार्थिनः क्षितीशा विदधति सोपधि सन्धिदूषणानि।"[8]

कवेः माघस्य "शिशुपालवधम्" इति विंशतिसर्गेषु रचितम्। अत्र महाभारतस्य सभापर्वान्तर्गतस्य श्रीकृष्णद्वारा शिशुपालवधस्य वृत्तान्तः वर्तते। यत्र कवेः हस्तेन ऋतु-वन-जल-पुरी-इत्यादीनां वर्णने नूतनतया चेतनां जागरति, तथैव द्वितीये "मन्त्रवर्णनम्" इति नामके सर्गे अग्रजबलरामस्य, मन्त्रिणः उद्धवस्य च मतेषु प्रस्फुटति राजनैतिकप्रतिबिम्बम् -

क) "अन्यदा भूषणं पुंसः क्षमा लज्जेव योषितः पराक्रमः परिभवे वैषात्यं सुरतेन्विव।"[9]

ख) "स्वस्थादेवापमानेऽपि देहनिस्तद्वरं रज।"[10]

ग) "यजतां पाण्डवाः स्वर्गमवत्विन्द्रस्तपस्विनः।[11] वयं हनाम द्विषतः सर्वः स्वार्थ सहीहते।" (बलरामः)[12]

घ) "बुद्धिशस्त्रः प्रकृत्यङ्गो घनसंवृत्ति कञ्चुकः चारेक्षणो दूतमुखः पुरुषः कोऽपि पार्थिवः।" (उद्धवः)[13]

अन्यत् विशालकायं महाकाव्यं 'हरविजयः' इति। काश्मीरकविरत्नाकरविरचितस्य अस्य काव्यस्य पञ्चाशत्सर्गेषु शिवेन अन्धकासुरवधः वर्ण्यते। अस्य नवमतः षोडशसर्गं यावत् अष्टसर्गेषु राजनीतेः जटिलतत्त्वम् उल्लिखितम्। श्रीहर्षेण लिखितं 'नैषधीयचरितं' विशेषवैशिष्टम् आवहति। यत् द्वाविंशतिसर्गेषु निबद्धं श्रृङ्गाररसप्रधानं महाकाव्यम्। महाकाव्यस्य नवमे सर्गे नल-

दमयन्त्ययोः उक्तिप्रत्युक्त्योः दमयन्त्याः यः संवादः तत्र राजनैतिकदृष्टिः परिलक्ष्यते।

"अदृश्यमाना क्वचिदीक्षिता क्वचिन्ममानुयोगे भवतः सरस्वती॥

चित् प्रकाशं क्वचिदस्फुटानं सरस्वतीं जेतुमनाः सरस्वती॥[14]

गिरः श्रुता एव तव श्रवः सुधा श्लथा भवन्नाम्नि तु न श्रुतस्पृहा।

पिपासुता शान्तिमुपैति वारिणा न जातु दुग्धान्मधुनोऽधिकादपि।" (दमयन्ती)[15]

● गद्यकाव्येषु प्रथमम् आगच्छति– दण्डीकृतं 'दशकुमारचरितम्' इति। यत्र यथा तत्कालीनसमाजस्य नैतिकक्षयः अवलोकितः तथा राजनैतिकसन्दर्भः अपि परिलक्षितः वर्तते। यद्यपि दशकुमारानुभवविचित्रकथा अस्य विषयः, तथापि तासु कथासु सिंहासन-सम्पत्त्योः प्राप्त्यर्थं युद्धस्य वृत्तान्तः अपि दृश्यते। यथा- बिहारभद्रस्य कुपरामर्षः, बासुरक्षितस्य सुपरामर्षः इत्यादि। बाणभट्टः अन्यः गद्यकविः अस्ति। तस्य 'हर्षचरितम्', 'कादम्बरी' इति गद्यकाव्यद्वयं वर्तते। अत्र ऐतिहासिकस्य कथामूलकस्य सत्त्वेऽपि सर्वमपि राजनैतिकालोकेन परिस्फुटम्। गौडेश्वरस्य योजना, हर्षस्य युद्धयात्रा, राजश्र्याः उद्धारः, चन्द्रापीडं प्रति शुकनासस्योपदेशः इत्यादीनि उल्लिखितानि-

क) "नियतिर्विधाय पुंसां प्रथमं सुखमुपरि दारुणं दुःखम्। कृत्वालोकं तरला तडिदिव व्रजं निपातयति।"[16]

ख) "पातयति महापुरुषान् सममेव बहुननादरेनैव। परिवर्तमान एकः कालः शैलानिवान्तः॥"[17]

ग) "लोके हि लोहेभ्यः कठिनतराः खलु स्नेहमयाः बन्धनपाशाः, यदाकृष्टाः तिर्यञ्चोऽपि एवमाचरन्ति।"[18]

क) "नवयौवनकषायितात्मनश्च सलिलानीव तान्येव विषयस्वरूपाण्यास्वाद्यमानानि मधुरतरान्यापतन्ति मनसः।"[19]

ख) "यौवनारम्भे च प्रायः शास्त्रजलप्रक्षालणनिर्मलापि कालुष्यमुपयाति बुद्धिः।"[20]

ग) "विशेषेण राज्ञाम्, विरला हि तेषामुपदेष्टारः। प्रतिशब्दक इव राजवचनमनुगच्छति जनो भयात्।"[21]

● ऐतिहासिककाव्येषु वाक्पतिराजस्य 'गौडवहः', पद्मगुप्तस्य 'नवसाहसाङ्कचरितम्', बिल्हनस्य 'विक्रमाङ्कदेवः', कल्हणस्य 'राजतरङ्गिणी', सन्ध्याकरनन्द्याः 'रामचरितम्', हेमचन्द्रस्य 'कुमारपालचरितम्' इत्यादीनि सन्ति। तेषां सर्वेषां मध्ये ऐतिहासिककाव्यानां पृष्ठतः राजनैतिककाव्यानि सन्ति।

अर्थशास्त्रानुसारं दण्डनीतिः राजनीतिः वा सर्वासु विद्यासु श्रेष्ठविद्या इति मन्यते। राज्ञः नीतिः राजनीतिः। चतुर्विधविद्यायां पारदर्शी नीतिशास्त्रे राजनीतिशास्त्रे वा प्रवीणः सन् एव समृद्धिं श्रेष्ठत्वं च प्राप्तुं समर्थः भविष्यति।

लोकसमाजे राजा प्रचलितनियमानुसारं दण्डव्यवस्थां प्रयुङ्क्ते। दण्डं विना काऽपि व्यवस्था न सम्भवति। सर्वे व्यवहाराः येन नियमिताः भवन्ति सः दण्डः। दण्डेन मनुष्याः पुरुषार्थसिद्धिं प्रति नेतुं शक्यन्ते इत्यतः सा दण्डनीतिः।

आधुनिकराष्ट्रजीवने अधिकारः द्विविधः- नैतिकः प्रशासनगतः च। नैतिकस्य अर्थः सामाजिकन्यायबोधः श्रृङ्खला च। पुनः प्रशासनगतः चतुर्विधः भवति- राजनैतिकः, आर्थिकः, पौरः, सामाजिकः च। जनः प्रत्यक्षतया परोक्षतया च राजनीतिषु भागं गृह्णाति। यथा मतदानस्य अधिकारः, सर्वकारस्य निर्माणार्थं निर्वाचितस्य अधिकारः, व्यक्तेः नित्यप्रयोजनीयार्थोपार्जने अधिकारः, स्वस्थवातावरणे जीवितुम् अधिकारः, धर्माचरणे अधिकारः, स्वास्थ्यस्य अधिकारः, सामाजिकाधिकारः इत्यादयः।

प्रत्येकम् अधिकारः अतीव प्रासङ्गिकः अस्ति। अत्र च समाविष्टं लोकतान्त्रिकं, समाजतान्त्रिकं, सार्वभौमत्वं च। अर्थात् व्यक्तित्वविकासाय उपयोगिनां सर्वेषां सौविध्यानां समानता तस्मिन् समाविष्टा अस्ति। उल्लेखनीयं यत् वर्तमाने जनस्य स्वतन्त्रविचारस्य अभिव्यक्तेः च उपरि बलं दत्तम् अस्ति। वैयक्तिकसम्पत्त्यधिकारः व्यक्तित्वविकासस्य उपायः, राष्ट्रस्य कार्याणां सीमितीकरणं च सर्वं उदारनीतिवादस्य परिणामभूतम्। मनुष्याणां कार्याणि साहित्ये उल्लिख्यन्ते। राजा, मन्त्री, अमात्यः, राजसेवकः, गुप्तचरः, दूतः

इत्यादयः प्राचीनाः शब्दाः वर्तमानराजनीत्या सह अविच्छिन्नरूपेण सम्बद्धाः सन्ति। कदाचित् राजनीतेः कुटिलमन्त्रणा भवति, कदाचित् सामदानदण्डभेदाः राष्ट्रनीतेः मूलमन्त्रम्। किञ्च मगधः, उज्जयिनी, अयोध्या, मालवः, काञ्ची इत्यादिनगराणां केवलं नामानि न सन्ति, अपि तु राष्ट्रनिर्माणाय एतानि संघर्षभूतानि। तस्मात् शूलारोहणेन दण्डदानविधानं, सिंहासनार्थं दीर्घकालं संघर्षः इत्येतत् सर्वं प्राचीने वर्तमाने वा सर्वत्रापि दृश्यते। भेदः केवलं प्रकृतितः एव, वास्तविकं प्रयोजनं तु समानमेव।

सहायकग्रन्थसूची

१. बन्द्योपाध्यायः, धीरेन्द्रनाथः, संस्कृत साहित्येर इतिहास, पश्चिमबङ्ग राज्य पुस्तक पर्षत्, १९८८।

२. बन्द्योपाध्यायः, प्रद्योतकुमारः, संस्कृत साहित्येर इतिहास, ढाका स्टुडेन्टस् लाइब्रेरी कलकाता।

३. मुखोपाध्यायः, अध्यापकः डॉ. गोपेन्द्रः, संस्कृत साहित्येर इतिवृत्त, इउनाइटेड बुक एजेन्सि, १४१९ बङ्गाब्द।

४. दे, अविनाशचन्द्रः शुभेन्दुकुमार-सिद्धान्तः च, मृच्छटिकम्, संस्कृत पुस्तक भाण्डार, १४०७ बङ्गाब्द।

५. आचार्यः, सीतानाथः, देवकुमार-दासः, मुद्राराक्षसम्, सदेश -२००५।

६. वसुः, अनिलचन्द्रः, किरातार्जुनीयम् (प्रथमम्), संस्कृत बुक डिपो -२००६।

७. बन्द्योपाध्यायः, अशोककुमारः, शिशुपालवधम् (द्वितीयम्), सदेश- १४४१ बङ्गाब्द।

८. दासः, देवकुमारः, नैशधीयचरितम् (नवमम्), संस्कृत पुस्तक भाण्डार - १९९६।

९. चक्रवर्ती, अलका, हर्षचरितम् (पञ्चमम्), संस्कृत पुस्तकभाण्डार- २००२।

१०. भट्टाचार्यः, अमलकुमारः, कादम्बरी (शुकनासोपदेशः), संस्कृत बुक डिपो -१९९८।

**पाददिप्पणी**

1. मुद्राराक्षसम् – 1/11, पृः 8
2. मुद्राराक्षसम्–7/10, पृः 188
3. किरातार्जुनीयम् – 1/30
4. तदेव – 1/33
5. तदेव – 1/41
6. तदेव – 1/43
7. तदेव – 1/42
8. तदेव – 1/45
9. शिशुपालवधम् – 2/44
10. तदेव – 2/46
11. तदेव – 2/65
12. तदेव – 2/82
13. तदेव – 2/82
14. नैषधीयचरितम् - 9/4
15. तदेव – 9/5
16. हर्षचरितम्- ५, प्रथमांश
17. हर्षचरितम्- ५ प्रथमांश
18. हर्षचरितम्- ५, प्रथमांश
19. शुकनासोपदेशः–6, पृः 5
20. तदेव – 5, पृः 4
21. तदेव – 10, पृः 9

***************

**Volume XXI : January to June – 2023, ISSN 2250-1711**
**Journal of Veda Samskrita Academy [Recognised in the UGC-CARE List]**

# संस्कृतवाङ्मये स्त्री

**Dr. Anupama B.**
Assistant Professor, Vyakaranashastra Vibhaga
Karnataka Sanskrit University
Chamaraja Pete- 560018
Bengaluru, Karnataka
Contact No. : 9379779278
E-mail : anupamamys04@ksu.ac.in

**पत्रिका सारः–**

संस्कृत वाङ्मये वेदानां स्थानं सर्वोपरि अत्यन्त सनातन प्राचीन साहित्यम् इति सर्वैरपि अङ्गीक्रियते । "विन्दयन्ते धर्मादयः पुरुषार्थाः यैस्ते वेदः" इति वह्रुच् प्रातिशाख्ये वेदस्य अर्थमिति अभिहितमस्ति। सायणचार्येण ऋग्वेदभाष्यभूमिकायां "इष्टप्राप्यानिष्टपरिहारयोः अलौकिक साधनो यद् वेदयति स वेदः" इत्युक्तम्। अद्यतनकाले पत्रिकासु स्त्रीप्रधूपितावार्ता अत्यन्त सामान्यतया प्रतिदिनम् अस्माभिः दृष्यते । एतद्विषये स्त्रीणां विषये वेदे किम् उक्तम् इति जिज्ञासया मया वेदे तथा संस्कृतवाङ्मये के के विचाराः अभिहिता इति मया संग्रहीतानि।

**सूचिपदानि –**

**१. वाङ्मयम् २. पुरुषार्थाः ३. प्रातिशाख्यम् ४. ऋग्वेदभाष्यभूमिका ५.इष्टप्राप्तिः ६. अनिष्टपरिहारः ७. अलौकिकम् ८.प्रधूपिता ९.जिज्ञासा १०. संगृहीतम्।**

**" स्त्री हि ब्रह्मा बभूविथ" (ऋ .८.३३१९)**

अनेन वाक्येन स्त्री स्वयं वेदज्ञा इति प्रतिपादितमस्ति।

**" शुद्धाः पूताः योषितो यज्ञिया इमाः" (अ.वे.११.१.१७)**

अत्र सर्वस्त्रीणां प्रति अत्यन्त गौरवादरं प्रदर्शितानि। ते सर्वे सर्वदा शुद्धाः याज्ञिकाः इत्युक्तम्।

वेदे पुरुषस्त्रीयोर्मध्ये समानता एव दृष्यन्ते न तु भेदाभावः।

**" त्वं स्त्री त्वं पुमान् त्वं कुमार उत वा कुमारी।**
**त्वं जीर्णो दण्डेन वञ्चासि त्वं जातो भवति ॥ ( अ.वे. १०.८.२७)**

स्वस्य स्वस्य जीवननिर्वहण तथा विद्याभ्यासादि प्रमुखविषयानां निर्धारणस्वातन्त्र्यं सर्वदा अस्त्येवा स्वयंवरापद्धतिः न केवलं राजकुमार्यां प्रति सर्वस्त्रीणां प्रति प्रचलितम्। एतद् विषये

तमस्मेरा युवतयो युवानं मर्मुज्यमाना पारेयन्त्यापः।

**सशुक्त्रेभिः शिक्वभिः स्वेदस्मे दीनायानिध्मो घृतनिर्णिगत्सु ॥ (ऋ. २.३५.८)**

गुरुकुले विद्याभ्यासं कृत्वा सालङ्कृत योषिताभिः स्वस्य अनुरूप तथा अर्ह वरं वरयति इत्यर्थः।

**क्त्रियति योशा मर्यतो वधूयोः परिप्रीता पन्यसा वार्येण।**
**भद्रा वधूर्मवाची यत्सुपेशाः स्वयं सा मित्रं वनुते जने चित्॥ (ऋ. १०.२७.१२)**
**ब्रह्मापरं युज्यतां ब्रह्मपूर्वं ब्रह्मान्ततो मध्यतो ब्रह्मसर्वतः।**
**अनाव्याधं देवपुरां प्रपद्य शिवास्योना पतिर्लोके विराज ॥ (अ.वे. १४.२.६८)**

अत्र ब्रह्मशब्दः वेदविषयक ज्ञानार्थकः। अतः वेदोक्त ज्ञानेन सन्तुष्टेन विराजनीयमित्यर्थः।

विधवाविवाहमपि वेदे मानकृतं यत् अधोलिखित श्लोकः प्रतिपादयति।

**उदीर्ष्व नार्यभिः जीवलोकं गतासुमेतमुपशेष ऐहि ।**

**हस्तग्राभस्य दिधिषोस्तवेदं पुत्युर्जनित्वमाभि सं बभूथ॥ (ऋ. १०.१८.८)**

पञ्चत्वं गतपतिं विहाय अद्यहस्तग्राभस्य पति सार्धं जीवितुं सन्नद्ध भव इत्यर्थः।

"अधोर्वा आत्मनः यन्पत्नी" (कृ.य.वे)

आत्मस्य अर्धभाग एव पत्नी इत्युक्तमस्ति।

यदि स्त्रियः विवाहं नापेक्षते ताभिः ब्रह्मवादिनी भूत्वा स्वस्यजीवननिर्वहणं ते सर्वस्वतन्त्रः इति बृहदारण्यकोपनिषदि वाक्यानि पुष्टीकरोति।

" अथ स इच्छेत् दुहिता मे पण्डिता जायेत" (बृ.उ.६.४.१९)

भरद्वाजस्य दुहिता रूपेणप्रतिमा भुवि।

**श्रुतवती नाम विभो कौमारी ब्रह्मचारिणी॥ अत्रैव ब्राह्मणी सिद्धा कौमारी ब्रह्मचारिणी।**

**योगयुक्ता दिवं याता तपस्सिद्धा तपस्विनी ॥ बभूव श्रीमती राजन् शाण्डिल्यस्य महात्मनः।**

**सुता तु तप्त्वा तपो घोरं दुस्तरं स्त्री जनेन ह। गता स्वर्गं माहाभागा देवब्राह्मणपूजिता ।**

इति महाभारते श्लोकाः स्त्रीणामपि ब्रह्मचारिणिव्रतधारिणी भूत्वा जिवन्ति। इत्यंशान् समर्थ्यन्ति।

वाल्मीकि रामायणेऽपि स्त्रियः सन्ध्यावन्दन तथा तप ततायोगसाधने निरताः इति प्रस्ताव क्रुतमस्ति।

**"ददर्श च माहाभागां तपसा द्योतितप्रभाम् लोकैपरि समागम्य दुर्निरीक्षां सुरासुरैः॥**

**सन्ध्याकालमनश्यामा ध्रुवमेष्यति जानकी। नदीचेमां शुभजलां सन्ध्यार्थं वरवर्णिनी॥**

**(५.१५.४८)**

**सा क्षौमवसना हृष्टा नित्यं व्रतपरायणः। अग्निं जुहोति स्म तदा मन्त्रवत् कृतमङ्गला॥ (२०.१४.१५)**

गोभिल गृह्यसूत्रे स्त्रीविषये

**"प्रवृतां यज्ञोपवीतिनीमभ्युदानयन् जपेत् सोमोददद्ग्धर्वायेति" ।**

**पराशर माधवीयेऽपि " विवाहरहिता नामपि ब्रह्मवादिनीनाम्। उपनयनादिभिरुत्तमलोकसम्भवात् ॥**

सर्वैः वेदप्रमाणम् अङ्गीक्रुतमस्ति । यदि वेदोक्तं तस्य अवश्यं पालनीयम् इति उक्तिः प्रचलिता , वेदाः स्त्रीविरोधिविषयाः कथ्यन्ते इति अपप्रचारः क्रुतवन्तः तैः मूलवेदे किमुक्तमस्ति? इति स्वयम् अध्ययन क्रुत्वा परीक्षणं करणीयम् अनन्तरमेव तत्र किमुक्तमस्ति इति ज्ञातुं शक्यते खलु अपठित्वा केवलं श्रवणेन वेदस्य मिथ्याप्रचार जातः तस्य निरसनं करणीयम्.

देवी भागवते "न च वाञ्छन्ति भर्तारं कौमारव्रतधारिणी व्रतजाप्य परनित्यं संसाराद्विमुखी सदा"

भागवते अपि " तेभ्यो दधार कन्येद्वे वयौनां धारिणी वस्वदा उभेते ब्रह्मवादिन्यो ज्ञान विज्ञान पारगे"

स्वदेः वयुना धारिणि स्त्रि उभयोः ब्रह्मवादिनीं भूत्वा ज्ञाने विज्ञाने च पारङ्गत स्तः।

**ऋग्वेदे वेदमन्त्रद्रष्टाराणां केवलं पुरुषाः प्राप्तः स्त्रीणां मन्त्रद्रष्टाराणाम् उल्लेखः प्राप्यते " लोपमुद्रा, विश्ववरा, शिकटा, नीवावारि, घोषा( १.१७९,५.१८,८.९१,९.८२,११.२०,१०,३९.४०)** एकं श्लोकमस्ति

**पिता रक्षति कौमारे भर्ता रक्षति यौवने। रक्षन्ति स्थविरे पुत्राः न स्त्री स्वातन्त्र्यमर्हति॥**

एतद् श्लोकमाधारीकृत्वा अनेक मिथ्यावादाः बहु प्रचलिताः।

नन्वत्र स्त्रीणां कृते स्वातन्त्र्यविषये वा तेषां प्रति अवहेलनतया उक्ताः इति मिथ्याविषयं प्रथमतः मनसि निष्कास्य पूर्वापर परीक्षणेन इत्युक्ते संवादिग्रन्थान्तर परीक्षं कर्तव्यम्।

अयमेव विषयं याज्ञावल्क्यौ एवमस्ति " रक्षेत् कन्यां पिता विन्नां पतिः पुत्रास्तु वार्धके" इति अनेनेदं ज्ञायते यत् नात्र स्वातन्त्र्यास्वातन्त्राविचाः किन्तु सर्वावस्थासु स्त्रीरक्षणं पुरुषाणामाद्यं कर्तव्यमित्येव उक्तमस्ति।

यस्मिन्समाजे स्त्रीरक्षणाय न कोऽपि पुरुषः न तिष्ठति, स समाजः कलङ्कितः तत्तु तस्य अवलक्षणम् इत्यंशस्यैव प्रतिपादनं अनेन कृतमस्ति। वराहमिहिरस्य वृहत्संहितायां

**दम्पत्योर्युत्क्रमे दोषः समः शास्त्रे प्रतितिष्ठितः। नरा न तमवेक्षन्ते तेनात्र वामङ्गना ॥**

**प्रबूतं सत्यं कतरोऽङ्गनानां दोषोऽस्ति यो नाचरितो मनुष्यैः॥**

**धार्ष्ट्येन पुम्भिः प्रमदा निरस्ता गुणाधिकास्ता मनुनात्र चोक्तम्॥**

**जामयो यानि गेहानि शपन्त्यप्रतिपूजिता । तानि कृत्या हतानीव विनश्यन्ति समन्ततः॥**

**जाया वा स्याज्जनित्री वा सम्भवः स्त्रीकृतो नृणाम्। हे कृतघ्नः! तयोर्निन्दां कुर्वतां वः कुतः सुखम्।**

शास्त्राणां यत्र कुत्रापि पत्निम् उद्दिश्य सदाचारणमुक्त तत्र पति यः तेषामधिकृत्य उपदेशा दत्तमस्ति। तत्र पुरुषस्य एव अधिक दायित्वमस्ति इति " केवलं स्त्री कुत्र स्वेच्छया पापकार्ये भागि भवति? सा सर्वत्र पापकार्यं त्यजति इत्यबिप्रायः" सर्वत्र किमर्थं ताभिः दोषोक्तानि? पुरुषाणां विषये सा सर्वदा सर्वेषु विषयेषु श्रेष्ठता ताभिः एव प्राप्ताः इति निश्चयेन भवति तेषां श्रेष्ठत्वम्। तादृश स्त्रीणां निन्दा ये कुर्वन्ति तस्य कल्पना ये कुर्वन्ति ते साक्षात् कृतघ्नः इत्यभिप्रायः अत्र दृष्यते। ब्रह्मवैवर्तपुराणे एवमुक्तमस्ति–

**अनपत्यां च युवती कुलजा च प्रतिव्रताम्। त्यक्त्वा भवेद्यः संन्यासी ब्रह्मचारी यतीति वा ॥**

**वाणिज्ये वा प्रवासे वा चिरं दूरं प्रयाति यः। तीर्थे वा तपसे वापि मोक्षार्थे जन्मखण्डितम्**

**न मोक्षस्तस्य भवति धर्मस्य स्खलनं ध्रुवम्। अभिशापेन भार्यायाः नरकं च परत्र च ॥**

सद्यः विवाहित सन्तान रहित कुलीनः अपि पतिव्रता स्त्रीं त्यक्त्वा यः सन्यासं, ब्रह्मचर्यं, वा वणिक्कर्मादि हेतोः यदि परिव्राजकं भूत्वा दूरंगतः, अथवा तीर्थयात्रा वा मोक्षप्राप्यर्थे प्रयासेऽपि तस्य पत्न्या अभिशापेन कोऽपि कार्यसंपन्नता न प्राप्यते। तादृशः इहलोके परलोके अपि नरकं प्राप्नोति इत्यभिप्रायः अत्र ध्वनितम्।

मार्कण्डेय पुराणे–

**पत्न्यानुकूलता भाग्यं यथाशीलेऽपि भर्तरि । दुःशीलापि तथा भार्या पोषणीया नरेश्वरः॥**

अत्याज्यो हि यथा भर्ता स्त्रीणां भार्या तथा नृणाम्।

यथा शास्त्रे दुःशील पतेः त्यजनस्य आज्ञा अनुमति नास्ति इत्युक्तं तद्वत भार्याया अपि त्यागस्य अनुमति नास्ति

इत्युकतमस्ति। मिताक्षरी–

भगिन्यश्च निजाम्शाद् दन्वांशं तु तुरीयकम्।

एददुक्तं भवति यदि ब्राह्मणी

सा कन्या तदाब्राह्मणी पुत्रस्य।

यावानांशो भवति तस्य

चतुर्थांशस्तस्याः भवति॥ (मितक्षरी– २.१२४)

दायप्रकरणे स्त्रिणां विवाहादि अनन्तरं सर्वैः स्वस्यभागात् चतुर्थांशं दातव्यम् इत्युक्तम्।

महाभरते आदिपर्वणि

**अर्धं भार्या मनुष्यस्य भार्या श्रेष्ठतमः सखा । भार्या मूलं त्रिवर्गस्य भार्या मूलं तरिष्यतः॥**

**कान्तारेष्वपि विश्रामो जनस्याध्वनिकस्य वै । यः सदारः स विश्वास्यस्तस्माद् दारा परागतिः॥**

पत्नी अर्धाङ्गिनी, श्रेष्ठतम सखा, त्रिवर्ग इत्युक्ते धर्म, अर्थ, काम पुरुषार्थस्य सिद्धेः मूलम्। अन्ततोगत्वा मोक्षमार्गस्य साहायिका अपि भवति। दुर्गम वने पथिकस्य विश्रमस्थलमिव सा प्रकाशति, संसारिणां लोके श्रेष्ठत्वं तु अस्त्येव।

याज्ञावल्क्य स्मृतौ :

रक्षेत् कन्यापिता विन्नापतिः पुत्रास्तु वार्धके।

अभावे ज्ञातयस्तेषां न स्वतन्त्र्यं क्वचित्स्त्रियः॥

बाल–स्ववासिनी–वृद्ध–गर्भीण्यातुर–कन्यकाः सम्भोज्यातिथि –भृत्यांश्च दम्पत्योः शेष भोजनम् । (१.१०५)

गृहस्थस्य कदा भोजनं कर्तव्य इति स बाला–स्वकन्या–वृद्धा–कन्यका–अतिथि– भृत्या–भोजनानन्तरमेव करणीयम् इत्युक्तमस्ति।

## परामर्शन ग्रन्थाः

१. वैदिकसाहित्यचरितम्।

२. याज्ञावल्क्यस्मृतिः।

३. वाल्मीकिरामायणम्।

४. उपनिषदः।

५. मिताक्षरी।

६. महाभारतम्।

********

**Volume XXI : January to June – 2023, ISSN 2250-1711**
**Journal of Veda Samskrita Academy [Recognised in the UGC-CARE List]**

# वङ्किमचन्द्रकृतिषु सामाजिकचिन्तने मोक्षवादः

**(Mokshavada in social thought in the works Bankimchandra)**

**TARUN SHIT**
Research Scholar (Ph. D.), School of Educatiom
National Sanskrit University,
Tirupati- 517507, Andhra Pradesh
Contact No. : 8100322461
E-mail : tarunshit1990@gmail.com

**अमूर्तसारः** वङ्किमचन्द्रमहोदयस्य धार्मिकचिन्तनं भारतीयदर्शने मोक्षस्य अवधारणायाः सह असङ्गतं दृश्यते।मोक्षावस्थायां सुखम् आनन्दश्च प्राप्तिः भवति।भारतीयदार्शनिकसमुदायस्य एकस्य खण्डस्य मते मोक्षः आनन्दस्वरूपः अस्ति तथा च तेषां मते सुखं भिन्नं वस्तु अस्ति। मोक्षावस्थां नाम सुखावस्था इति मन्यन्ते बङ्किमचन्द्रमहोदयः। ततः परं एकं प्रश्नं मनसि आगमिष्यति किं सः 'सुखम्' 'आनन्दं' च समानं मन्यते ? यतः यदि मोक्षः सुखावस्था इति उच्यते तर्हि मोक्षः अनित्यः इति वक्तव्यः।

वङ्किमचन्द्रः मोक्षविषये स्वस्य सुविचारितं प्रवचनं प्रकटितवन्तः। भारतीयदार्शनिकप्रवचनस्य इतिहासे मोक्षः महत्त्वपूर्णः विषयः अस्ति । प्रायः प्रत्येकस्य दार्शनिकसम्प्रदायाः व्यक्तियः नास्तिकः वा आस्तिकः भवन्तु, ते मोक्षस्वरूपस्य विषये एवञ्च मोक्षप्राप्तार्थं विषये चर्चितवन्तः। भारतीयधर्मनीतेः चतुर्षु पुरुषार्थेषुमोक्षः अन्यतमस्ति। प्रायः आस्तिकाः मन्यन्ते यत् धर्मः भवति मोक्षप्राप्तये अन्यतममुपायः।परन्तु मोक्षप्राप्त्यर्थं कर्मणां अधिकं प्राधान्यमस्ति न वा ज्ञानस्य प्राधान्यमधिकमस्ति तद् विषये मतभेदः दृश्यते।केचन दार्शनिकसम्प्रदायाः वेदेषु कर्मकाण्डस्य आधारेण मोक्षप्राप्तये कर्मकाण्डस्य उपरि अधिकं वलं प्रदत्तवन्तः।पुनः उपनिषदे ज्ञानकाण्डमध्ये विश्वासिनदार्शनिकाः ज्ञानमेव मोक्षप्राप्तये अधिकं प्राधान्यदत्तवन्तः। भगवद्गीतायां वयं दृष्टवन्तः यत् ज्ञानं कर्म च उभयं समानमेव।बङ्किमचन्द्रस्य मतानुसारम् हिन्दुधर्मशास्त्रेषु अन्यतमं भवति भगवद्गीता । सः स्वयमेव गीताभाष्यम् विरोचितम्। तथापि, सः स्वजीवदशायां तत् सम्पूर्णं कर्तुं न शक्तवान् । वङ्किमचन्द्रः अपि अन्य भारतीयदार्शनिकानां अपेक्षा भिन्नमतं प्रदत्तम् इति मन्यते दृश्चते च। तस्य मतस्योपरि वैष्णवधर्मस्य साहित्यशास्त्रस्य च प्रभावमस्ति अधिकम। सः भगवद्गीतायाः वैष्णवधर्मस्य च आधारेण धर्मतत्वग्रन्थे उक्तवान् यत् मोक्षप्राप्त्यर्थं कर्म, ज्ञानं, भक्तिः च सर्वेषुप्राधान्यमस्ति। परन्तु सः भक्तिविषये अधिकं मतं प्रदत्तवान्।

➢ **वङ्किमचन्द्रस्यसामान्यपरिचयः** - वङ्किमचन्द्रचट्टोपाध्यायस्य जन्म १८३८ ई. तमे वर्षे कलकत्तासमीपे नैहाटी-काँठालपाडाग्रामे सम्पन्नशिक्षिते हिन्दुब्राह्मणपरिवारे अभवत्।पिता यादवचन्द्रचट्टोपाध्यायः ब्रिटिशसर्वकारे उपसंग्रहकर्तृत्वेन कार्यं कुर्वन्ति स्म। काँठालपाडाग्रामे प्राथमिकशिक्षां प्राप्य वङ्किमचन्द्रः हुगलीमहाविद्यालये सम्मिलितवान् । तेजस्वी छात्रः श्रीनामन्यायबागिशनामकस्य विख्यातस्य विद्वान् इत्यस्य अधीनं संस्कृतसाहित्यस्य व्याकरणस्य च अध्ययनं कृतवान्। सः आङ्ग्लभाषायां संस्कृतभाषायां च सुदृढः आसीत्। सः विविधग्रन्थाःरचितवन्तः-

➢ **बङ्किमचन्द्रस्य मुख्यपुस्तकः**

| **रोमांसएवं इतिहासः** | **प्रवन्धः** | **सामाजिकएवं पारिवारिकः** | **तत्त्व एवं देसत्मामूलकः** |
|---|---|---|---|
| 'दुर्गेशनन्दिनी' (1865) | विज्ञानरहस्य(1875) | विषवृक्ष(1873) | आनन्दमठ (1884) |
| 'कपालकुण्डला (1866), | विविधसमालोचन(1876) | 'राजनी' (1877) | 'देवीचौधुरानी(1885) |
| मृणालिनी (1869) | कृष्नचरित्र(1892) | कृष्नकान्तेरउइल(1878) | ''सीताराम (1885) |
| 'राजसिंह'(1882), | श्रीमद्भगवदगीता(1920), | 'राजनी' (1877) | |

## ➢ वङ्किमचन्द्रकृतिषु सामाजिकचिन्तने मोक्षवादः

मोक्षः अथवा मुक्तिः भारतीयदर्शने अद्वितीया वा विशिष्टा वा अवधारणा अस्ति । भौतिकवादी चार्वाकान् विहाय प्रायः सर्वे भारतीयदार्शनिकसंप्रदायाः मोक्षस्य अवधारणां स्वीकुर्वन्ति । विभिन्नाः भारतीयसम्प्रदायाः भिन्नपदैः मोक्षं वा मुक्तिं वा निर्दिशन्ति, यथा 'अपवर्ग', 'निर्वाण', 'कैवल्य' इत्यादयः।चतुर्वर्गपुरुषार्थस्य मते मुक्तिः अथवा मोक्षः मानवजीवनस्य परमं लक्ष्यम् अस्ति । मोक्षस्य स्वरूपं मोक्षमार्गं च विषये भारतीयदार्शनिकसमुदायेषु भेदाः दृश्यन्ते।वङ्किमचन्द्रः अपि स्वस्य विविधकृतीनां माध्यमेन मोक्षस्य, मोक्षप्राप्तेः साधनानां च विषये स्वस्य विद्वान् विचारान् प्रकटितवान्।

भारतीयदर्शने प्रचलितानां मोक्षस्य भिन्नानां अवधारणानां मुख्यतया द्वयोः दृष्टिकोणयोः चर्चा कर्तुं शक्यते-नकारात्मकदृष्टिकोणः सकारात्मकदृष्टिकोणश्च। केचन भारतीयदर्शनानि मोक्षस्य अवस्थां सुखस्य आनन्दस्य वा अवस्थां न स्वीकुर्वन्ति, तथाकथितं नार्थदृष्टिः।तथा च केचन दर्शनानि मोक्षस्य अवस्थां शाश्वतसुखस्य अथवा आनन्दस्य अवस्थां मन्यन्ते, सकारात्मकदृष्टिः इति उच्यते। भौतिकवादी न्यायदर्शनसम्प्रदायस्य अनुसारं मोक्षावस्था इति अत्यन्तदुःखनिवृत्तिः । यतः नैयायिकाः शुद्धसुखस्य अस्तित्वं न स्वीकुर्वन्ति, तेषां मते, मोक्षावस्था नित्यसुखस्य अवस्था न भवितुम् अर्हति । तेषां मतं यत् जगति सुखं नास्ति यत् अन्ते दुःखं न जनयति । अतः नैयायिकानां मते मोक्षावस्था न केवलं दुःखस्य पूर्णनिवृत्तिदशा, अपितु मोक्षावस्था सुखस्य, कामना, द्वेषस्य च पूर्णतया निवृत्तिदशा भवति ।

अपरपक्षे मीमांसा-वेदान्तदर्शनयोः मोक्षविषये सकारात्मकदृष्टिकोणाः प्रकाशिताः सन्ति। मीमामसादर्शनानुसारं आत्मा एव अत्यावश्यधर्मः, सुखं, मोक्षं च आत्मनः अस्य अत्यावश्यकधर्मस्य साक्षात्कारः इति अर्थः। एवं मीमांसकानाम् अनुसारं मोक्षावस्था नित्यसुखदशा। किन्तु न्यायविदः एतत् मतं न स्वीकुर्वन्ति। तेषां मते, सुखस्य क्षणिकत्वात्, यत्किमपि क्षणिकं तत्प्रकृतेः अनित्यत्वात्, नित्यसुखं न भवितुमर्हति । यदि मोक्षावस्था सुखावस्था उच्यते, तर्हि मोक्षस्वभावविरुद्धा भविष्यति।

अद्वैतवादी शंकराचार्यः अपि मोक्षस्य विषये सकारात्मकं मतं प्रकटितवान्। तस्य मते, ब्रह्म सत्यस्य, सुखस्य, आनन्दस्य च मूर्तरूपम् अस्ति। जीवब्रह्मणौ प्रकृतौ समानौ। परन्तु माया वा अविद्या वा प्रभावेण जीवब्रह्मयोः समानत्वं न अवगन्तुं शक्नुमः। अतः तस्य मते मोक्ष इति जीवब्रह्मयोः अस्याः तादात्म्यस्य अर्थात् ब्रह्मसाक्षत्कारस्य साक्षात्कारः।शंकराचार्यस्य मते, मोक्षावस्था आनन्दस्य अवस्था। सुखस्य सुखस्य च केचन मौलिकाः भेदाः सन्ति। सुखं सर्वदा केनचित् कारणेन वा अन्यस्मात् वा उत्पद्यते इति मन्यते।किन्तु आनन्दः तादृशः कारणः नास्ति। सुखस्य भावस्य पृष्ठतः सर्वदा कारणं भवति। न तु सुखानुभवे तादृशं कारणं न स्यात्। मिमांसकानाम् इव बङ्किमचन्द्रः अपि मोक्षस्य विषये सकारात्मकं दृष्टिकोणं प्रकटितवान् । तस्य मते मोक्षावस्था सुखावस्था। सः लिखितवान् –

**"स्वतन्त्रस्य तु, अर्थात् संयमितस्य, शुद्धहृदयस्य, तस्य मनसः सुखस्य सीमा नास्ति। यः स्वतन्त्रः** अस्ति **सः अस्मिन् जीवने सुखी भवति। अत एव मया भवद्भ्यः उक्तं यत् धर्मः सुखस्य मार्गः अस्ति। स्वतन्त्रः पुरुषः स्वतन्त्रः भवति यदा तस्य सर्वाणि क्षमतानि पूर्णतया विकसितानि, सामञ्जस्यानि च भवन्ति । यस्य शक्तिः न प्रेरिता अस्ति सः अज्ञानात्, अक्षमतायाः, मनसः अशुद्धेः वा मुक्तिं कर्तुं न शक्नोति"।**

भारतीयदर्शने मोक्षस्य त्रयः मार्गाः उल्लिखिताः सन्ति — ज्ञानमार्गः, कर्ममार्गः, भक्तिमार्गः च। प्रश्नः अस्ति यत् किं ज्ञानं, कर्म, भक्तिः एव मोक्षाय पर्याप्ताः? अथवा एकः मुख्यः मार्गः अस्ति, एकः वा अन्ये मार्गाः तस्य मुख्यमार्गस्य सहायकमार्गाः सन्ति, मोक्षप्राप्त्यर्थं च सहायकाः सन्ति ? अथवा द्वयोः अधिकयोः मार्गयोः मध्ये सुम्मच्यः मोक्षाय आवश्यकः ? मीमांसाम् अपि विहाय प्रायः सर्वे भारतीयदार्शनिकाः स्वीकुर्वन्ति यत् केवलं कर्म एव, ज्ञानं भक्तिं च विना, मोक्षप्राप्त्यर्थं अनुकूलं नास्ति। अर्थात्, यथा कर्ममात्रं मोक्षप्राप्त्यर्थं सहायकं न भवितुमर्हति, तथैव कर्म मुख्यमार्गत्वेन ज्ञानं भक्तिं च तस्य सहायकमार्गत्वेन स्वीकृत्य मोक्षप्राप्त्यर्थं न पर्याप्तम्। एवं ज्ञानमार्गस्य वा भक्तिमार्गस्य वा समर्थकत्वेन वा कर्म मोक्षाय सहायकं भवति, अथवा केवलं यदि कर्म एकेन वा अधिकेन मार्गेण सह संयोजितः भवति, तर्हि कर्म मोक्षप्राप्त्यर्थं सहायकं भवितुम् अर्हति। परन्तु प्रश्नः अस्ति यत्, मानवजीवनस्य

परमं लक्ष्यं अस्ति यत् मोक्षविषये भिन्नाः मार्गाः किमर्थं उल्लिखिताः ? बङ्किमचन्द्रस्य मते हिन्दुधर्मानुसारं प्रत्येकः व्यक्तिः मोक्षप्राप्त्यर्थं समर्थः भवति । परन्तु प्रत्येकः व्यक्तिः भिन्नशिक्षायाः स्वभावस्य च कृते भिन्नः भवति।मोक्षमार्गस्य उल्लेखः कृतः अस्ति।सांसारिकः मोक्षप्राप्त्यर्थं कर्ममार्गं अनुवर्तते । ज्ञानी ज्ञानमार्गं अनुसृत्य, यः न बुद्धिमान् न कर्मक्षमः सः भक्तिमार्गम् अनुसरति । बङ्किमचन्द्र लिखित –

**"ऋजुमार्गस्य भिन्नः मार्गः नास्ति, परन्तु सर्वे सर्वदा ऋजुमार्गं अनुसर्तुं न शक्नुवन्ति। अस्मिन् जगति विविधाः जनाः, तेषां भिन्नाः शिक्षाः, भिन्नाः स्वभावाः च सन्ति। यस्य कस्यचित् परिवारः अस्ति, यस्य कदापि कुटुम्बं नासीत्, सः तत् त्यक्तवान् ।यः गृहस्थः, तस्य कृते कार्यं करोति, अपरिवारस्य कृते तपः यस्य हि बुद्धिमान्, तथापि लौकिकः, ज्ञानं विज्ञानं च विस्तृतं भवति, ध्यानयोगः विस्तृतः यस्य बुद्धिमान् न तु लौकिकः,अर्थात् योगिनः।अतः जगदीश्वरः सर्वविधमनुष्याणां हिताय एतत् अद्भुतं धर्मं प्रचारितवान्।सः दयालुः - तस्य उद्देश्यं सर्वेषां कृते धर्मं ऋजुं कर्तुं वर्तते"।**

ज्ञानमार्गिणां मते मोक्षप्राप्त्यर्थं ज्ञानमात्रं पर्याप्तम्। तेषां मते यदि कस्यचित् आत्मनः, जगतः, तयोः परस्परसम्बन्धस्य च विषये सम्यक् ज्ञानं नास्ति, तर्हि मोक्षस्य प्राप्तिः न सम्भवति। यथा - सांख्यस्य मते, यदि पुरुषप्रकृतेः स्वरूपस्य तयोः सम्बन्धस्य च सम्यक् ज्ञानं भवति, तर्हि मनुष्यस्य मोक्षप्राप्तिः सम्भवति। न्यायविदः अपि एतादृशं मतं धारयन्ति। तेषां मते ज्ञानं विना मोक्षः न सम्भवति। शंकराचार्यस्य मते ज्ञानमेव मोक्षस्य एकमात्रं मार्गम्।तथापि साङ्ख्यनैयिकयोः मतभेदः। सांख्याः नैयायिकाश्च मोक्षप्राप्तौ ज्ञानमार्गस्य प्राधान्यं स्वीकुर्वन्ति, परन्तु मोक्षप्राप्तौ कर्मभूमिकां न निराकरोति। परन्तु शंकराचार्यस्य मते मोक्षप्राप्त्यर्थं कर्मस्य भूमिका नास्ति, केवलं ज्ञानमेव मोक्षं प्राप्तुं शक्नोति।

मोक्षप्राप्त्यर्थं ज्ञानमात्रं न पर्याप्तम् इति मन्यते। तस्य मते सगुणदेवभक्तिं विना मोक्षं प्राप्तुं न शक्यते। वङ्किमचन्द्रस्य मते वैदिकधर्मे एतादृशी भक्तिः न दृश्यते।विभिन्नाः पुराणाः वैष्णवधर्माः च भक्तिवादस्य स्रोतः सन्ति।भगवद्गीतायां अपि भक्तिवादं प्राप्नुमः। परन्तु प्रश्नः अस्ति यत् मोक्षप्राप्त्यर्थं ज्ञानमात्रं किमर्थं न पर्याप्तम् ? वङ्किमचन्द्रस्य मते ज्ञानद्वारा मुक्तिं वा मोक्षं वा, ईश्वरादिविषये ज्ञातुं शक्नुमः।

किन्तु यदि कस्मिंश्चित् विषये ज्ञानं भवति तर्हि सः विषयः लभ्यते वा ? अस्माकं विषये द्वेषः अस्ति चेदपि, तस्य विषयस्य ज्ञानं भवितुं आवश्यकम्। परन्तु यदि अस्माकं द्वेष्टि वस्तुनः ज्ञानं भवति चेदपि, वयं तत् वस्तु प्राप्तुम् न इच्छामः। वङ्किमचन्द्रस्य मते ईश्वरस्य प्रति द्वेषः भवति चेत् ईश्वरः न लभ्यते । यतो हि तस्य मते 'मुक्ति' इत्यस्य अर्थः ईश्वरसमर्पणम्, ईश्वरः ज्ञानमात्रेण न लभ्यते, अर्थात् मोक्षः प्राप्तुं न शक्यते।सः मन्यते यत् ईश्वरस्य हृदये साक्षात्कारः कर्तुं शक्यते। यदा ईश्वरस्य प्रति स्नेहः भवति तथा च ईश्वरस्य प्रति एषः स्नेहः भक्तिः एव नास्ति। अत एव सर्वान् मानवप्रयत्नाः दिव्याः ईश्वरपरायणाः च यस्यावस्थायां भक्तिरिति । अर्थात् बङ्किमचन्द्रस्य मते मोक्षप्राप्त्यर्थं न केवलं ज्ञानं, अपितु ईश्वरभक्तिः सर्वथा आवश्यकी भवति।

गीतायां ज्ञानं, कर्म, भक्तिः च इति वाक्यानि मोक्षप्राप्तिसाधनत्वेन उल्लिखितानि सन्ति।अर्थात् ज्ञानं, कर्म, भक्तिः च, मोक्षप्राप्त्यर्थं प्रत्येकस्य मार्गस्य महत्त्वम् अस्ति।किन्तु बङ्किमचन्द्रः एतत् मतं न स्वीकरोति। सः मन्यते यत् यद्यपि गीतायां मोक्षमार्गत्रयेषु पृथक् पृथक् बलं दत्तं भवति। तथापि अन्ते दर्शयति यत् भक्तिः मोक्षस्य मुख्यमार्गः अस्ति तथा च ज्ञानं कर्म च मोक्षप्राप्त्यर्थं भक्तिस्य सहायकमात्रं भवति। सः सिद्धयितुं प्रयतते यत् गीतायाः ज्ञानयोगः कर्मयोगश्च वस्तुतः भक्तियोगस्य भिन्नाः व्याख्याः एव सन्ति। गीतायाः "निष्कम् कर्म" इति अवधारणां व्याख्याय वयं अवगन्तुं शक्नुमः यत् बङ्किमचन्द्रः कर्मयोगं भक्तियोगस्य भिन्नं व्याख्यां किमर्थं वदति।निष्कमकर्मस्य अवधारणानुसारं निष्कमचित्तेन सह अर्थात् विना किमपि प्रेरणा वा अहंकारं वा कार्यं कर्तव्यम्। यतो हि सकामकर्मबन्धनस्य कारणम् गीतायाम् उक्तम्–केवलम् ईश्वरोद्दिष्टं कर्ममेव निष्कामकर्म।बङ्किमचन्द्रस्य अनुसारं मनुष्यः तदा एव ईश्वरप्रधानं कर्म कर्तुं शक्नोति यदा तस्य सर्वाणि संकायानि ईश्वरतः न निष्पन्नानि भवेयुः, ईश्वरे च प्रवृत्ताः सन्ति-

अर्थात् ईश्वरभक्तिः अस्ति। ईश्वरभक्तिं विना मनुष्यस्य निष्क्रियकार्यं कर्तुं असम्भवम्। बङ्किमचन्द्रस्य मते निष्कम कर्मयोगः अक्षरशः भक्तियोगस्य अन्यत् नाम अस्ति। सः लिखति –

**"ईश्वरप्रधानाः अर्थात् ईश्वरप्रधानाः कर्माणि क्रियन्ते । असङ्गं विना फलकामं च कारयेत्। कर्माणि ईश्वरं प्रति नियुक्तानि भविष्यन्ति,एतत् कर्तुं सर्वं कार्यं शारीरिककौशलं च ईश्वरं प्रति निर्देशितव्यं भविष्यति। अतः कर्मयोग भक्तियोग। भक्तिसहितं तस्य एकत्वं सामञ्जस्यं चअयं प्राचीनः सिद्धान्तः, प्राचीनः धर्मः केवलं गीतायां वर्तते"।**

वङ्किमचन्द्रेण ज्ञानेन सह अपि भक्तिः एकता, सामञ्जस्यं च अस्ति इति सिद्धयितुं प्रयत्नः कृतः अस्ति । गीताम् अनुसृत्य कथयति, यः सर्वक्रोध, द्वेष, भय, कामादिविहीनः शुद्धचित्तः एव ज्ञानेन मुक्तिं प्राप्नुयात् । मोक्षाय कीदृशं ज्ञानम् आवश्यकम् ? येन ज्ञानेन ईश्वरस्य जीवानां च एकत्वं ज्ञायते ।एतादृशस्य ज्ञानस्य प्राप्त्यर्थं भक्ति-अनुशासनस्य ज्ञानस्य पाण्डित्यस्य समानः प्रेरणा, परिणामः च भवेत् इति इष्टम् एवं, ज्ञानं भक्त्या मार्गदर्शिते एव मोक्षानुकूलं भवति। सः लिखितवान्-

**"अहं इच्छामि यत् विद्वता सर्वेषां समानं प्रेरणा, परिणामः च भवतु। ज्ञानस्य सर्वे रूपाणि भिन्नानि न भवितुम् अर्हन्ति। यदि ज्ञानाधारितशिक्षणस्य सर्वेषां कृते समुचितप्रेरणा अन्तश्च भवति, तथा च यदि भक्तिशिक्षणस्य अपि व्यवहारिकधर्मव्यवस्थानुसारं समानः प्रेरणा, अन्त्यः च भवति, तर्हि यदा शिक्षणाधारितशिक्षणं भक्तिवशं भूत्वा ईश्वरं प्रति मुखं करोति, तदा एतत् स्तोत्रं प्राप्स्यति। कर्मयोगः व्यवहारे, ज्ञानं व्यवहारे।"**

मोक्षसाधनविषये बङ्किमचन्द्रस्य मतं 'सुमुच्चयवाद' इति न वक्तुं शक्यते इति भाति। यतः, बङ्किमचन्द्रः मोक्षप्राप्तौ ज्ञानस्य कर्मस्य च पृथक् महत्त्वं न ज्ञातवान्। यतो हि सः मन्यते यत् ज्ञानयोगः कर्मयोगश्च वस्तुतः भक्तियोगस्य रूपान्तरम् अस्ति, तस्मात् तस्य व्याख्यायां किञ्चित् नूतनं दृश्यते ।

## ➢ निष्कर्षः

मानवजीवनस्य परमं लक्ष्यं मोक्षः एव। ईश्वरवादी दार्शनिकाः च अस्य मोक्षस्य प्राप्तेः भिन्नाः उपायाः उक्तवन्तः। यत्र सर्वेषां मार्गः भिन्नः किन्तु लक्ष्यं समानम्। तथा च भवन्तः तत् लक्ष्यं कियत् सुलभतया प्राप्तुं शक्नुवन्ति इति मुख्यं वस्तु। अत्र च महर्षिः बङ्किमचन्द्रः सर्वैः दर्शितं मार्गं न समर्थितवान् अपितु मीमांसकवेदैः दर्शितं मार्गम् अनुसृत्य। यथा वैवाहिकजीवने निरतः व्यक्तिः अतीव सुलभतया मोक्षं प्राप्नुयात्।

ज्ञानमात्रेण मोक्षः न सम्भवति इति सः मन्यते । केवलं तस्य स्नेहः आत्मसाक्षात्कारः च तस्य मुक्तिं कर्तुं शक्नोति। सः श्रीमद्भगवद्गीतायां दर्शितमार्गानुसरणस्य विषये कथयति, तस्य मते सर्वेभ्यः क्रोध-काम-भय-काम-आदिभ्यः मुक्तिः भवन्तं मोक्षं प्रति नेष्यति। यतः क्रोध-द्वेष-भय-काम-रहितः ज्ञानस्य सम्यक् मार्गं द्रष्टुं शक्नोति । एवं सः अस्मान् मोक्षप्राप्तेः सम्यक् मार्गं दत्तवान्। मोक्षस्य मार्गः सुलभः सुगमः च भवति।

## ➢ उपयुक्तग्रन्थसूची-

1. चट्टोपाध्याय़,वङ्किमचन्द्र.(**धर्म्मतत्त्व**)

2. योगेश चन्द्र वागल सम्पादित,(**वङ्किम रचनावली**), 2य खण्ड,वङ्गीयसाहित्य परिषद,कलकाता,

3. वङ्किचन्द्र चट्टोपाध्याय़, (**विविध प्रवन्ध**)

4. प्रमथनाथ विशी,(**वङ्किम सरणी**)

************

**Volume XXI : January to June – 2023, ISSN 2250-1711**
**Journal of Veda Samskrita Academy [Recognised in the UGC-CARE List]**

# वैदिकवाङ्मये रुद्रः - मनुष्यताया उत्तरणम्

**Arnab Bandyopadhyay**
Asst. Professor in Sanskrit
Pijush Kanti Mukherjee Mahavidyalaya
Sonapur, Alipurduar, West Bengal- 736204
Mobile No. : 9333544737
Mail: ghantanotfound555@gmail.com

**प्रबन्धसारः**

परिदृश्यमानाः प्रकृतिनदीसमुद्रपर्वताः ईश्वरस्य साधनानुभूतेः विशिष्टरूपाणि। भुवि कवीनां काव्येषु तानि स्वस्वभङ्गिमया उपनिबद्धानि। अनुकृतिनिपुणो मनुष्यः वर्णाङ्कन्या प्रकृतिमनुभवति स्वविश्वमानसयोः। वस्तुतस्तु मानसिकवास्तविकारण्यकपटभूमौ धर्मशिल्पमानवतानां बन्धनं दृढहस्ताभ्याम् अकुर्वन् ऋषयः कवयश्च। तस्मादेव मनुष्यसत्ता बहुत्र अन्यत्सत्ताद्वयम् अतिक्रम्य स्थिता। उभयोः ऋग्यजुर्वेदयोः रुद्रदेवता भिन्नमननालोकसन्धानं प्रददाति। ऋग्वेदे रुद्रस्य भयानकस्य भीषणत्वस्य अन्तः कल्याणमयं शिवमयं रूपं यथा चिकित्सकरूपं सुस्पष्टं समुल्लिखितं वर्तते - "त्वादत्तेभी रुद्र शंतमेभिः शतं हिमा अशीय भेषजेभिः।" (ऋक्-२.३३.२) अर्थात् रुद्रप्रदत्तेन औषधेन यथा वयं शतं वर्षाणि जीवितुं शक्नुमः यथा वा रुद्रः व्याधिं समूलं नाशयति। एवमेव अन्या स्तुतिः -"भिषक्तमं त्वा भिषजां शृणोमि।" (ऋक्-२.३३.४)। ऋषिदृष्टौ रुद्रः वज्रबाहुः धनुर्बाणधरश्च। रुद्रसमः ओजस्वी देवः अन्यो नास्ति -
"न वा ओजीयो रुद्र त्वदस्ति।" (ऋक्-२.३३.१०) यजुर्वेदे रुद्राध्यायस्य षोडशाध्याये रुद्रदेवस्य स्तुतिमपेक्ष्य धनुषः इषुधेश्च स्तुत्याधिक्यं दृश्यते -"प्रमुञ्च धन्वनः त्वमुभयोः आत्न्योः ज्याम्।" (रुद्र-१६.७) अथवा, "विज्यं धनु कपर्दिनो विशल्यो वाणवाँ उत।"(रुद्र-१६.१०) रुद्राध्याये रुद्रः अनार्यजातेः समुपास्यो देवः अनुमेयः तथा ऋग्वेदे रुद्रः आर्यजातेः देवता। उभयोः मतयोर्मध्ये वर्तते सहस्रवर्षात्मकस्य ऋषिमननस्य तारतम्यम्। वस्तुतस्तु समाजेन सह मनुष्याणां सम्बन्धः यथा अविच्छेद्यस्तथा मनुष्योऽपि स्वार्थमेव समाजसृष्टिमकरोत्। यथा वृक्षेण सह वृक्षपत्राणां सम्बन्धः तथात्रापि। अस्मिन् समाजे अस्तित्वनिमित्तकः सङ्गामः यथा वर्तते तथैव स्वाभियोजनप्रक्रिया काचित् प्राचीनकालादेव मनुष्यैः आयत्तीकृता। वैदिकसमाजे पुरोहितानां ब्राह्मणानां वा महिमा पौनःपुन्येन कीर्तितश्चेदपि अस्तित्वनिमित्तकसंग्रामाय संहत्यै वा अन्त्यजानां निषादानां च स्वस्मिन् अन्तर्भावविषये स्तुतिविषये च कार्पण्यं न विहितम्। वर्तमानकाले वैदिकयुगस्य सरस्वतीतटिन्यां क्षीणायां लुप्तप्रवाहायां च सत्यां वैदिकचिकित्सको रुद्रदेवः अनार्यजात्या सह मिलितः सन् मङ्गलमयः शिवश्च अभवत् मानवतायै मानवताहिताय च।

**सूचकशब्दाः** - रुद्रः, मानवता, अनार्यः।

## भूमिका

परिदृश्यमानाः सर्वेऽपि प्रकृतिनदीसमुद्रपर्वताः ईश्वरसाधनानुभूतेः विमूर्तानि रूपाणि। पृथिव्यां तानि सर्वकालप्रसिद्धानां कवीनां काव्येषु स्वस्वभङ्ग्या उपनिबद्धानि। अनुकृतिनिपुणो मनुष्यः वर्णाङ्कन्या प्रकृतिमनुभवति स्वविश्वमानसयोः। अत्याधुनिककालेऽस्मिन्
स वर्णविन्यासः विवर्णितश्चेदपि अङ्कनीस्पर्शः अद्यापि तथैव विद्यमानः। जडपदार्थेषु निहितस्य शक्तिसत्त्वस्य पूर्णरूपेण

अन्वेषणमेकम् उत्कृष्टं साधनम्। एकत्र स्वर्गसौन्दर्यप्रकाशभङ्गिः अपरत्र च मर्त्यस्य जडस्य सचलवस्तुनः स्तुतिः वैदिकानाम् ऋषिकवीनां ऐश्वर्यप्रभया रत्नोज्वलिता आधुनिकविश्वे। दिव्यदृष्टेः आरण्यकशुद्धमनसश्च दृष्ट्या भास्वरदीप्तमासीत् आर्यमननम्। वक्तव्यप्रेक्षयोः बाह्यैश्वर्यचाकचक्यविरहितत्वेन एकस्मिन् अनाविले सौन्दर्यसागरे ऋषेः अवगाहनस्य फलमेव वैदिको मानवताबोधः। वस्तुतस्तु मानसिकवास्तविकारण्यकपटभूमौ धर्मशिल्पमानवतानां बन्धनं दृढहस्ताभ्याम् अकुर्वन् ऋषयः कवयश्च। तस्मादेव मनुष्यसत्ता बहुत्र अन्यत्सत्ताद्वयम् अतिक्रम्य स्थिता।

ऐतरेयब्राह्मणे रुद्रशब्दस्य व्युत्पत्तिरुक्ता - "स जात एवारोदीत् तद्रुद्रस्य रुद्रत्वम्" इति। निरुक्तकारस्य यास्कस्य मते - रुधातोः रुद्रशब्दो निष्पन्नः। रुधातोरर्थः रोदनम्। यो रोदिति स रुद्रः - रोदयतीति रुद्रः।

उभयोः ऋग्यजुर्वेदयोः रुद्रदेवता भिन्नमननालोकसन्धानं प्रददाति। ऋग्वेदे रुद्रस्य भयानकस्य भीषणत्वस्य अन्तः कल्याणमयं शिवमयं रूपं यथा चिकित्सकरूपं सुस्पष्टं समुल्लिखितं वर्तते -

"त्वादत्तेभी रुद्र शंतमेभिः शतं हिमा अशीय भेषजेभिः[1]।"

अर्थात् रुद्रप्रदत्तेन औषधेन यथा वयं शतं वर्षाणि जीवितुं शक्नुमः यथा वा रुद्रः व्याधिं समूलं नाशयति। एवमेव अन्या स्तुतिः - "भिषक्तमं त्वा भिषजां श्रृणोमि" इति[2]। ऋषिदृष्टौ रुद्रः वज्रबाहुः धनुर्बाणधरश्च। रुद्रसमः ओजस्वी देवः अन्यो नास्ति -

"न वा ओजीयो रुद्र त्वदस्ति [3]।"

वस्तुतस्तु विष्णुसरस्वतीवत् वैदिकदेवसमाजे रुद्रदेवः गौणश्चेदपि ऋग्वेदे तस्य भयङ्करभीषणदर्शनस्यैव प्राधान्यं परिलक्ष्यते।

यजुर्वेदे रुद्राध्यायस्य षोडशाध्याये रुद्रदेवस्य स्तुतिमपेक्ष्य धनुषः इषुधेश्च स्तुत्याधिक्यं दृश्यते -

"प्रमुञ्च धन्वनः त्वमुभयोः आर्त्न्योः ज्याम्।"[4]

अथवा,

"विज्यं धनु कपर्दिनो विशल्यो वाणवाँ उत।"[5]

सम्प्रति प्रश्नः - कोऽयं रुद्रः। तत्र उत्तररूपेण वक्तुं शक्यते यत् रुद्राध्याये रुद्रः अनार्यजातेः समुपास्यो देवः अनुमेयः तथा ऋग्वेदे रुद्रः आर्यजातेः देवता। उभयोः मतयोर्मध्ये वर्तते सहस्रवर्षात्मकस्य ऋषिमननस्य तारतम्यम्।

निषादजनसमुदायस्य धनुःसम्बन्धि यत् आयुधम् अस्माभिः अद्यावधि ज्ञातं तस्य प्रवर्तको वैदिको रुद्रदेवः इति कथने अत्युक्तिर्न भवति। यजुर्वेदे रुद्रः गिरिश इति सम्बोधितः - "शिवेन वचसा त्वा गिरिशोऽच्छावदामसि" इति। गिरिशशब्दस्य व्याख्यानावसरे उबटभाष्ये उक्तम् - "गिरिशः गिरौ पर्वते कैलासाख्ये शेते इति गिरिशः तस्य सम्बोधनं हे गिरिश" इति।

वस्तुतस्तु अरण्यपर्वतादिकं निषादानां मूलस्थानम् आसीत्। परवर्तिनि काले प्रसिद्धकवीनां काव्येष्वपि इदं प्रमाणितं भवति। महाकविः कालिदासः कुमारसम्भवस्य प्रथमसर्गे हिमालयस्य निषादानां च वर्णनं करोति -

"पद्यं तुषारश्रुतिधौतरक्तं यस्मिन्नदृष्टापि हतद्विपानाम्।

विदन्ति मार्गः नखरन्ध्रयुक्तैः मुक्ताफलैः केशरिणां किराताः॥"[6]

वस्तुतस्तु यजुर्वेदः ऋक्परवर्तिकालीना सृष्टिः। तस्मात् यजुर्वेदे रुद्रः निषादानाम् आराध्यो देवता। सूर्यम् आदित्यं वा विहाय निषादजनसमूहः अचलः। तस्मात् सोऽपि कवेः वर्णनात् न बहिर्भूतः –

"असौ योऽवसर्पति नीलग्रीवो विलोहितः।"[7]

ऋग्वेदेऽपि २.३३.१ तमे मन्त्रे ऋषिः रुद्रं प्रार्थयति -

"मा नः सूर्यस्य संदृशो यूयोथाः।"

एतद्विहाय रुद्राध्याये शिवशब्दस्य बहुशः उल्लेखात् पौराणिकशिवस्य उत्पतिवादोऽपि यजुर्वेदस्य ऋषीणां हस्तगत आसीत्। ए.एल.वासमान- महोदयः तस्य "The wonder that was India" इति ग्रन्थे लिखति - "Almost as popular as the numerous forms of Visnu was Siva, who evolved from the fierce vedic Rudra, with whom merged elements of a non-Aryan fertility deity."[8] इति।

सूक्ष्मेक्षिकया विचारे क्रियमाणे इदं प्राप्यते यत् रुद्रस्य भयङ्करमूर्तिरेव परवर्तिनि काले शैवधर्मस्य तथा शैवभावनायाः एकम् आदर्शस्वरूपं सञ्जातम्। ऋग्वेदकाले रुद्रस्य दीप्तं बभ्रुवर्णरूपं यजुर्वेदकाले विवर्णितं सत् अनार्यजातेः निषादस्य उपास्यत्वं गतम्। अध्यापकस्य नृसिंहप्रसादभादुडेः "महाभारतेर् प्रतिनायक्" इति ग्रन्थे वर्णितस्य निषादजात्यार्यसमाजयोः ऐकात्म्यतत्त्वम् अत्र समुल्लेख्यम्।

अतिप्राचीनकालादेव आर्याः निषादजनसमुदायं स्ववर्णकोटौ अन्तर्भावितवन्तः। उपायान्तरमपि नासीत्। एतेषां शस्त्रसामर्थ्यं देहपाटवं सांख्यबाहुल्यं चालोक्य अवहेलनमशक्यमासीदिति आर्याः एतैः सह । निषादाद्यनार्यजातयः भारतवर्षे आर्येभ्यः पूर्वमेव आसन् इति अनुमातुं शक्यते। तेषां भाषासंस्कृतिमनुष्यत्वानि स्वतन्त्राणि आसन्। युद्धविद्यायां धनुर्विद्यायां च ते पारङ्गता आसन् इति महाभारतयुगे एकलव्यचरित्रविश्लेषणेन अवगन्तुं शक्यते। ऋग्वेदस्य षष्ठमण्डलस्य एकषष्टितमे सूक्ते पञ्चजाताशब्दः प्रयुक्तः -

"त्रिषधस्था सप्तधातुः पञ्चजाता वर्धयन्ती वाजे वाजे हव्या भूत्।"[9]

अर्थात् त्रिलोकस्था सप्तावयवविशिष्टा सनिषादपञ्चवर्णसमृद्धशालिनी सरस्वती देवी युद्धाय आह्वानयोग्या भवति। ऋग्वेदीयसमाजे ब्राह्मणक्षत्रियवैश्यशूद्रैः चतुर्भिः वर्णैः सह निषादजातिः पञ्चमवर्णत्वेन गृह्यते स्म। अथर्ववेदस्य भूमिसूक्तेऽपि पञ्चमानवा इति शब्दस्य उल्लेखः प्राप्यते - "तवेमे पृथिवी पञ्च मानवा" इति [10]।

वस्तुतस्तु समाजेन सह मनुष्याणां सम्बन्धः यथा अविच्छेद्यस्तथा मनुष्योऽपि स्वार्थमेव समाजसृष्टिमकरोत्। वृक्षेण सह वृक्षपत्राणां सम्बन्ध इवायं सम्बन्धो वर्तते। अस्मिन् समाजे अस्तित्वनिमित्तकः सङ्ग्रामः यथा वर्तते तथैव स्वाभियोजनप्रक्रिया काचित् प्राचीनकालादेव मनुष्यैः आयत्तीकृता। वैदिकसमाजे पुरोहितानां ब्राह्मणानां वा महिमा पौनःपुन्येन कीर्तितश्चेदपि अस्तित्वनिमित्तकसंग्रामाय संहत्यै वा अन्त्यजानां निषादानां च स्वस्मिन् अन्तर्भावविषये स्तुतिविषये च कार्पण्यं न विहितम्। वर्तमानकाले वैदिकयुगस्य सरस्वतीतटिन्यां क्षीणायां लुप्तप्रवाहायां च सत्यां वैदिकचिकित्सको रुद्रदेवः अनार्यजात्या सह मिलितः सन् मङ्गलमयः शिवश्च अभवत् मानवतायै मानवताहिताय च।

युद्धावश्यकता काले नष्टा चेदपि आदितः विविधघातप्रतिघातैः स्वास्तित्वरक्षणसङ्ग्रामः मनुष्यैः आयत्तीकृतः। यथैकत्र ब्रह्मसाधनया जीवन्मुक्तिमार्गः ऋषिभिः प्रदर्शितः तथैवापरत्र भयाद्युत्कण्ठया इन्द्ररुद्रादीनां देवानां स्तुतिरपि कृता। वस्तुतस्तु मनुष्यजातिषु यदि काचित् एका विशिष्टजातिः कस्मिंश्चित् विषयविशेषे दक्षा भवति तदा अन्याभिः जातिभिरपि तस्यै दक्षतायै प्रयत्नः कर्तव्यः येन तत्तुल्या भवितुं शक्ष्यति। अथवा तया जात्या सह ऐकात्म्यं प्राप्य तत्संस्कारप्रज्ञालोकाचारादिकं मनुष्यैः आयत्तीकरणीयम्। अयं विषयः "जनसम्प्रदायगता मानसिकता" (community sentiment) इत्येवं चिन्तयितुं शक्यते। आर्याः बहिर्भारतात् समागताः उत प्रथमतः अत्रैव आसन् इति प्रश्नः अद्यापि असमाहितः। किन्तु यदा आर्याः भारतवर्षस्य श्रुतिपरम्परायां स्वप्रज्ञां न्ययोजयन् तदा अन्या अपि जनजातयः विद्यमाना आसन्। तासु जनजातिषु अन्यतमा निषादादिजातिः आर्येभ्यः मानसिकस्तरे अधस्तनापि दैहिकस्तरे अधिकबलशालिनी आसीत्।

जीवने बहूनि विविधानि च प्रयोजनानि प्रत्येकं जनसमुदायस्य आसन्। न कश्चित् सम्प्रदायः आत्मदीप आसीत्, न वा भवितुमर्हति। विविधसमस्यासु अभावेषु च परस्परम् आश्रयन्ते स्म ते। इयं परस्पराश्रयता लौकिकप्रयोजनार्थं चेदपि वैदिका आर्याः अन्यां जातिं स्वकोटौ अन्तर्भाव्य मनुष्यतामेव सर्वोच्चस्थानं प्रदत्तवन्तः। ते प्रतिवेशिवत् एकः अन्येन सह ऐकात्म्यं प्राप्य मनुष्यत्वस्य परां काष्ठां प्रादर्शयन्। उभयोर्मध्ये भाषारीतिनीत्याचारैतिह्यादिविषये भेदे सत्यपि प्रकृत्या कृत्रिमतया वा तां जातिं स्वीयत्वेन स्वीकृतवन्तः। न केवलं तां जातिं, अपि तु, तस्या जातेः अभीष्टान् विषयान् काव्येष्वपि उपनिबन्धवन्तः देवतास्थानं च तेषां कृते प्रदत्तवन्तः। वैदिकार्याणां जात्यन्तरं प्रति जातिवर्णनिर्विशेषण उदारत्वम् अद्वितीयरूपेण स्वमहिम्ना विराजमानमद्यापि प्रासङ्गिकतां बिभर्ति।

## पादटिप्पणी

1. ऋक्-२.३३.२
2. ऋक्-२.३३.४
3. ऋक्-२.३३.१०
4. रुद्र- १६.७
5. रुद्र-१६.१०
6. कुमारसम्भवम्-१.६
7. रुद्राध्यायः-१६.७
8. The wonder that was India - p. 240
9. ऋक्- ६/६१
10. भूमिसूक्तम्-१२.१५

## परिशीलितग्रन्थसूची

1. भट्टाचार्यः अधिकारी च, भवानीप्रसादः तारकनाथः च, वैदिकसङ्कलनम् (प्रथमखण्डः), द्वितीयप्रकाशः - फेब्रुयारी २००४, संस्कृत बुक डिपो, कोलकाता

2. महापात्रः, अनादिकुमारः, विषय समाजतत्त्व, एप्रिल २०१८, सुहृद पाब्लिकेशन, कोलकाता

3. Basham, A.L., The wonder that was India 2004, picador, London

4. मुखोपाध्यायः, गोविन्दगोपालः, श्रुतिसञ्चयनम्, डिसम्बर २०११, वर्धमानविश्वविद्यालयः

5. भट्टाचार्यः, गुरुनाथविद्यानिधिः, संस्कृतपुस्तकभाण्डार, १९९७, प्रथमसंस्करणम्, कोलकाता

**********

**Volume XXI : January to June – 2023, ISSN 2250-1711**
**Journal of Veda Samskrita Academy [Recognised in the UGC-CARE List]**

# न्यायनये प्रमारूपेण प्रमाणरूपेण च स्मृतेरपरिहार्यता

**Sandip Mallick**
Assistant Professor, Dept. of Sanskrit
Swami Niswambalananda Girls' College
Uttarpara, Hooghly, West Bengal- 712232
Contact No. : 7003347626
E-mail : sandipmallicksm66@gmail.com

**शोधसारः**- न्यायवैशेषिकमते जीवात्मनः ज्ञानं द्विविधं- स्मृतिः अनुभवश्च इति। चिन्तार्थक[1]-स्मृ-धातोः क्तिन्-प्रत्यये स्मृतिशब्दो निष्पन्नः।[2] अत्र वक्तुं शक्यते पूर्वानुभूतविषयस्य चिन्ता ज्ञानं वेति स्मरणक्रियायाः अर्थः इति। प्रमा-इति शब्दस्यार्थो हि प्रकृष्टं यथार्थं वा ज्ञानम्। यतो हि यथार्थानुभवजन्या स्मृतिर्हि यथार्था अयथार्थानुभवजन्या स्मृतिश्चायथार्था। अधुना व्युत्पत्तिगतार्थमनुसृत्य स्मृतिः प्रमा उच्यते न वेति विचार्यो विषयः। स्मृतिः प्रमा उच्यते चेत् स्मृतेर्जनकं प्रमेति वाच्यम्। किन्तु न्यायदर्शनानुसारिणः स्मृतेः साधनं प्रमाणं नोच्यन्ते। न्यायनये प्रमारूपेण प्रमाणरूपेण च स्मृतेरपरिहार्यता कथमिति विचारयितुं प्रबन्धोऽयं मया प्रस्तूयते।

**कूटशब्दाः**- न्यायदर्शनम्, ज्ञानम्, स्मृतिः,अनुभवः प्रमा, प्रमाणम्।

- **स्मृतिः प्रमा च**

स्मृतिः प्रमा उच्यते चेत् स्मृतेर्जनकं प्रमेति वाच्यम्। किन्तु न्यायदर्शनानुसारिणः स्मृतेः साधनं प्रमाणं नोच्यन्ते। न्यायदर्शनप्रणेत्रा महर्षिगौतमेन प्रत्यक्षानुमानोपमानशब्दप्रमाणानामेवोल्लेखो विहितः।[3] स्मृतेः साधनं यदि प्रमाणं स्यात्तदा गौतमः अपरस्यैकस्य प्रमाणस्योल्लेखं कुर्यात्। किन्तु प्रमाणचतुष्टयं विना अन्यप्रमाणस्योल्लेखो न कृतस्तेन। अत्र एवं वक्तुं शक्यते यत् तेषु चर्तुषु प्रमाणेषु एव स्मृतिसाधनम् अन्तर्याति। अतः अतिरिक्तप्रमाण्स्योल्लेखो न क्रियते। किन्तु नैयायिकाः स्मृतिसाधनस्य प्रमाणचतुष्टयेषु अन्तर्भवनं न स्वीकुर्वन्ति। यतो हि प्रत्यक्षप्रमाणम् असाक्षात्कारिणः परोक्षप्रमायाः जनको भवितुं न अर्हति। प्रत्यक्षप्रमाणेषु संस्कारस्यान्तर्भावः स्याच्चेत् तस्मात् संस्कारात् परोक्षस्मृतिरूपं फलं न उत्पद्येत। अपि च संस्कारः परोक्षप्रमाणानुमानोपमानशब्दादिष्वपि नान्तर्भवति। यतो हि परोक्षप्रमाजनकानि व्याप्तिज्ञान-सादृश्यज्ञान-पदज्ञानानि च यथाक्रमम् अनुमितिम् उपमितिं शाब्दबोधञ्च उत्पादयन्ति। किन्तु संस्कारः नापि किमपि ज्ञानं सन् स्वरूपतः उपस्थितः स्मृतेर्जनको भवति। अतः स्मृतिसाधनरूपः संस्कारः उक्तप्रमाणचतुष्टयेषु नान्तर्याति।[4] अतश्च प्रमाजन्यत्वाभावात् स्मृतिः न प्रमा।

अत्र पुनः प्रमाणस्य व्याख्याप्रसङ्गे न्यायसूत्रस्य भाष्यकारेण वात्स्यायनेन उक्तं - 'उपलब्धिसाधनानि प्रमाणानि' इति। अर्थात् उपलब्धेः साधनानि एव प्रमाणानि। महर्षिगौतमरचितस्य न्यायसूत्रस्य प्रथमाध्याये प्रथमाह्निकस्य पञ्चदशसूत्रे प्राप्यते उपलब्धिसम्बन्धीयमिदं वाक्यम्- 'बुद्धिरुपलब्धिर्ज्ञानमित्यनर्थान्तरम्' इति।[5] अर्थात् बुद्धिः उपलब्धिः ज्ञानञ्च पर्यायवाचकशब्दाः। स्मृतिरपि बुद्ध्युपलब्धिज्ञानादिपर्यायवाचकशब्दैर्निर्दिष्टुं शक्यते। अतः स्मृतिरूपयथार्थज्ञानसाधनस्य संस्कारस्य उपलब्धिसाधनत्वात् प्रमाणं, तस्य फलञ्च स्मृतिर्हि प्रमा।

अस्यापत्तेः समाहितौ उक्तं यत् केवलमुपलब्धिसाधनमेव न प्रमाणास्पदमपि तु अर्थवदुपलब्धिसाधनं हि प्रमाणम्। प्रमाणेन विषयबोधे सति प्रवृत्तिः साफल्यं भजते इति भाष्यकारेण वात्स्यायनेण न्यायसूत्रस्य आदावेवोक्तम्। अतः अर्थवत् प्रमाणम्।[6] स्मृतेः अर्थवदुपलब्धित्वात् तस्य साधनरूपः संस्कारो हि प्रमाणं, तत्संस्काररूपप्रमाजन्या च स्मृतिः प्रमा। स्मृतिर्हि प्रमापदवाच्या तदैव भवितुमर्हति यदा प्रमापदव्यवहारप्रयोजकः कश्चिद्धर्मः स्मृतौ स्यात्। अत्र एवमुच्यते ज्ञानत्वोपलब्धित्वादिधर्माः प्रमापदस्य प्रवृत्तिनिमित्तभूताः। ज्ञानत्वरूपस्य धर्मस्य समस्तज्ञानेषु सत्त्वात् स्मृतावपि तस्य सत्ता स्वीक्रियते। स्मृतौ सन् स धर्मः तत्रैव प्रमापदव्यवहारप्रयोजको भवति। किन्तु तन्मतं न यथार्थम्। अत्र कारणं हि ज्ञानत्वरूपो धर्मः यस्मिन्नस्ति तद्यदि प्रमापदवाच्यो भवति ।

तर्हि यत्किमपि ज्ञानं प्रमापदवाच्यं स्यात्। अर्थात् स्मृतिर्यथा प्रमापदवाच्या भवति तथैव विपर्ययादिज्ञानानि अपि प्रमापदवाच्यानि स्युरिति आपत्तिः स्यात्। अस्मादेव कारणात् ज्ञानत्वं नाम धर्मः प्रमापदस्य प्रवृत्तिनिमित्तो न भवति। अतः स्मृतिः न प्रमापदवाच्या।

ये तावत् प्रमात्वं जातिरुच्यते तेषां नये प्रमात्वं हि निर्विकल्पकज्ञानातिरिक्तः ज्ञाननिष्ठजातिविशेषः। सप्रतियोगिकं भवतीदं प्रमात्वम्। अर्थात् प्रतियोगिना हि प्रमात्वं निरूपितं भवति। यथा घटाभावपटाभावादयोऽभावाः तेषां प्रतियोगिभिः घट-पटादिभिः निरूपिताः भवन्ति तथैव 'इदं रजतम्' 'इदं रङ्गम्' इत्यादीनां ज्ञानानां प्रमात्वं हि रजतत्व-रङ्गत्वादिभिः निरूपितं भवति एतेषां ज्ञानानां रजतत्व-रङ्गत्वादिविषयकत्वात्।

अत्र प्रमात्वजातिवादीन् उद्दिश्य प्रश्नो भवति- घटपटादिभिर्निरूपिताः घटाभावपटाभावादयः यथा भिन्नाः भवन्ति तथैव रजतत्वप्रकारकं प्रमात्वं रङ्गत्वप्रकारकं प्रमात्वं वेत्यादीनि भिन्नाः जातयः वा? प्रश्नस्योत्तं प्रमात्ववादीनः वक्तुमर्हन्ति यत्- यदि प्रमात्वं नाम जातिः प्रतियोगिभेदे भिन्ना उच्यते तर्हि बहुप्रमात्वस्वीकारात् गौरवदोषो जायते। अतः एकमेव प्रमात्वं स्वीकुर्यात्। अपि च प्रमात्वं प्रतियोगिभेदेन भिन्नं स्याच्चेत् साङ्कर्यदोषोऽपि भवति। परस्परं परिहार्य अवस्थानादपि स्थानविशेषे पुनः परस्परमेकत्र स्थितौ सति साङ्कर्य्यदोषो भवति।[7]

किन्तु न्यायवैशेषिको गङ्गेशोपाध्यायमहोदयः मतमिदं न स्वीकरोति। तस्य नये प्रमात्वं न जातिः।[8] अत्र प्रमात्वं यदि जातिः स्यात् तर्हि स्वत ज्ञायते इति वाच्यम्। प्रमा हि किमपि ज्ञानम्। जातिः तदाश्रये समस्तेषु एव विद्यमाना तिष्ठति। अतः प्रमात्वजातिरपि तस्याश्रयेषु समस्तेषु विद्यमानस्तिष्ठति। न्यायनये ज्ञानं हि गम्यते अनुव्यवसायात्मकेन मानसप्रत्यक्षेण। जात्याश्रयो हि प्रत्यक्षयोग्यो भवति तदा तद्वृत्ति जातिरपि प्रत्यक्षयोग्या भवतीति विधिः। अतः किमपि ज्ञानमनुव्यवसायेन यदि ज्ञायते तर्हि तद्गतं प्रमात्वमपि ज्ञायते। अर्थात् ज्ञानस्य प्रमात्वविषये संशयावकाशो न स्यात्।[9]

अत्रापरैकापत्तिः स्याद्यत् – समानाधिकरणयोः जात्योः ते परत्वापरत्वविशिष्टे स्तः। यद्व्यापकं तत् परं यच्च व्याप्यं तच्च अपरमुच्यते।[10] यदि एकेव जाति अपरया सह समानाधिकरणा भवति तर्हि तयो व्याप्यव्यापकसम्बन्धस्तिष्ठति। प्रमात्वस्य जातिरूपेण स्वीकारे सति अनुभवत्वजाति-प्रमात्वजातिद्वयं प्रमारूपे अनुभवे एकत्रैव समाविष्टः स्यात्। प्रमायाः अनुभवत्वात् प्रमायां यथा अनुभवत्वमस्ति तथैव प्रमात्वमपि अस्ति। विध्यनुसारेण जातिद्वयस्य एकत्रावस्थानात् द्वयोः व्याप्यव्यापकसम्बन्धः स्यात्। एवं सति स्मृतिर्हि न प्रमा। यतो हि स्मृतौ प्रमात्वस्य स्वीकारात् प्रमात्वस्य व्यापकानुभवत्वमपि स्वीकार्यम्। किन्तु, स्मृतौ स्मृतित्वमेवास्ति न च अनुभवत्वम्। अपि अनुभवत्वासत्त्वात् अनुभवत्वव्याप्यं प्रमात्वमपि न स्यात्। अत्र कारणं हि व्यापको यदि कस्मिन्नपि अधिकरणे न तिष्ठति तर्हि व्याप्यमपि तस्मिन्नधिकरणे न स्यात् । अतः स्मृतिर्न प्रमा।[11] किञ्च, प्रमात्वस्य जातित्वस्वीकारे सति विपर्ययज्ञानस्यापि प्रमात्वं स्वीकार्यम्। अत्र कारणं हि विपर्ययज्ञानं धर्मीनि अंशे एव प्रमा, प्रकारांशे च भ्रमो भवति। रज्जौ यदा 'अयं सर्पः' इति ज्ञानं भवति तदा अयमिति अंशे भ्रमो न स्यात्, तद्धि सर्पत्वांशे भवति। प्रमात्वस्य जातित्वस्वीकारे तस्य च व्याप्यवृत्तित्वात्[12]तद्धर्माश्रयिनि व्यक्तौ समग्रांशस्यैव प्रमात्ववृत्तिः स्यात्। अतः तज्ज्ञानं धर्मिनि प्रमा प्रकारांशे च अप्रमा न भवतीति विपर्ययज्ञानस्य सम्भावनमपि न स्यात्। एवं प्रकारेण नैयायिकाः प्रमावृत्तेः प्रमात्वस्य जातित्वं स्वीकुर्वन्ति। केचिद् दार्शनिकाः अवाधितानुभवत्वं प्रमात्वमिति वदन्ति। यश्चानुभवः अवाधितविशेष्ये तत्प्रकारको भवति स एवानुभवः अवाधितानुभवः। तत्त्वचिन्तामणिकारेण मतमिदं खण्डितम्।[13] तन्मते प्रमायाः लक्षणमिदम् आत्माश्रयदोषदुष्टम्। यतो हि अवधित्वं स्वयमेव प्रमाघटितम्। अवाधितत्वस्य घटकं बाधकत्वमपि प्रमाघटितम्। अतः आत्माश्रयदोषदुष्टमिदं लक्षणं न ग्राह्यम्। पूर्वपक्षीयाणां लक्षणं खण्डित्वा तत्त्वचिन्तामणिकारः प्रमायाः सिद्धान्तलक्षणमुक्तं - 'यत्र यदस्ति तत्र तस्यानुभवः प्रमा। तद्वति तत्प्रकारकानुभवो वा।'[14] इति। अर्थात् यस्मिन्नधिकरणे यदस्ति तस्मिन्नेवाधिकरणे तस्यानुभवः प्रमा।

नैयायिकनये प्रमालक्षणं हि 'तद्वति तत्प्रकारकानुभवः प्रमा' इति। यस्मिन् अनुभवे तद्वद् विशेषकत्वं तत्प्रकारकत्वञ्च स्यात् स एवानुभवः प्रमा। लक्षणमिदमनुसृत्य स्मृतिः प्रमा उच्यते न वेति विचारप्रसङ्गे अस्माभिः वक्तुं शक्यते यत् न्यायनये स्पष्टत एव स्मृतौ प्रमात्वाभावो विद्यते स्मृतेः अनुभवत्वाभावात् तद्वतितत्प्रकारकानुभवत्वं प्रमात्वमिति प्रमालक्षणत्वात्। न्यायमञ्जरीकारस्य जयन्तभट्टस्य

मते न हि स्मृति विषयजन्या तस्याः नियतत्वेन अतीतविषयत्वात्। स्मृतेः विषयीभूतं वस्तु स्मृतिकाले न विद्यमानं तिष्ठति। अतः स्मृतिर्न अर्थजन्या विषयजन्या वोच्यते। न्यायमञ्जरीकारनये इदमेव अनर्थजत्वं स्मृतेः प्रमाख्याने हेतुभूतम्।[15]पितृमातृवियोगे सति तयोः असत्ताकालेऽपि तयोः स्मृतिरुत्पद्यते। अतः विषयनिरपेक्षतयैव स्मरणमुत्पद्यते।

उदयानाचार्येणोक्तं यत् स्मृतिः अयथार्था भवति, तस्याः जनकोऽनुभवो यथार्थ एव। यतो हि अनुभवकाले अनुभवविषयस्य या दशा गृहीता सा एव दशा तद्विषयानुभवकाले एव विद्यमाना आसीत्। किन्तु स्मरणकाले तद्विषयानुभूयमानस्य तादृशी दशा नास्ति। अर्थात् स्मृतिकाले स्मर्य्यमाणो विषयः अतदवस्थः। अतदवस्थस्य स्मर्य्यमाणविषयस्य तदवस्थारूपेण स्मृतेः विषयत्वात् स्मृतिः कदापि न यथार्था स्यात्।[16] किन्तु स्मृतेर्जनकोऽनुभवः यथार्थोऽपि भवति। अनुभवकालीना यादृशी दशा अनुभवस्य विषयरूपा आसीत् तदवस्था स्मरणकाले स्मर्य्यमाणे विषये नास्ति। अतः स्मृतिर्हि अयथार्था। केचिद्दार्शनिकाः भिन्नरूपेण सिद्धान्तस्य व्याख्यां कुर्वन्तः स्मृतेः प्रमात्वं न स्वीकुर्वन्ति। तेषां नये प्रत्यक्षानुभवस्य विषयरूपेण इदन्तायाः स्मृतेर्विषयरूपेण तत्तायाः प्रकाशो भवति

- **स्मृतिः प्रमाणञ्च**

प्रमाणशास्त्रे स्मृतेरवदानविश्लेषणप्रसङ्गे आदावेव प्रमाणस्य विश्लेषणमावश्यकम्। भारतीयदर्शने ज्ञानविषयकालोचनाप्रसङ्गे प्रमा प्रमाणञ्च भृशं गुरुत्वावहं मिथः सम्बन्धयुक्तं विषयद्वयम्। प्रमाविषयकालोचनात् परमधुना प्रमाणमालोचयिष्यामो वयम्।

महर्षिगौतमस्य न्यायसूत्रे प्रमाणस्य सामान्यलक्षणं न लभ्यते, केलवं विभागसूत्रमेव उपलभ्यते इति केषाञ्चिद् आपत्तिः।[17] न्यायसूत्रस्य भाष्यकारेण वात्स्यायणेन 'प्रमीयतेऽनेन इति प्रमाणम्'[18] इति उक्तम्। अनेन पदार्थः प्रमीयते इति व्युत्पत्तिवशात् प्रमाणशब्दः करणार्थबोधकः। अर्थात् प्रमाज्ञानस्य करणं हि प्रमाणमिति। न्यायनये यथार्थज्ञानं हि द्विविधम् – स्मृतिः अनुभवश्च। उभयविधस्य ज्ञानस्य करणमेव प्रमाणमुच्यते। यतो हि व्युत्पत्तिगतार्थमनुसृत्य यथार्थस्मृतिरपि प्रकृष्टा मा अर्थात् प्रमा। तस्याः करणं हि प्रमाणम्। किन्तु अस्माभिः क्वचिद्दृष्टं यत् स्मृतिः यथार्था अपि स्मृतिर्हि प्रमा इति न स्वीकृत्य स्मृतेः करणं संस्कारः हि प्रमाणमिति न वदन्ति। अत्र कारणं हि प्रमाशब्दस्यार्थो हि प्रकृष्टं ज्ञानमिति। यथार्थं ज्ञानं हि प्रकृष्टं ज्ञानम्। तज्ज्ञानम् अनुभवात्मकमेव भवति। अनुभवजनितस्य स्मरणात्मकस्य ज्ञानस्य अनुभवाधीनत्वात् तद्धि अनुभवापेक्षया नोत्कृष्टं भवति। अतः यथार्थानुभूतिरेव प्रमाशब्दस्यार्थोऽत्र।

वाचस्पतिमिश्रेणोक्तं - 'प्रमीयते अनेनेत्यस्य वाक्यस्यार्थे प्रमाणपदप्रयोगः। प्रमा च स्मृतेरन्यः अर्थाव्यभिचारी स्वतन्त्रः परिच्छेदः' इति।[19] अत्र प्रमापदस्य व्युत्पत्तिगतार्थं परिवर्त्य पारिभाषिकार्थं गृहीत्वा प्रमायाः आत्ततायाः भिन्ना स्मृतिः इति उच्यते। स्मृतिरूपं ज्ञानं निश्चयात्मकमपि न हि स्वतन्त्रमपि तु परतन्त्रमेव इति प्रागेव आलोचितम्। स्वतन्त्रपरिच्छेदस्य स्वतन्त्रनिश्चयात्मकज्ञानस्य च अभावादेव स्मृतिः प्रमा नोच्यते।

न्यायकुसुमाञ्जलि इति ग्रन्थे उदयणाचार्येण स्मृतिर्हि न प्रमेति सयुक्तिं प्रतिपादितम्। तस्य नये अनपेक्षताभावात् स्मृतिर्न प्रमाणं पूर्वानुभवसापेक्षत्वाच्च।[20] स्मृतिः सर्वदा पूर्वानुभूतं विषयमेव विषयीकरोति। विषयग्रहणे तस्य किमपि स्वातन्त्र्यं नास्ति। स्मृतेः यथार्थता

पूर्वानुभवस्य यथार्थतामपेक्षते। यथार्थे पूर्वानुभवे एव स्मृतिः यथार्था भवति। अर्थात् स्मृतेः निरपेक्षयथार्थता नास्ति। अस्मादेव कारणात् स्मृतौ प्रमात्वव्यवहारो न भवति। स्मृतेः प्रमात्वाभावात् तस्याः कारणस्यापि न प्रमाणत्वमङ्गीकार्यम्।

किन्तु वात्स्यायणेन प्रत्यक्षानुमानोपमानशब्दप्रमाणानामलोचनाप्रसङ्गे उक्तं - 'उपलब्धिसाधनानि प्रमाणानि' इति। अर्थात् उपलब्धेः साधनमेव प्रमाणमिति। वार्तिककारेणोद्योतकारेणापि प्रमाणस्वरूपस्य व्याख्याप्रसङ्गे उक्तं - 'उपलब्धिहेतुः प्रमाणम्' इति।[21] अत्र हेतुर्नाम करणम्। अत्रापि लक्षणीयस्य प्रमाणस्य लक्षणं तदुपलब्धेः करणत्वेनैव लक्षितम्। उपलब्धिः ज्ञानञ्चोभयः पर्यायवाचकः शब्द इति प्रागेवालोचितमस्माभिः। किन्तु, उपलब्धिसाधनमिति प्रमाणस्य लक्षणमपि प्रमाणान्तर्गतस्य प्रमेति शब्दस्य विशेषार्थं स्वीकृत्य स्मृतेः प्रमात्वस्वीकारः, स्मृतेः कारणस्य च प्रमाणत्वस्वीकारो न कृतः। जैनदार्शनिकाः प्रमाणरूपेण स्मृतिं स्वीकुर्वन्ति। हेमचन्द्रसुरिणा प्रमाणमीमांसाग्रन्थे प्रमाणस्य लक्षणमुक्तं - 'सम्यगर्थनिर्णयः प्रमाणम्' इति।[22] स्मृतिञ्च ते परोक्षप्रमाणेषु अन्तर्भावयन्ति। जैनतर्कभाषाग्रन्थे यशोविजयेन प्रमाणस्य लक्षणमुक्तं - 'स्वपरव्यवसायि ज्ञानं प्रमाणम्' इति।[23]

स्वपदस्यार्थस्तावद् आत्मा अर्थात् ज्ञानस्य स्वरूपम्। परपदस्यार्थो हि ज्ञानभिन्नमिति। तन्मते अविसंवादकत्वात् सफलक्रियानकत्वाद्वा स्मृतिर्हि प्रमाणम्।[24]

बौद्धयोगाचारसम्प्रदायाः स्वीकुर्वन्ति यत् इह जगति केवलं ज्ञानमोव सद्वस्तु। वैदान्तिकाः मन्यन्ते बाह्यजगतः प्रतीतिर्हि मिथ्या, ब्रह्म एव सत्यमिति। मतद्वयस्य खण्डनाय एव 'पर' इति पदस्य सन्निवेशः क्रियते। वैशेषिकनये स्मृतिर्हि विद्यासु अन्तर्भवति। विद्या नाम यथार्थज्ञानम्।

**निष्कर्षः**

प्रमाणशास्त्रे यथा स्मृतेरावश्यकता प्रभूतमस्ति प्रमेयशास्त्रेऽपि स्मृतेर्भूमिका परां काष्ठां भजते। भूरिशो नैयायिकाः स्मृतेः प्रमात्वं न स्वीकुर्वन्ति। किञ्च, स्मृतेः यथार्थज्ञानत्वमपि न स्वीकुर्वन्ति केचित् नैयायिकाः। स्मृतेः अप्रमात्वस्वीकारेऽपि अयथार्थत्वेऽपि वा न्यायसम्मतानां समेषां प्रमाणानामुपयोगितया स्मृतिं स्वीकुर्वन्ति सर्वे। प्रमाणचतुष्टयं विश्लेष्य दृष्टं यत् प्रत्येकं प्रमाणस्य उत्पत्तौ स्मृतेरावश्यकता अपरिहार्या। स्मृतिरूपं कारणं विना प्रमाणानि कामपि प्रमां न उत्पादयन्ति। किन्तु स्मृतेः प्रमात्वस्वीकारे स्वभावत एव तस्य कारणस्यपि स्वतन्त्रप्रमाणत्वापत्तिः स्यात्। अस्यापत्तेः समाहितौ विश्वनाथेनोक्तं स्मृतेः प्रमात्वे स्वीकृतेऽपि तस्य करणस्य स्वतन्त्रप्रमाणस्वीकारो न आवश्यकः। अत एव दृश्यते यत् प्रत्येकं प्रमाणस्य अपरिहार्या अङ्गस्वरूपा हि स्मृतिः।

**अन्त्यटीका**

1. स्मृ-चिन्तायाम्, पाणिनीयधातुपाठसमीक्षा, पृ.५४१
2. भारतीयदर्शनकोषः, प्रथमखण्डः, पृ.१८३
3. प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि – न्यायसूत्रम्, १/१/३
4. न, प्रत्यक्षस्यासाक्षात्कारिफलत्वानुपपत्तेः लिङ्गशब्दादेश्च सत्तामात्रेण प्रतीत्यसाधनत्वादिति तात्पर्यशुद्धिः, न्यायसूत्रम् , पृ. १०९
5. उपलब्धिसाधनानि प्रमाणानीति समाख्यानिर्वचनसामर्थ्याद् बोधव्यम् – न्यायसूत्रभाष्यम्, १/१/३, पृ. ८५
6. प्रमाणतोऽर्थप्रतिपत्तौ प्रवृत्तिसामर्थ्यादर्थवत् प्रमाणम् – वात्स्यायनभाष्यम्, न्यायसूत्रम्, १/१/१
7. तस्मात् परस्परपरिहारस्थितिविरुद्धम् – किरणावली, पृ. १६
8. न तावत् जातिः- तत्त्वचिन्तामणिः, प्रमाणलक्षणम् पूर्वपक्षः, पृ.३७२
9. योग्यव्यक्तिवृत्तित्वेन प्रत्यक्षत्वे प्रमात्वसंशयानुपपत्तेः प्रमात्वस्य प्रमेयत्वाच्च साक्षात्त्वादिना सङ्करापत्तेश्च। तत्त्वचिन्तामणिः, प्रमालक्षणम्, पूर्वपक्षः, पृ.३७२
10. अविरुद्धन्तु परापरभावस्थितीति नियमः। परं व्यापकम् अपरं व्याप्यमित्यर्थः, किरणावली, पृ. १६
11. सामान्यं च सामान्यान्तरेण सह परापरभावेन एकस्यां व्यक्तौ समाविशेत्। तत्रानुभवत्वं वा परं प्रमात्वं वा ? – तात्पर्यपरिशुद्धिः, न्यायसूत्रम् १/१/१, पृ. १०९
12. जातेर्व्याप्यवृत्तितानियमात् – तत्त्वचिन्तामणिः, प्रमालक्षणम्, पूर्वपक्षः, पृ. ३७३
13. नाप्यवाधितानुभवत्वं – तत्त्वचिन्तामणिः, प्रमाणलक्षणपूर्वपक्षः, पृ. ३८२
14. तत्त्वचिन्तामणिः, प्रमाणलक्षणसिद्धान्तः, पृ. ४०१
15. तस्मादनर्थजत्वेन स्मृतिप्रामाण्यवारणात्। अगृहीतार्थगन्तृत्वं न प्रमाणविशेषणम् – न्यायमञ्जरी, पृ. २१
16. अनुभवकाले तस्यार्थस्य तादवस्थ्यात्, स्मृतिकाले त्वतादवस्थात् – तात्पर्यशुद्धिः, न्यायसूत्रम् १/१/१, पृ. ११०
17. प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि- न्यायसूत्रम् १/१/३
18. उपलब्धिसाधनानि प्रमाणानीति समाख्यानिर्वचनसामर्थ्याद् बोद्धव्यम्। प्रमीयते अनेनेति करणार्थाभिधानो हि प्रमाणशब्दः तद्विशेषसमाख्याया अपि तथैव व्याख्यानं – न्यायसूत्रभाष्यम्, न्यायसूत्रम् १/१/३, पृ. ८५
19. न्यायवार्तिकतात्पर्यटीका, न्यायसूत्रम् १/१/३, पृ. १८६ – १८७

20. यथार्थानुभवो मानमनपेक्षतयेष्यते- न्यायकुसुमाञ्जलिः, ४/१, पृ. ३३५

21. उपलब्धिहेतुः प्रमाणम्, उपलब्धिहेतुत्वं प्रमाणत्वम् – न्यायवार्त्तिकम्, न्यायसूत्रम् १/१/१, पृ. ९

22. प्रमाणमीमांसा, सूत्रम् २, पृ. ५

23. जैनतर्कभाषा, प्रमाणपरिच्छेदः, पृ. ९

24. सा च प्रमाणम् अविसंवादित्वात् स्वयं निहितप्रत्युन्मार्गणादिव्यवहाराणां दर्शनात् – प्रमाणमीमांसा, पृ.- ७७

**सहायकग्रन्थपञ्जी**

1. अन्नंभट्टः, *तर्कसंग्रहः, तर्कसंग्रहदीपिका-नीलकण्ठी-भास्करोदयसहितः,* सम्पा. मुकुन्द-झा, निर्णयसागरः,बोम्बाइ,९९३३

2. अन्नंभट्टः, *तर्कसंग्रहः, तर्कसंग्रहदीपिकासहितः,* सम्पा. श्रीनारायण-गोस्वामी, संस्कृतपुस्तकभाण्डारः, कलिकाता, द्वितीय-परिवर्धितसंस्करणम्-अश्विन १९९० बङ्गाव्दः।

3. उदयणाचार्यः, *किरणावली (प्रथमखण्डः)*, सम्पा. गौरीनाथ-शास्त्री,श्रीदुर्गा प्रेस्, कलिकाता, १३६३ बङ्गाव्दः।

4. उदयणाचार्यः, *किरणावली (द्वितीयखण्डः),* सम्पा. गौरीनाथ-शास्त्री,संस्कृत-पुस्तक-भाण्डारः, कलिकाता, १३८५ बङ्गाव्दः।

5. केशवमिश्रः, *तर्कभाषा,* श्रीगङ्गाधरकरन्यायाचार्यकृत-बङ्गानुवाद-विवृतिसहिता, (प्रथमः द्वितीयश्च खण्डः), यादवपुरविश्वविद्यालयः महाबोधि-वुक्-एजेन्सी च, कलिकाता, २००८

6. गोस्वामी,श्रीनारायणः, *वैशेषिकसूत्रम्,* शङ्करमिश्रकृतोपस्कार-टीकासहितं चुम्बिराजशास्त्रीविरचितप्रकाशिकाविवृतिसहितम्, चौखम्बा-संस्कृत-सिरिज्-अफिस्, वाराणसी, १९६९

7. गङ्गेशोपाध्यायः, *तत्त्वचिन्तामणिः* (प्रत्यक्षखण्डः), मथुरानाथ तर्कवागीशकृतरहस्यटीकासहितः, सम्पा. कामाख्यानाथ-तर्कवागीशः,मोतिलालवनारसीदासः, एशियाटिक्-सोसाइटि, कलिकाता, प्रथमसंस्करणम्-१८९७, पुनर्मुद्रणम्, दिल्ली,१९७४

8. तर्कवागीशः, फणिभूषणः, *न्यायदर्शनम् (प्रथमखण्डः),* पश्चिमबङ्ग-राज्य-पुस्तकपर्षद्, कलिकाता, प्रथमसंस्करणम्, १९८९

9. तर्कवागीशः, फणिभूषणः, *न्यायदर्शनम् (तृतीयखण्डः),* पश्चिम-बङ्ग-राज्य-पुस्तकपर्षद्, कलिकाता, प्रथमसंस्करणम्, २०००

10. प्रशस्तदेवः, *पदार्थधर्मसंग्रहः,* आचार्यधुण्डीराजशास्त्रिविरचित-हिन्दीव्याख्यासहितः, चौखम्बा-संस्कृत-सिरिज्, वाराणसी-९, १९६६

11. भट्टाचार्यः, विश्ववन्धुः, *प्रमाणलक्षणम्,* तत्त्वमणिप्रमालक्षणानुवाद-व्याख्याभिः सहितम्, रामकृष्णमिशन्-इनस्टिटिउट् अव कालचार, कलिकाता, मार्च-२०००

12. तर्कवागीशः, श्रीपञ्चाननः, *न्यायमञ्जरी,* कलिकाताविश्वविद्यालयः, १९३९

13. विश्वनाथन्यायपञ्चाननः, *न्यायमुक्तावली, दिनकरी (प्रकाशः)-टीकासहिता, रामरुद्री (तरङ्गिनी)-टीकासहिता,* सम्पा. पण्डित-हरिरामशुक्ला-शास्त्री, चौखम्बा-प्रकाशनम्, वाराणसी, २०१५

14. शास्त्री, पञ्चाननः, *बौद्धदर्शनम् (सायणमाधवीयसर्वदर्शनसंग्रहे),* प्रकाशिका- शिवानि-भट्टाचार्यः, कलिकाता, १४०१ बङ्गाब्दः।

15. Maxmuller, *The Six Systems of Indian Philosophy*, Chowkhamba, Varanasi, 2008.

16. Vidyabhushan, Satish Chandra, *A History of Indian Logic,* Motilal Banarsidass, Delhi, 1978

************

**Volume XXI : January to June – 2023, ISSN 2250-1711**

**Journal of Veda Samskrita Academy [Recognised in the UGC-CARE List]**

# व्रतनियमसंस्कारादिषु कालिदासीयमनोवृत्तिः

**Priyanka Dey**

Ph.D Scholar, Department of Sanskrit
Cooch Behar Panchanan Barma University
Panchanan Nagar, Vivekananda Street,
CoochBehar, West Bengal- 736101
Contact Number- 9007461840
Email ID- deypriyanka436@gmail.com

**प्रबन्धसारः**

मनुष्यजीवने पापाचरणकारणात्कालुष्यम् आगच्छत्येव। अतः अन्तःशरीरस्य बाह्यशरीरस्य च शुद्ध्यर्थंशुच्यर्थं च, सकलमनो-विकारस्यदुर्भावनायाः च दूरीकरणाय, शुद्धसंकल्पार्थं जीवने उच्चलक्ष्यप्राप्त्यर्थं च व्रतानुष्ठानस्य महत्त्वम् अपरिसीमम्। किञ्चमनुष्यो भवति उत्सवप्रियः। उत्सवमाध्यमेनैवमानवानाम् ऐक्यं जायते। भारतीयसंस्कृतिभिः सह इदं व्रतम् उत्सवश्च अङ्गाङ्गीरूपेण सम्बद्धः। तस्मात्संस्कृतसाहित्यस्य श्रेष्ठकवेः कालिदासस्य रचनासु एतेषां सर्वेषां व्रतानाम् उत्सवस्य च वर्णना अन्यतमा भवति। आलोच्य शोध प्रबन्धे तस्य रचनासु व्रतानाम् उत्सवानां च वर्णनाकृता वर्तते।

**शब्दसङ्केतः**

कालिदासः, व्रतम्, उत्सवः, भारतीयसंस्कृतिः।

प्राचीनभारतस्य सर्वश्रेष्ठस्य प्रतिभावतः कवेः कालिदासस्य ख्यातिः न केवलं कालोत्तीर्णा, अपि तु देशोत्तीर्णाऽपि वर्तते। समग्रविश्वे लोकानां हृदयरञ्जनकारि-आदिकविवाल्मीकिव्यासदेवाभ्यां परं महाकविः कालिदासः संस्कृतसाहित्यस्य मूर्धन्यकविः इति कथ्यते। कारणं हि कालिदासस्य रचनायां भारतीयसंस्कृतिसमन्वितस्य लोकजीवनस्य मनोहरं चित्रं प्राप्यते। समाजस्य स्त्रीपुरुषयोः जीवने पापाचरणकारणात्यत्कालुष्यम् आगच्छति तस्य शुद्धता अपेक्ष्यते। एषा च शुद्धता आगच्छति व्रतानुष्ठानमाध्यमेन। तस्मात्महाकविः कालिदासः तस्य रचनायां विविधानि व्रतानुष्ठानानि वर्णितवान्। प्रायः व्रतानुष्ठाने उपवासः, देवान् उद्दिश्य आहुतिप्रदानं, किञ्च तेन सह निर्दिष्टसमयं यावन्निर्दिष्टदेवेन सह समन्वितवैदिकमन्त्रस्य जपः क्रियते स्म। आसन्नायाः कस्याश्चिविपदः निराकरणाय, कस्यापि विजयस्य कामनायाम् अथवा अन्यस्य कस्यचित् उद्देश्यार्थं व्रतानुष्ठानं सम्पद्यते स्म। यथा- अभिज्ञानशाकुन्तलम् इत्याख्ये नाटके शकुन्तलायाः भविष्यत्कालिकम् अमङ्गलम् अनिष्टञ्च दूरीकर्तुं महर्षिकण्वः सोमतीर्थं गत्वाव्रतानुष्ठानम् अकरोत्-

**इदानीमेव दुहितरं शकुन्तलामतिथिसत्काराय नियुज्य दैवमस्याः प्रतिकूलं शमयितुं सोमतीर्थं गतः।**1

एवं 'मालविकाग्निमित्रम्' इति नाटके अस्माभिर्दृश्यते कुमारवसुमित्रस्य विजयार्थं दीर्घायुर्लाभार्थम् एकशतस्वर्णमुद्राया व्रतानुष्ठाने दानस्य वृत्तान्तः-

**तस्यायुर्निमित्तं निष्कशत सुवर्ण परिमाणां देवी दक्षिणीयैः परिग्राहयति ।**2

व्रतानुष्ठानं सम्पादयितुं गृहमध्ये एकं निर्दिष्टं स्थानं निर्धारितं भवति, तच्च 'मङ्गलगृहम्' इति कथ्यते। यथा- मालविकाग्निमित्रे व्रतानुष्ठान कारिण्या महादेव्यामङ्गलगृहे आसनस्थावस्थायां विदर्भस्य वीरसेनस्य पत्रश्रवणम्-

**मङ्गलगृहासनस्था भूत्वा विदर्भविषयाद् भ्रात्रा वीरसेनेन प्रेषितं लेखं लेखकैर्वाच्यमानं शृणोति।**3

प्रायः व्रतस्य प्रधानम् अङ्गं भवति उपवासः। स्वल्पाहारेण च व्रतः समाप्यते स्म। यथा-

**आगामिनि चतुर्थदिवसे प्रवृत्तपारणो मे उपवासो भविष्यति।4**

व्रतोपवाससमाप्तेः पूर्वं ब्राह्मणभोजनं ब्राह्मणेभ्यश्च श्रद्धानुसारेण दक्षिणादानम् आसीत्-

**निष्कशत सुवर्ण परिमाणां दक्षिणीयैः परिग्राहयति ।5**

प्रायः संकल्पसिद्धिना प्रतिज्ञापूरणेन वा साकं व्रतः पाल्यते स्म। व्रतसमये सौभाग्यवत्यः स्त्रियः श्वेतवर्णं नानाभूषणानि च धारयन्ति स्म, केशपाशेन च दूर्वादलं धारयन्ति स्म। प्रसङ्गेऽस्मिन्विक्रमोर्वशीयम् इतिनाटके महाकवेः वर्णना उल्लेखनीया-

**सितांशुका मंगलमात्रभूषणापवित्रदूर्वाङ्कुरलांछिताऽलका।6**

क्रुद्धपतीनां प्रसादार्थं पत्नीभिः 'प्रियप्रसादव्रतः' क्रियते स्म। अप्रसन्नस्य उदासीनप्रायस्य च पुरुरवसः प्रसादार्थं ज्येष्ठमहीष्याः औशीनर्याः व्रतस्यास्य पालनवृत्तान्तः विक्रमोर्वशीयम् इतिनाटके प्राप्यते-

**व्रतापदेशोज्झित गर्ववृत्तिना मयि प्रसन्ना वपुषैव लक्षते।7**

साधकः यदा व्रतोपवासमाध्यमेन मृत्युं प्रार्थयति तदा यत्व्रतं पालयति, तस्य व्रतस्य नाम प्रायोपवेशः इति। रघुवंशे इन्दुमत्याः असामयिकदेहावसानात्परं दुःखान्वितः राजा रोगग्रस्तोभूत्वा मृत्युलाभापेक्षया प्रायोपवेशः इति व्रतस्य पालनेन मोक्षस्य कामनां कृतवान्-

**रोगोपसृष्टतनुदुर्वसिति मुमुक्षुः प्रायोपवेशनमतिर्नृपतिबभूव।8**

राजादिलीपःपुत्रलाभार्थमहर्षिवशिष्ठस्यआज्ञानुसारेणनन्दिन्याःप्रसादार्थम्एकविंशतिदिनानियावत् 'गोसेवाव्रतम्' अधारयत्। तत्र च स दुष्करपरीक्षातः आरभ्य सिंहेन सह युद्धमपि कृतवान्। यस्य वर्णना महाकविकालिदासेन रघुवंशस्य द्वितीयसर्गे प्रदत्ता-

**इत्थं व्रतं धारयतः प्रजार्थं समं महिष्या महनीयकीर्तेः । सप्तं व्यतीयुस्त्रिगुणानि तस्य दिनानि दीनोद्धरणोचितस्य।।9**

गृहस्थाश्रमेएकशय्यायांस्थितयोरपिपतिपत्न्योःकामोपभोगप्रत्याख्यानंभवतिअसिधाराव्रतम्। रघुवंशे च अस्यव्रतस्यउल्लेखःप्राप्यते-

**पित्रा विसृष्टां मदपक्षेया यः श्रियं युवाऽप्यंकगतामभोक्ता । इयन्ति वर्षाणि तया सहोग्रमभ्यस्यतीव व्रतमासिधारम्।।10**

अभिज्ञानशाकुन्तलनाटकेविरहव्रतस्यापिउल्लेखःप्राप्यते-

**वसने परिधूसरे वसाना, नियमक्षाममुखी धृतैकवेणिः । अति निष्करुणस्य शुद्धशीला मम दीर्घं विरहव्रतं विभर्ति।।11**

महाकविकालिदासदृष्ट्याअन्तर्बाह्यशरीरस्यशुद्धिलाभार्थं, सकलमनोविकारस्यदुर्भावनायाः च दूरीकरणाय, शुद्धसंकल्पार्थं जीवनेउच्चलक्ष्यप्राप्त्यर्थं च प्रायश्चित्तरूपेणव्रतानुष्ठानस्यमहत्त्वंसर्वजनस्वीकार्यम्।

पर्वोत्सवः

**उत्सवप्रियाः खलु मनुष्याः।12-**

**कालिदासस्यअनेनवचनेनसमाजेआनन्दितोभूत्वाउक्तंपर्वमिलित्वापालयतिमानवप्रकृतिः। ऋतुपरिवर्तनेप्रकृत्याःअनिर्वचनीयसौन्दर्यदर्शनम्, नूतनशस्यानांलाभः, परमात्मीयस्यप्रवासीजनस्यदीर्घकालात्परंसाक्षात्दर्शनं, राज्यसिंहासनप्राप्तिः, शत्रुविजयप्राप्तिः, विवाहः, सन्तानोत्पत्तिःइत्यादीन्उपलक्ष्यउत्सवंपालयतिमनुष्यः, यत्महाकवेःरचनायाम्उल्लिखितम्।**

कौमुदीमहोत्सवः

ऋतूत्सवानांमध्येप्रधानःकौमुदीमहोत्सवःशरत्पूर्णिमायांपाल्यते। वात्सायनःइमं 'कौमुदीजागरः' इति, भोजःतस्यशृङ्गारप्रकाशे एनंकौमुदीप्रचारःइति च अवोचत्। विशाखदत्तःमुद्राराक्षसेअस्यउत्सवस्यउल्लेखंकृतवान्, किन्तुकालिदासेनअस्य उत्सवस्य सङ्केतात्मकम्उल्लिखितम्- **पर्याप्त चन्द्रेव शरत् त्रियामा**13

**वसन्तोत्सवः**

महाकविःएनंवसन्तोत्सवः, वसन्तावतारः, ऋतूत्सवःइत्येवंनाम्नाउल्लिखितवान्। वसन्तकालेअयमुत्सवःपाल्यतेस्म, मालविकाग्निमित्रम् इतिनाटकेअयं 'वसन्तावतारः' इत्येवंरूपेणवर्णितः-

**अथैव प्रथमावतार सुभगानि रक्तकुरबकाण्युपायनं प्रेष्यं नव वसन्तावतार व्यपदेशेनेरावत्या निपुणिकामुखेन प्रार्थितो भवान्.......**।14

मदनमहोत्सवः

अस्मिन्उत्सवेकामदेवस्यपूजाआम्रमुकुलेनक्रियतेस्म। अस्मिन्प्रसङ्गेउल्लेख्यम्-

**यावदग्रपादस्थिता भूत्वा चूतलतिकां गृहीत्वा कामदेवार्चनं करोमि।**15

कामसूत्रेअयमुत्सवः 'सुवसन्तकः' इतिनाम्नाउच्यते, यःनृत्यगीतवाद्यप्रधानोत्सवः। यशोधरःतस्यजयमङ्गलाटीकायाम्अवोचत्-**सुवसन्तो मदनोत्सवः तत्र नृत्यगीतवाद्यप्रायाः क्रीडा।**16

अशोकदहनः

वसन्तोत्सवस्यैवएकम्अङ्गं, यत्अन्तःपुरस्यप्रमदवनेपाल्यतेस्म। सुन्दर्याःस्त्रियःपदाघातेनअशोकवृक्षेपुष्पाणिअजायन्त। मालविकाग्निमित्रेअस्यउत्सवस्यउल्लेखःप्राप्यते।

नाट्योत्सवः

पुत्रजन्म, राज्याभिषेकः, ऋतूत्सवःइत्यादिशुभसमयेनाट्योत्सवःआयोज्यतेस्म। वसन्तोत्सवेएवमालविकाग्निमित्रम् इतिनाटकं जनानांविनोदनार्थंसर्वप्रथमम्अभिनीतम्आसीत्-

**कालिदासग्रथित मालविकाग्निमित्र नाम नाटकमस्मिन् प्रयोक्तव्यम्।**17

पुत्रजन्मोत्सवः

पुत्रोत्पत्तिकारणात्उत्सवःपाल्यतेस्म। रघोःजन्मनःपरम्उत्सवःअस्यउत्सवस्यदृष्टान्तः-

**सुखश्रवा मंगलतूर्य निस्वनाः प्रमोदनृत्यैः सह वारयोषिताम् । न केवल सद्मनि मागधीपतेः पथि व्यजृम्भन्त दिवोकसामपि।**।18

विवाहोत्सवः

महत्त्वपूर्णसंस्काररूपेणविवाहोत्सवःरघुवंशम्, कुमारसम्भवम्इत्याद्यनेकरचनासुपरिलक्ष्यते-

**तौ सन्धिषु व्यंजितवृत्तिभेदं रसान्तरेषु प्रतिबद्धरागम् । अपश्यतामप्सरसां मुहूर्तं प्रयोगमाद्यं ललितांगहारम्।**।19

राज्याभिषेकोत्सवः

राज्याभिषेकार्थंस्तम्भचतुष्टयविशिष्टःएकःमण्डपःनिर्मितःआसीत्। यथा-

**ते तस्य कल्पयामासुरभिषेकाय शिल्पिभिः । विमानं नवमुद्वेदि चतुःस्तम्भ प्रतिष्ठितम्।**।20

भद्रपीठविराजमानंनूतनंराजानंप्रतिसकलतीर्थानांजलपूर्णहेमकुण्डैःस्नानंकार्यतेस्म। सर्वतःतूर्यपुष्करादिमङ्गलवाद्यंवाद्यतेस्म। एवंनानाप्रकाराचारमाध्यमेनराज्याभिषेकःपाल्यतेस्म। राज्याभिषेकेणप्रसन्नःराजावन्दिजनान्कारागृहात्मोचयतिस्म, अथवामृत्युदण्डं परिहरतिस्म।

काकवलि-उत्सवः

प्रवासिनःपत्युःमङ्गलार्थंपत्नीपत्युःगृहागमनतिथिपर्यन्तंपुष्पैःप्रतिदिनंपृथक्पृथक्कृत्वाकाकवलि-उत्सवंपालयतिस्म। यस्यउल्लेखः मेघदूतस्य उत्तरमेघेप्राप्यते- **आलोके ते निपतति पुरा सा बलिव्याकुला वा।**21

एतदतिरिच्यापिविविधधार्मिकोत्सवः, पानभूमिरचनोत्सवः, गृहप्रवेशोत्सवः, राज्ञःप्रत्यागमनात्परम्उत्सवः, विविधतीर्थादीनाम् उल्लेखःकालिदासस्यरचनायाम्उपलभ्यतेस्म।

अन्तिमेचेत्थंवक्तुंशक्यतेयत्, उत्सवःभारतीरसंस्कृतेःअङ्गम्। कविकुलगुरुकालिदासस्यरचनायांवर्णितानिसर्वाणिव्रतानि,

पर्वोत्सवस्य च वर्णनासम्पूर्णरूपेणतथ्यसमृद्धा। आधुनिकोत्कर्षः, सांस्कृतिकसंरक्षणम्, उन्नयनम् च इत्येतदर्थं च एतेषांव्रतपर्वोत्सवानांपालनम्अस्माभिःविधिपूर्वकम्अवश्यमेवकर्तव्यम्।

**अन्त्यटीका-**

1. **अभिज्ञान- शकुन्तलम् (चतुर्थ अङ्क)**
2. **मालविकाग्निमित्रम् (प्रथमाङ्क)**
3. **मालविकाग्निमित्रम् ( पंचमाङ्क)**
4. **अभिज्ञान- शकुन्तलम् (प्रथमाङ्क)**
5. **मालविकाग्निमित्रम् (प्रथमाङ्क)**
6. **विक्रमोर्वशीयम् (तृतीयाङ्क)**
7. **विक्रमोर्वशीयम् (तृतीयाङ्क)**
8. **रघुवंशम् (अष्टमाङ्क)**
9. **रघुवंशम् (द्वितीयाङ्क)**
10. **रघुवंशम् (त्रयोदशाङ्क)**
11. **अभिज्ञान- शकुन्तलम्(सप्तमाङ्क)**
12. **अभिज्ञान- शकुन्तलम् (षष्ठाङ्क)**
13. **कुमारसम्भवम् (सप्तमाङ्क)**
14. **मालविकाग्निमित्रम्(तृतीयाङ्क)**
15. **अभिज्ञान- शकुन्तलम् (षष्ठाङ्क)**
16. **जयमङ्गला (1/4/42)**
17. **मालविकाग्निमित्रम् (प्रथमाङ्क)**
18. **रघुवंशम् (तृतीयाङ्क)**
19. **कुमारसम्भवम् (सप्तमाङ्क)**
20. **रघुवंशम् (सप्तमाङ्क)**
21. **मेघदूतम् (उत्तरमेघ-25)**

**ग्रन्थपञ्जिः**


1. **मुखोपाध्यायः, रमारञ्जनः, रससमीक्षा, कलकाताः संस्कृत पुस्तक भाण्डार,** 2021.
2. **वसु, अनिलचन्द्रः , अभिज्ञान- शकुन्तलम् , कलकाताः संस्कृत वुक डिपो,** 2017.
3. **भट्टाचार्य , श्रीजीवानन्दविद्यासागरः, साहित्यदर्पणम् , कलिकाताः मुखार्जी एन्ड कोम्पानि,** 1900.
4. **त्रिपाठी, बाबूरामः , अभिज्ञानशाकुन्तलम्, आगराः महालक्ष्मी प्रकाशन ,** 1681.
5. Kale, M.R. THE ABHIJNĀNAŚĀKUNTALAM OF KĀLIDĀSA , Varanasi: Motilal Banarsi Dass 1931.
6. **अग्रवाल, वासुदेव शरणः , मेघदूतम्, दिल्लीः** 1951.
7. **सिंह, ठाकुर जगमोहनः, ऋतुसंहारम्, कलकाताः दि कालकाता सत्य प्रेस,** 1876.
8. **पाण्ड्यः, रमाशङ्करः, मालविकाग्निमित्रम्, वाराणसीः चौखाम्बा सुरभारती प्रकाशन,** 2010.
9. **शङ्करः, पि. पण्डितः, विक्रमोर्वशीयम्, वोम्बेः इन्दु प्रकाश प्रेस ,** 1879.
10. **विराजः, कुमारसम्भवम्, दिल्लीः राजपाल एन्ड सन्ज,** 2008.
11. **द्विवेदी, महावीर प्रसादः, रघुवंशम्, इलाहावाद, इंडियन प्रेस लिमिटेड,** 1623.


**********

**Volume XXI : January to June – 2023, ISSN 2250-1711**
**Journal of Veda Samskrita Academy [Recognised in the UGC-CARE List]**

# क्षेमेन्द्रकृतिततयः

**Archana Hegde**
Research Scholar
Sahitya Vibhaga
Karnataka Sanskrit University
Chamaraja Pete-560018
Bengaluru, Karnataka
Contact No. : 9480554801
E-mail : archanashashidhara@gmail.com

सन्देहातीततया निर्णीतः क्षेमेन्द्रस्य कालः।अयं क्षेमेन्द्रः अनन्तराज्यस्य आश्रये आसीत्।अनन्तराजस्य कालः क्रिस्तशकीय अष्टाविंशत्युत्तर एकसहस्र संवत्सरतः अशीत्युत्तर एकसहस्रवर्षं पर्यन्तं इति ऐतिहासिकाः वदन्ति।साहित्याङ्गणे क्षेमेन्द्रः प्रमुखः।पूर्वसूरिणां ग्रन्थान् आदृत्य रूपान्तरेण कृति रचनया सः स्वातन्त्रेणापि ग्रन्थान् अरचयत् क्षेमेन्द्रः।न केवलं ग्रन्थसंख्या बाहुल्येन अपि तु ग्रन्थप्रकारमहात्मेनापि क्षेमेन्द्रः अतिशेते। वाल्मीकिरामायणाधारेण रामायणमञ्जरी,व्यासभारतावलम्बनेन भारतमञ्जरी,गुणाढ्यकृत भृहत्कथां आश्रित्य भृहत्कथामञ्जरी इति ग्रन्थत्रयं तत्काल श्रोत्राभिरुचिं अनुसृत्य विरचिता ग्रन्थाः।प्रसिद्ध कविनां कृतिं आश्रत्य लेखनं न सुलभम्।तत्र पुनरुक्ति दोषात् निवर्तनं अनिवार्यं भवति।अपि च उक्तं अपि भङ्ग्न्तरेण निरूपणकौशलं प्रदर्शनीयं आपतति।तत्र यशस्वी क्षेमेन्द्रः।

**व्यक्तिपरिचयः-**

क्षेमेन्द्रस्य पिता प्रकाशेन्द्रः, . सः सिन्धोः पौत्रः अस्ति। अस्मात् श्लोकात् तस्य व्यासदास इति उपनाम आसीत् इति ज्ञायते।

"आसीत् प्रकाशेन्द्र इति प्रकाशः काश्मीरदेशे त्रिदशेश्वरश्रीः। तस्यात्मजस्सर्वमुनीषिशिष्य श्रीव्यासदासापरपुण्यनामा॥

**क्षेमेन्द्रस्य कालः**-१०२५-१०७५

अस्मात् श्लोकात् ज्ञायते यत् औचित्यविचारचर्चा, कविकण्ठाभरणं, सुवृत्ततिलकञ्च तेन काश्मीरराजस्य अनन्तराजस्य शासनकाले लिखितम्।

"काश्मिरेषु पृथुप्रतापसवितुः कीर्त्यंशुतारापतेः प्रौढारातिवनलस्य धनदस्येन्द्रस्य भूमण्डले।

विश्वाकारवतः पुनः कलियुगे विष्णो दीनोत्साहिनो राज्ये श्रीमदनंतराजनृपतेः कव्योदयोऽयं कृतः॥"

तस्य राज्ञस्य शासनकाले १०५० तमे वर्षे समयमातृकाग्रन्थसमाप्तिं कृत्वा अनन्तराजस्य पुत्रस्य कलशनस्य शासनकाले दशावतारचरितलेखनं समाप्तवान् इति अवदत् । अनन्तराजः १०२८-१०८० यावत् काश्मीरस्य शासनं कृतवान् ।क्षेमेन्द्रः भारतमञ्जर्यां वदति ,यत् सः विद्याविवृतिः अथवा प्रत्यभिज्ञावीवृतिवमर्शिनी इति ग्रन्थस्य कर्तुः अभिनवगुप्ताचार्यस्य सकशे साहित्यं अधीतवान् इति। अभिनवगुप्तः १०१४ तमे वर्ष प्रत्याभिज्ञादर्शनव्याख्यानं अकरोत्।

**अध्यनसम्पत्-**

क्षेमेन्द्रः अभिनवगुप्ताचार्यस्य सकाशे साहित्यअध्ययनं यदा कृतवान्,तदा काव्यानां परिचयं अपि प्राप्तवान् ।सामान्यतः पञ्चविंशतिवयस्कः सः इति भाति। अतः मार्किं क्रि.श ९९०(नवनवत्युत्तर) तमे वर्षे जन्म अभवत् इति भाति।एषः विराजिभूत्वा त्रिपुरेषु पर्वतेषु स्थित्वा लौकिकवर्षे ९१४१ अथवा ई.पू. १०७५ तमे वर्षे यः कलशाख्य शासनम् अकरोत्।तस्मिन् समये दशावतारचरितं नाम ग्रन्थं अरचयत्। तदनन्तरं सः मृतो भवेत् इति ज्ञायते।एतेन एषः एकादशशतमाने अजीवत् इति ज्ञायते।डा.बहुलः कविसमयः एवमेव

इति अभिप्रयति। गतानुगतिकता अस्ति इति तस्मिन् निन्दा न युज्यते।अन्येन गतोऽयंमार्गः इति ततः निर्गमनं मूर्खता एव।तस्मिन् पथिगमनेऽपि पादन्यासभेदेन गमनभेदः स्पष्टतया अवगम्यते।तथैव अवगतविषयस्यैव विशिष्टपदविन्यासेन निवेदिते,तस्य मौल्यं वर्धते।केचनः

स्व गन्तव्यं प्राप्तुं स्वयं मार्गं निर्मान्ति।क्षेमेन्द्रोऽपि स्वविचार प्रसारणे अभिव्यक्तौ च अन्यान्ययनानि उपगम्य स्वकीयं एव अयनं अन्विष्य ग्रन्थान् रचयनामास।एवं अनुगमनं नवगमनं इति उभयत्र अयं निपुणः क्षेमेन्द्रः।तत्र नवगमनविधिं अवलम्ब्य एकादशग्रन्थाःक्षेमेन्द्रेण संरचिताः।

**तस्यकृतिततयः-**

आहत्य क्षेमेन्द्रस्य द्वात्रिंशत् कृतयः उपलभ्यन्ते।अतः संक्षेपतः कासाञ्चन कृतीनां विवरणं प्रदीयते।ताश्च-कलाविलासः,चतुर्वर्गसंग्रहः,चारुचर्या,देशोऽपदेशः,नर्ममाला,नीतिकल्पतरुः,समयमातृका,सेव्यसेवकोपदेशः,वात्स्यायनसूत्रसारः,चित्रभारतं,कनकजानकी दशावतारचरितं इति। एतेषु ग्रन्थेषु नवपद्धतिः क्षेमेन्द्रेण अनुसृता दृश्यते।।तत्र तस्य सामर्थ्यावगमनाय औचित्यविचारचर्चाग्रन्थः अस्माभिः उल्लेखनीयो भवति।अलङ्कारशास्त्रस्य विभिन्नप्रस्थानस्थापको अयं ग्रन्थः। तस्य वैशिष्ट्यं अवगम्यते चेत् कश्मीर कवीनां वैशिष्ट्यं अपि अवगम्यते।तत्र औचित्यविचारचर्चायां पञ्चचत्वारिंशदुत्तर एकशतश्लोकाः विलसन्ति।तत्र ऊनचत्वारिंशत् श्लोका औचित्यविचारचर्चाग्रन्थस्य मूलभूताः, षडाधिकशतश्लोकाः उदाहरण प्रत्युदाहरणपराः। औचित्यानौचित्योप्रदर्शकता एव अस्य ग्रन्थस्य उद्देशः। औचित्यलक्षणं तस्य विभागः,तत्र लक्ष्यञ्च अस्मिन् ग्रन्थे विशेषतः उपलभ्यते। एतदवलोकनेन ज्ञायते, क्षेमेन्द्रे व्यक्तित्वद्वयं समाविष्टं इति। तत्र कवित्वोपहितः क्षेमेन्द्रः एकः, एवम् लाक्षणिकोपहितः क्षेमेन्द्रः अपरः। व्यक्तिरेकापि उपाधिभेदेन।

स्वयं क्षेमेन्द्रः,स्वदोषोल्लेखे,स्वगुणोऽल्लेखे च न जिहृति।अपि च विमर्शणशक्त्या प्रसिद्धकविनां कालिदासहर्षप्रभ्रतिनां अपि कृतौ निष्पक्षपाततया गुणदोषौ अन्विषते क्षेमेन्द्रः।स्वपरगुणादोषावेदने नैव भिन्नसंवेदना अनुभूता क्षेमेन्द्रेण ।तथा च षडविंशतिधा औचित्यं तत्र विभक्तम्। एतेनैव अनौचित्यस्यापि विभागः कृतो वेदनीयः। तदङ्गतया षडविंशतिधा अनौचित्यं अपि अस्मिन् ग्रन्थे विचारितम्। लक्ष्यचयने क्षेमेन्द्रस्य निष्पक्षपातता स्पष्टं अवगम्यते। स्वगुणं इव स्वदोषं अपि उत्कीर्तयति।परगुणकथने बुद्धिसङ्कोचो नास्ति। परदोषोत्कीर्तने भीतिः नैव अस्ति। तत्र किञ्चित् तस्य औचित्यचर्चायाः विचारः यदि अवगम्यते तदानीं-पदौचित्य, वाक्यौचित्य, प्रबन्धौचित्य, गुणौचित्य, अलङ्कारौचित्य, रसौचित्य, तत्र रसभेदानां हास्य, करुण,रौद्र, वीर बिभत्स्य,भयानकरसानां अद्भुतरसस्य च औचित्यानौचित्ये, रससङ्करस्य औचित्यानौचित्ये, तदनन्तरं प्रबन्धांशस्य क्रियापद कारक तत्रापि विशेषतः कर्तु-कर्म-करण-सम्प्रदान-अपादान-अधिकरणानौचित्यं,लिङ्गा,वचन,विशेषण,निपात,काल,देश,कुल,व्रत,तत्व,अभिप्राय,स्वभाव,तारसंग्रह,अर्थसंग्रहप्रतिभा,
विचार,नाम,आशौचन औचित्यं इति सप्तत्रिंशत् औचित्यं विचारितम्। तत्र क्रमशः अनौचित्यं औचित्यञ्च विचारयति।तत्र प्रसिद्धानां कालिदास,भवभूति,भट्टनारायण,बाणानां कृतीनां गुणाः दोषाश्च उल्लिखिता दृश्यन्ते।।अपि च कुत्रचित् स्वयं विनयवल्लीग्रन्थे स्वकीयवाक्यदोषं अत्र उल्लिखति।एवञ्च मुनिमीमांसायां, नीतिलतायां तस्य स्वकृतदोषः अपि लाक्षणिको भूत्वा अयं निर्दिशति।एवं क्षेमेन्द्रः काव्यमार्गस्य क्षेमलालने बद्धकटिरिव दृश्यते।एतस्य इतरे विषयाः प्रसङ्गात् क्रमशः उच्यन्ते।

**अनुगमनम्-**

रामायणं अधिकृत्य नीतिलताग्रन्थं, विनयवल्ली इति ग्रन्थं भारतमञ्जरीं अधिकृत्य रचितवान्।"मुनिमतमीमांसा"इति प्रचीनऋषीणां दूषणारूपं ग्रन्थं अयं रचितवान्।पराक्रमवर्णनवैखरीं यदि वयं परशीलयामः,तदा वेणीसंहारकर्तुः भट्टनारयणस्य, महावीरचरतकर्तुः

भवभूतेश्च शैल्याः सादृश्यं वयं पश्यामः। शब्दालङ्कार,उपमानोपमेयअलङ्कराःएतस्य अतिप्रियाः।यस्य कस्यापि वर्णनं अयं करोति चेत् तत्र अक्षसात् तच्चित्रं अनुभावयति। मूलग्रन्थस्य अविरोधतया एव विषयनिरूपणं एतस्य विशेषः।अतः महाकविपदयोग्यतांप्राप्तुं ये ये विषयाः अपेक्षिताः ताःसर्वाः विद्याः अपितस्मिन्सन्निहिताः आसन्। अतिकनिष्ठवयसि सः एतत् सर्वं अधीतवान् इति कविकण्ठाभरणग्रन्थे वदति।एतेन ज्ञायते तस्मिन् स्वाभाविकतया एव कविप्रकृतिरासीत् इति। विद्यायाः सहायः अस्य कवित्वविकसने हेतुरभवत् इति।नीरसस्य तर्कस्य वा व्याकरणस्य वा तत्र निन्दा एतेन कृता।

**जीवनशैली-**

क्षेमेन्द्रस्य आयुष्यस्य अधिकभागः देशाटने एवञ्च विदुषां उपन्यासश्रवणे एव गतं इति ज्ञायते।सर्वदा नाटकाभिनयं दृष्टुं सःआसक्तः आसीत्।सङ्गीते,चित्रकलायाञ्च तस्य नैपुण्यं आसीत्।सः स्वयं ग्रन्थकारस्सन्नपि इतरग्रन्थकारान् बहुमन्यते स्म।स्वेन रचितग्रन्थानां विमर्शं अत्यन्ततीक्षणदृष्ट्या सहनया सःविमर्शति । अतः अतिलघुग्रन्थानपि लिखित्वा दोषोद्घाटनं कर्तुं सः अद्वितीयः इति ज्ञायते। तस्य लघुग्रन्थेषु दर्पदलनं अतिप्रमुखं अस्ति। कलाविलासः, सेव्यसेवकोपदेशः, समयमातृका,नर्ममाला, लोकप्रकाशः इत्यादि लघुग्रन्था अपि एतेन संरचिताः।तस्य जीवितकाले अविवेकः यत्र क्वापि दृष्टश्चेत् तस्य खण्डनं अवश्यं करोति स्म।समाजसमुन्नतौ सः सदा जागरूकः आसीत्। तत्र आसक्तिरपि आसीत्।लोकानुभवस्य आवेदने कलाविलासग्रन्थः रचितः। मोह-डंब-कामइत्यादि दुर्गुणानां परिणामः कः?इति सः दशमे अध्याये निरूपयति। विषेशतः दशमे अध्याये करणिकानां दुर्मार्गं वर्णयति।तत्र उत्तकोचकराः एवञ्च विद्याभाषिणः,मोचकाः,अक्षरस्खालित्यं, एवञ्च अन्यथा लेखनम् इत्यादिविषये सः लिखित्वा लेखकाः कथं तत्र मूलग्रन्थमेव भस्मसात् कुर्वन्ति इत्यपि उक्तवान्।अन्यैः लिखितं पत्रं दोषयुक्तं इति यथाकथञ्चित् साधयित्वा तेऽपि यथा दण्डिता भवेयुः तथा कुर्वन्ति लेखकाः इति तत्र लिखति।

**समाजस्थितिः-**

अनन्तराजस्य शासनकाले कश्मीरदेशः सुखभोगभाग्यादीनां आगर एव आसीत्। राज्यभारक्रमः ब्राम्हणानामेव आसीत्।सर्वकारीयोद्योगाः अपि ब्राम्हणानामेव, तत्र लेखकाः,कायस्थाः इति प्रसिद्धा आसन्।न्यायालयेषु अपि भाषा गीर्वाणाभाषा एव आसीत्।अत्र प्राप्तिपत्रं यत् रिसीट् इति उच्यते तत् "उज्जमपत्रं" इति तदा वदन्ति स्म। राज्यशासकानां अङ्कितं मुद्रां विना तत्र पत्राणां प्रामाण्यं नासीत्। न्यायास्थानं-अधिकरणस्थानं इति वदन्ति स्म।न्यायस्थाने निर्णयः यो भवति तस्य पत्रं इति नामासीत्।पाठशालासु अनेके छात्राः आसन्। तेषां तु निश्शुल्कं विद्याभ्यासः तत्र भवति स्म। एवञ्च तत्र दारुमये कृष्णफलके वर्णमयलेखनेन तत्र छात्रान् बोधयन्ति स्म।प्रथमतः अक्षराभ्यसनं कर्तुं "ॐ स्वस्ति सिद्धं नमः सरस्वत्यै" इत्यादि लिखित्वा एव क्रीयते स्म। आयुर्वेदवैद्यशास्त्रस्य अपि प्रसारः तत्र आसीत्।वाग्भटस्य अष्टाङ्गचक्रदत्तसंग्रहःइति आधारग्रन्थः तदानीं आसीत्। आनन्दवर्धनः, रत्नाकरः, शिवस्वामी, भट्टकल्लटः, भट्टमुकुलः, उत्पलभट्टेन्दुराजः, भट्टतौतइत्यादयः अलंकारशास्त्रस्य निष्णाताः अनेकानि काव्यानि लिखित्वा तदानीं एव प्रसिद्धा आसन्। एवञ्च तस्मिन् काले अलंकारशास्त्रे ,साहित्ये,वेदान्ते,तर्कशास्त्रे अध्ययनकुतूहलिनः छात्राः अध्ययनार्थं तत्र गच्छन्ति स्म। तत्र पाठनार्थं अभिनवगुप्तसदृशाः पण्डिताः कुतूहलिनः आसन्।क्षेमेन्द्रः अनन्तराजस्य आश्रये यथा अजीवत् तथा तस्य पुत्रस्य कलशराजस्य आश्रये अपि अजीवत्।

**कविकण्ठाभरणम्—**

कविकण्ठाभरणग्रन्थस्य कविकर्णिका इति नामान्तरं अस्ति इति चारुचर्याग्रन्थात् अवगम्यते।शिष्योपदेशाय अयं युक्तो ग्रन्थः। अपि च विदुषां कृते विशेषविषयं आवेदयितुं अयं ग्रन्थः उपयुज्यते।तत्र अयं श्लोकः उदाहरणार्थं दीयते-

" सुविभक्तिसमन्वितं बुधैः गुणसंयुक्तसौष्ठवैः। रचितं पदकैः सुवर्णवत्वविकंठाभरणं विचार्यताम्॥ "

अत्र ग्रन्थे- १.कवित्वप्राप्तिः २.कविलक्षणं, ३.कवित्वचमत्कारः ४.काव्यस्य गुणदोषौ ५.प्राप्तिः

इति प्रकरण पञ्चकं वर्तते। कवित्वप्रप्तेः दैवानुगृहः तथा मानवप्रयत्नोऽपि हेतुःइति प्रतिपादयति।सरस्वतीपूजादिषु गुरुशिष्य संबन्धः मानसिकः इति खचितः।तत्र प्रथमप्रकरणान्ते संग्रहेण अयं विषयः एवमुक्तः-

इति तत सुकृतानां प्राक्तनानां विपाके भवति शुभमतीनां मन्त्रसिद्धं कवित्वम्।

तदनुपुरष यत्नैर्धीमतामभ्युदेति स्फुरति जडधियां श्रीशारदा साधनेन॥ इति

**चारुचर्या-**

चारुचर्याग्रन्थः नीतिप्रधानः। तत्र रामायणमहाभारतादिप्राचीनग्रन्थं आधृत्य एव नीतिविषयः प्रतिपादितः

यथा-न कुर्वीत क्रियां कांचिदनभ्यर्च्य महेश्वरं ईशार्चनरतं श्वेतं नाभून्नेतुं क्षमो यमः॥

इति उक्तं। तत्र यः महेश्वरपूजां कृत्वा ग्रन्थारम्भंकरोति, तं स्वयं यमः अपि निग्रहीतुं न शक्नोति इति उक्तम्। एवमेव-

न कुर्यात् परदारेच्छां विश्वासं स्त्रीषु वर्जयेत्। हेतो दशास्यस्सीतार्थे हतः पत्न्या विदूरतः।

ईर्ष्या कलहमूलं स्यात् क्षमामूलं हि संपदाम्। ईर्ष्यादोषाद्विप्रशाषमवाष जनमेजयः॥

इति तत्र उदाहरणद्वारा अमार्गानुसरणेन कथं अपायः इति नरूपितवान्।

**लोकप्रकाशः-**

क्षेमेन्द्रविरचितः लोकप्रकाशग्रन्थः अद्वितीयः। तत्र सामाजिकस्तरे संस्कृतस्य उपयोगःकथं कर्तुं शक्यते इत्युद्देशेनैव तेन विषयसंग्रहः कृतः। अत्र क्रमेण लोकोपयोगिपदानां कोषः एव संगृहीतः।उदाहरणार्थ-भूपतिः।नरपतिः।हयपतिः।गजपतिः।नृपतिः। भूपः।भूपालः।राजा।राजानकः। राजमहत्तमः।द्वारपतिः।कम्पनादिपतिः।हट्टपतिः। कोट्टेपतिः।चौरपतिः।लङ्कादिपतिः। विषयादिपतिः। सेनाधिपतिः।सचिवाधिपतिः।द्रङ्गाधिपतिः।डामराधिपतिः।भूपकारः।प्रतीहारः।

एवं तस्य कश्मीरदेशस्य सीमा का इति निश्चप्रचमुक्तम्।एवञ्च तत्र राज्यव्यवस्था कीदृशी आसीत् इति वक्तुं तत्र कस्मिन् कस्मिन् विषये कः अधिपतिर्भवति इति तस्य विवरणं दत्तम्।

तस्य अधिकारव्याप्तिः निर्दिष्टा। उदाहरणार्थे-

नृणां षष्टिसहस्राणां अधिपद्यो तथा जगुः । राज्ञीश्वरमुद्वहति स द्वाराधिप उच्यते॥१॥

प्रजानां परमः कम्पो मोहकम्पं निवारयेत्। गजाङ्गं च समाख्यातं स ज्ञेयः कम्पनापतिः॥२॥

वाजिनो यत्र तत्राहं तत्र (यत्र) वाजिनः। न ते यत्र न तत्राहं नाहं यत्र न तत्र ते॥३॥

एषां वाजिनां सहस्रसंख्यानामानीकिनीनामयुतस्य यः अधिपतिः सोऽश्वपतिः॥

तत्र व्यवहारविषये, भूमिविनिमयविषये, किं लेखनीयं, कथं लेखनीयं इति तस्य मार्गः प्रदर्शितः। एकेनविषयः।क्रोधनविषयः। द्वाविंषतिविषयः।चालनविषयः।समालविषयः।देवसूचि(र)विषयः।भृङ्गविषयः।वितस्ताविषयः।सत्रवविषयः। खर्वारिविषयः। नीलाविषयः।हारीविषयः।जलहडीयविषयः।खडूवीयविषयः।फाग्वाविषयः।लहरविषयः।श्रौडलीयविषयः।नीलाशविषयः।एषां विषयानां ग्रामविभागो यत्र-

षष्टिग्रामसहस्राणि षष्टिग्रामशतनि च। षष्टिग्रामस्त्रयो ग्रामाः ह्येतत्कश्मीरमण्डलम्।।१।।

तत्र पुणये गिरौ वणिग्वाणिज्यापणश्चादाहयःस्थिताः तेषां योऽधिपतिः। तस्मिन् हट्टे रात्रौ मुषणामारणाभित्तिभेदसन्धितस्कराः ये सन्धि

ददति वा मुषन्ति वा मारयन्ति एतत्संरक्षणार्थे यो द्रुह्यति स चौरपतिः। पारमार्थिकश्चात्मा एव लोकः तथा भूर्भुवः स्व इति लोकाः।भूलोकः,भुवोलोकः,स्वर्लोकः,महर्लोकः,जनलोकः,तपोलोकः,सत्यलोकः,इत्येवं सप्तलोकाः। एषु सप्तलोकेश्वथ निवसन्ति तेषां योऽधिपतिः स ईश्वरः।यत्र यत्र यस्मिन् विषये लोकस्येश्वरः तस्मिनृतौ संयतर्था गजाश्वरथः।यो आद्योऽनीकस्य लोकानामालोकयति स लोकाधिपतिः।

एवंमेव लोकप्रकाशग्रन्थेनापि तत्र लोकः कथं उपकृतः इति दृष्टान्तमूलकेन नरूपितः। अतः प्रायोगिकरीत्या कथं संस्कृतस्य उपयोगः कर्तुं शक्यते इति क्षेमेन्द्रेण तन् मार्गः निर्दिष्टः।

**आधारग्रन्थाः -**

संस्क्तशास्त्र मञ्जूषा-डा.उदयशङ्कर झा-चौकाम्बा सुरभारतीप्रकाशन-वारणासी।

लोकप्रकाशकोशः-महाकविः क्षेमेन्द्रः।

कविकण्ठाभरण-महाकवि क्षेमेन्द्रः-प्रकाशकःमोतिलाल बनारसीदासः-दिल्ली;पटना;वारणासी

साहित्यदर्पणम्-विश्वनाथकविराजः

संस्कृतसाहित्यविमर्शः-कविराजश्रीमदाचार्यपण्डितद्विजेन्द्नाथशास्त्री-संस्कृतमणिमालायाः प्रथमोमणिः।

संस्कृत साहित्ये काश्मीरस्य योगदानम्-कन्नड भाषा पुस्तकम्-डा.के.एस्.नागराजन्।

औचित्यविचारचर्चा- महाकविः क्षेमेन्द्रः।

*************

**Volume XXI : January to June – 2023, ISSN 2250-1711**
**Journal of Veda Samskrita Academy [Recognised in the UGC-CARE List]**

# वाल्मीकिरामायणे ब्रह्मादिदेवैः श्रीरामस्वरूपवर्णनम्

**Modhurima Mukherjee**
Research Scholar,
Sri Sri University, Cuttach- 754006, Odisha
Mail id – modhirima.sans@gmail.com

श्रीरामस्य स्वरूपवर्णनं बालकाण्डे दशरथस्य पुत्रेष्टिविधानावसरे ब्रह्मादिदवैः कृतम्। पुत्रोत्पत्तिप्रतिबन्धकसकलदुरितनिवारणार्थं भगवदङ्गभूतब्रह्मादिदेवताराधनरूपेऽश्वमेधे निर्वृत्ते पुत्रप्राप्तिकारणं क्रतुं यागं सुमन्त्रोक्तं मनसि निधाय ऋष्यश्रृङ्गं प्राथयते। तदा ऋष्यश्रृङ्गः दशरथस्य प्रार्थनां स्वीकृत्य पुत्रीयामिष्टिं प्रारब्धवान्। अयोध्यायां सम्पद्यमाने यागे भागप्रतिग्रहार्थं सत्यलोकादिस्थब्रह्मादिद्वारा जगत्सृष्ट्यादिविस्तारकर्तारः साकेतस्थब्रह्मविष्णुमहेश्वराः गन्धर्वसहिता देवाश्च सिद्धाः परमर्षयश्च समवेता प्रकटीभूय यागे स्थिताः। सर्वे देवा: लोककर्तारं ब्रह्माणं प्रत्युक्तवन्तः यत् हे भगवन् त्वया पूर्वं रावणाय साकेताधीशातिरिक्तसर्वाबध्यत्वरूपं वरं दत्तम्। तस्य रावणस्य दुष्टस्वभावः अतः वरदानेन मोहितः रावणः ऋषीन्यक्षान्स-गन्धर्वान्ब्राह्मणानसुरान् च प्रतापयति। सूर्योऽपि रावणं न संतापयति। रावणस्य पुरतः सूर्यो मन्दकिरणो भवति। तस्य पार्श्वे वायुर्न वाति शनै र्वाति। स्वाभाविकचञ्चलतरङ्ग- समूहविशिष्टोऽपि समुद्रस्तं दृष्ट्वा न कम्पते। अतो तस्य रावणस्य वधार्थमुपायं चिन्तयतु। तत देवोक्त्यनन्तरं चिन्तयित्वा पूर्ववृत्तमनुस्मृत्योक्तं यत् गन्धर्वयक्षाणां देवदानवरक्षसां च अवध्यः अहमस्मि स्यामिति रावणेन प्रार्थिता किन्त्वनादरात् मनुष्यस्यावध्योऽहमिति न प्रार्थिता। तस्माद्धेतोः स मानुषात् नराकृतिपरमात्मनो रामात् वध्यः। एवं श्रुत्वा सर्वे देवा महर्षयः प्रहृष्टा अभवन्। तस्मिन्नेव काले परमकारुणिको भगवान् भक्तानाम्मनोरथपरिपूरणाय सर्वान्तर्यामितया व्याप्यः विष्णुः वैकुण्ठात् दशरथयज्ञवाटमाजगाम। श्रीरघुनाथस्वरूपात्मकं भगवान्विष्णोः समीपं प्राप्य सम्यक् स्तुत्वा प्रार्थयाञ्चकुः। हे विष्णो ! जनानां हितकामनया दशरथस्य तिसृषु भार्यासु चतुर्विधं भरतादिसहितं कृत्वा रावणस्य वधार्थं प्रकटय्य।

तत्र वाल्मीकिरामायणे बालकाण्डे पञ्चदशसर्गे वाल्मीकिना उक्तम् -

**त्वां नियोक्ष्यामहे विष्णो लोकानां हितकाम्यया । राज्ञो दशरथस्य त्वमयोध्याधिपतेर्विभो ॥**
**धर्मज्ञस्य वदान्यस्य महर्षिसमतेजसः । अस्य भार्यासु तिसृषु ह्रीश्रीकीर्त्युपमासु च ॥**
**विष्णो पुत्रत्वमागच्छ कृत्वात्मानं चतुर्विधम् । तत्रत्वं मानुषो भूत्वा प्रवृद्धं लोककण्टकम् ॥**
**अवध्यं दैवतैर्विष्णो समरे जहि रावणम् । स हि देवान् सगन्धर्वान्सद्धांश्च ऋषिसत्तमान् ॥** [1]

सीताया अग्नौ प्रवेशसमये ब्रह्मरुद्रेन्द्रयमवरुणकुबेरा आगत्य श्रीरामस्य स्वरूपं वर्णयन्नुक्तवन्तः। हे राघवः मनुष्यदेहे सर्वस्य लोकस्य श्रेष्ठः सर्वजगत्कर्तुरपि शासकः। सर्वविषयकज्ञानविशिष्टानां विभुः स्वामी ब्रह्मादिदेवगणे श्रेष्ठः। त्वं स्वयंभुः जगतः सृष्टिस्थितिविनाशहेतुः सर्वज्ञः सर्वेश्वरोऽपि सन् अज्ञ इव जनककुले प्रादुर्भूतां सीतां किमर्थमुपेक्षस। रुद्राणां मध्ये अष्टमो रुद्रः महादेवः। श्रीरामः नारायणपदवाच्यः विराडरूप: शङ्खचक्रगदायुधधारी। एकश्रृङ्गो वराहरूपः। तस्य विराट्रूपत्वं वर्णयन् कथयन्ति यत् द्वौ अश्विनौ ते कण सूर्यचन्द्रमसौ नेत्रौ। प्रलयानन्तरे सृष्टेश्च पूर्वं त्वमेव दृश्यसे। यथा- वाल्मीकि रामायणे उक्तम्-

**कर्ता सर्वस्य लोकस्य श्रेष्ठो ज्ञानविदां विभुः । उपेक्षसे कथं सीतां पतन्तीं हव्यवाहने ॥**
**ऋतधामा वसुः पूर्वं वसूनां च प्रजापतिः । त्रयाणामपि लोकानामादिकर्ता स्वयंप्रभुः ॥**
**रुद्राणामष्टमो रुद्रः साध्यानामपि पञ्चमः । अश्विनौ चापि कर्णौ ते सूर्याचन्द्रमसौ दृशौ ॥**

**अन्ते चादौ च मध्ये च दृश्यसे च परंतप । उपेक्षसे च वैदेहीं मानुषः प्राकृतो यथा ॥** [2]

**'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्'**[3] इत्यादि छान्दोग्यश्रुतिरपि रामायणोक्तीं समर्थयति। श्रुतिराशयः वर्तते यत् अग्रे संसारसृष्टे प्राक् इदं सत् एव आसीत् इदं नाम रूपात्मकं जगत् कारणरूपं सत् अणु जीवात्मसंज्ञमासीत्। सृष्टेः अग्रेः इदं नामरूपात्मकं सदेव सन्मात्रम् एकीभूतं सति परमात्मनि स्थितमासीत्। एकमेवाद्वितीयम् एकं सजातीयविजातीयस्वगतभेदशून्यं एव। वस्तुतस्तु सृष्टेः अग्रे इदं चिदचिद्भ्यां विशिष्टं, यद् वा चिदचिदात्मकं सत् अव्याकृतनामरूपतया सत् परमात्मात्मकमासीत्।

श्रीरामस्य विभुत्वं व्यापकत्वञ्चापि वाल्मीकिरामायणे वाल्मीकिनोक्तम्। तेनानुसारेण विविधं भवतीति विविधं जगद्भावयतीति ब्रह्म। '**तदैक्षत बहु स्यां प्रजायेयेति**'[4] इति श्रुत्या तस्य बहुभवनं स्पष्टम्। एवं च विभुत्वं सर्वगतत्वं व्यापकत्वं वा। विभुत्वे सति चेतनत्वं ब्रह्मलक्षणम्। परमात्मानः विभुत्वं '**अनुप्रविश्य नामरूपे व्याकरवाणि**'[5] इति श्रुत्योपपद्यत। **'स पर्यगाच्छुक्रमकायव्रणमस्नाविरं शुद्धमपापविद्धम्'**[6] इति श्रुतिवचनेनापि तस्य सर्वव्यापकत्वं भजते। सर्वं जानातीति सर्वज्ञः सर्वं विन्दतीति सर्वविद् यस्य एष महिमारूपो भुवि विराजते। एष आत्मा परमात्मा राघवेन्द्रः श्रीरामः दिव्ये अप्राकृते द्योतनशीले महाकाशरूपे ब्रह्मणः श्रीरामचन्द्रस्य ब्रह्मपुरं तस्मिन् ब्रह्मपुरे साकेते सीतया सह विराजते। भक्ताः आनन्दरूपं परमानन्दमयम् अमृतं परमात्मानं श्रीरामं परिपश्यन्ति अथवा सेवकसेव्यरूपेण जानन्ति। तेषां साधकानां हृदयग्रन्थिः जडचेतनात्मिका भिद्यते नष्टा भवति। सर्वे सन्देहाः आत्मानात्मविषयकाः सन्देहाः नाश्यन्ते। तथा च अस्य जीवात्मानः कर्माणि प्रारब्धक्रियमाणसंचितानि नष्टानि भवन्ति।

हिरण्यमयकोशे साकेते रजोगुणरहितं निष्कलं ब्रह्म श्रीरामः शुभ्रं सकलदोषवर्जितम्। ब्रह्मस्वरूपस्य श्रीरामस्य कृते सूर्यः तारकं चन्द्रमास्तारकाश्च न प्रकाशन्ते तदा अयमग्निः प्राकृतः कुतः केन सामर्थ्येन प्रकाशेत। तमेव परमात्मानं प्रकाशमानमनुलक्ष्य सर्व चिदचिदात्मकं प्रकाशितं भवति। तस्य ब्रह्मणः श्रीरामस्य प्रकाशेन इदं सर्वं प्रकाशते। अनेन ज्ञायते यत् अग्रे पृष्ठीभागे दक्षिणतः वामतश्च नीचैः उपरि सर्वत्रैव श्रीरामैव। श्वेताश्वतरोपनिषद्युक्तम्-

**मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् । तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत् ॥** [7]

न क्षरतीत्यक्षरम् आप्नोति व्याप्नोतीति वा अक्षरम्। बृहति बृंहयति इति च ब्रह्म। अस्थूलं स्थूलत्वरहिते सति अणुभिन्नम् इत्यनेन जीवात्मपरमात्मनोर्भेदः प्रतिपादितः। जीवात्मा अणुः '**एष्वणुरात्मा चेतसा वेदितव्यः**'[8] अयं च परमात्मा च अनणुः अणुभिन्नत्वे सति अह्रस्वम्। अह्रस्वेऽपि दीर्घत्वरहितम्। स्नेहभिन्नम्। तमोवायू ताभ्यां रहितम्। आकाशभिन्नम्। रसभिन्नम्। गन्धभिन्नम्। अचक्षुष्कमित्यादिना सर्वत्र नञ्घटितपदेन अन्यव्यवच्छेदो निराकृतः ब्रह्मणः सर्वमयत्वात्। एतद् अक्षरम् सर्वव्यापकं ब्रह्म अविदित्वा सेव्यत्वेन न ज्ञात्वा, बहूनि वर्षसहस्राणि यावत् जुहोति, तपति वा स अन्तवत् फलं लभते। अन्य देवतोद्देशत्वात् तत्फलानां च सान्तत्वात्। यश्च एतत् अक्षरं अविदित्वा इतः अस्मांल्लोकात् प्रैति गच्छति। एतत् अक्षरम् अदृष्टम् अश्रुतम् अमतम् अविज्ञातं दर्शनश्रवणमननविज्ञानविषयबर्हिभूतम्, किन्तु द्रष्टृत्वादिधर्मोपेतम्। एतस्मिन्नेवक्षरे सर्वं ओतप्रोतः।

हे पुराणपुरुषोत्तम ! इन्द्रियाणामीशः नियन्ता अत हृषीकेषः। पुरुषेभ्यः क्षराक्षरेभ्यः उत्तमः पुरुषोत्तमः। त्वमेव महेन्द्रः निरतिशयैश्वर्यसम्पन्नः, पद्मं नाभौ यस्य स पद्मनाभः। शरण्यं शरणमर्थात् आश्रितसंरक्षणे कदाचिदपि भङ्गं न प्राप्नोति। त्वं यज्ञः। यज्ञो वै विष्णुरिति श्रुतेः। ओंकारः प्रणववाच्यः, ओमित्येकाक्षरं ब्रह्मेति श्रुतेः। तथाहि-

**सिद्धानामपि साध्यानामाश्रयश्चासि पूर्वजः । त्वं यज्ञस्त्वं वषट्कारस्त्वमोंकार : परात्परः ॥** [9]

श्रीरामस्योंकारस्वरूपमपि शास्त्रकृद्भिः प्रतिपाद्यते। ओम् इति एतत् इदम् अक्षरं ब्रह्म सर्वमेव ओङ्कारस्य व्याख्याभूतम्। निरस्तहेयगुणकं समस्तहेयप्रत्यनीकगुणगणनिलयं ब्रह्म तदपि ओंकार एव जगत्कारणत्वात्। एतत् सर्वं चिदचिदात्मकं जगत् ब्रह्म, ब्रह्मशरीरकम्। अयमात्मा परमात्मा ब्रह्म, यद् वा आप्नोतीत्यात्मा, **'यस्यात्माशरीरम्'**[10] इति श्रुतेः। अयमात्मा ब्रह्म ब्रह्मशरीरं

सोऽयम् आत्मा परमात्मा चतुष्पात्। जीवस्य तिस्रोऽवस्थाः प्रत्यवस्थं जीवात्मना सह शरीरे तिष्ठत्यन्तर्यामी परमात्मा। जाग्रदवस्थायां जीवेन सह शरीरे तिष्ठन् अन्तर्यामी विराट् कथ्यते, सहस्रशीर्षा स एव लक्ष्मणः। एवं स्वप्नावस्थायां जीवात्मना सह शरीरे तिष्ठन् अन्तर्यामी तैजसो हिरण्यगर्भो भवति, स शत्रुघ्नः। पुनः सुषुप्तौ जीवेन सह शरीरे वर्तमानः प्राज्ञः स हि भरतः। पुनस्तुरीयावस्थायां जाग्रत्स्वाप्नसन्धौ जीवेन सह शरीरे तिष्ठन्नन्तर्यामी तुरीयो भवति स एव भगवान् श्रीरामचन्द्रः। अकारस्य लक्ष्मणो जाग्रदधिष्ठाता विराट्, उकारस्य शत्रुघ्नः स्वप्नस्वामी तैजसो हिरण्यगर्भः, मकारस्य प्रकाशक: प्राज्ञः सुषुप्तीशो भरतः, अर्धमात्रा प्रकाशको रामस्तुरीय परमेश्वरः। श्रीरामोत्तरतापिन्युपनिषद्युक्तम्-

**अकाराक्षरसंभूत: सौमित्रिर्विश्वभावनः । उकाराक्षरसंभूतः शत्रुघ्नस्तैजसात्मकः ॥**

**प्राज्ञात्मकस्तु भरतो मकाराक्षरसंभवः । अर्धमात्रात्मको रामो ब्रह्मानन्दैकविग्रहः ॥** [11]

ब्रह्मादयः श्रीरामस्य स्वरूपं वर्णयन् वदन्ति यत् सर्वेषां लोकानां सिद्धरूपः धर्मः त्वमसि। देवसेवानिर्वाहक: राजसेनापतिः ग्रामणीः, निश्चयात्मिकावृत्तेः प्रवर्तक: दिव्यजनपदादिपालकः, सर्वेषां लोकानामुत्पत्तिस्थानं, सर्वोपादानं रणे शत्रूणां नाशकर्ता, निरतिशयैश्वर्यसम्पन्नः महेन्द्रः, साक्षात्ब्रह्मादिदेवानां जनकः सहस्रशृङ्गवान् अर्थात् वेदवत् अनेकशाखासम्पन्नः, सिद्धानामाश्रयस्त्वमेव। त्वमेव यज्ञः, सर्वान्तर्यामी, अत्यन्तमचेतनेष्वपि त्वमन्तर्यामीत्यर्थः। त्वमेव सहस्रचरणत्वादिविशिष्टानन्तरूपो पृथिवदींस्तद्वर्तिभूतानि च धारयसि। सहस्रचरणः सर्वत्र प्रकाशद्वारा परिपूर्णत्वात् अनेकचरणविशिष्टः। हे राम! त्वं विराट् त्रिंल्लोकान्धारणत्वात्। अत एव नारायणोऽसि। तव हृदयं सर्वाधारभूतं ज्ञानस्वरूपं, तव जिह्वा मन्त्रिर्मिता वाग्देवी सरस्वती। सर्वे देवा ते रामाणि। तव निमेषः रात्रिः उन्मीलनं दिवसः। एतत्सर्वं श्रीमद्वाल्मीकिये रामायणे श्रीमद्वाल्मीकिना उक्तम्-

**सेनानीर्ग्रामणी: सर्वं त्वं बुद्धिस्त्वं क्षमा दमः । प्रभवश्चाप्ययश्च त्वमुपेन्द्रो मधुसूदनः ॥**

**इन्द्रकर्मा महेन्द्रस्त्वं पद्मनाभो रणान्तकृत् । शरण्यं शरणं च त्वामाहुर्दिव्या महर्षयः ॥**

**सहस्रशृङ्गो वेदात्मा शतशीर्षो महर्षयः । त्वं त्रयाणां हि लोकानामादिकर्ता स्वयंप्रभुः ॥**

**सिद्धानामपि साध्यानामाश्रयश्चासि पूर्वजः । त्वं यज्ञस्त्वं वषट्कारस्त्वमोंकार : परात्परः ॥**

**प्रभवं निधनं चापि नो विदुः को भवानिति । दृश्यसे सर्वभूतेषु गोषु च ब्राह्मणेषु च ॥**

**दिक्षु सर्वासु गगने पर्वतेषु नदीषु च । सहस्रचरण: श्रीमाञ्शतशीर्षः सहस्रदृक् ॥**

**त्वं धारयसि भूतानि पृथिवीं सर्वपर्वतान् । अन्ते पृथिव्याः सलिले दृश्यसे त्वं महोरगः ॥** [12]

यः परमात्मा देवानां सुराणां शासक: यस्मिन् परमात्मनि लोकाः अतलादयः सत्यपर्यन्ताः अधिश्रिताः यः परमात्मा द्विचरणयुक्तमनुष्यस्य चतुष्पदस्य पश्वादेः पालकः, यः संसारस्य नियमनं करोति स श्रीराम एव। सूक्ष्म जीवात्मा तस्मादपि अतिशयेन सूक्ष्मं सर्वेभ्यः परत्वात् विश्वस्य संसारस्य स्रष्टारं श्रीराम एव। स श्रीराम एव नान्य: धर्मग्लानिसमये भुवनस्य गोप्ता श्रीरामादिरूपेण जगतस्त्राता, विश्वेषां भूर्भुव: स्वरलोकानामधिपः शासक:, '**रामस्य लोकत्रयनायकस्य**'[13] इति स्मृतेः। सर्वभूतेषु निखिलप्राणिषु हृद्देशे अन्तर्यामितया निगूढः यस्मिन्भगवति ब्रह्मर्षयः वसिष्ठादयः देवता: शिवादयः सुरनरमुनिपरमाराध्यं ज्ञात्वा मृत्युपाशान् अनेकविधाः कोटिकोटिजन्मजन्मान्तरगताः बन्धनतया तानेव छिनत्ति।

जनानां हृदये सदा संनिविष्टः अन्तर्यामितया विराजमानः, विश्वं कर्मक्षेत्रं यस्य स विश्वकर्मा देवः देदीप्यमानः अस्ति। अस्य ब्रह्मणः श्रीरामस्य रूपं दर्पणे न तिष्ठति, सूर्यादेरिव तत्र बिम्बप्रतिबिम्भावाभावात् दर्पणस्य तदपेक्षया परमात्मनश्च समधिकनिर्मलत्वात्। एवमेनं श्रीरामं कोऽपि प्राकृतो जनः प्राकृतनेत्रेण न विलोकयितुं शक्नोति तस्य सर्वथैवाप्राकृतत्वात्। यथोक्तं गीतायां भगवता श्रीकृष्णेन '**न तु मां शक्यसे द्रष्टुमनेनैव स्वचक्षुषा**'।[14]

माण्डूक्योपनिषद्यपि भगवतः श्रीरामस्य सर्वेश्वरत्वं सर्वज्ञत्वं अन्तर्यामित्वं निरूपयति । यथा-

**एष सर्वेश्वर एव सर्वज्ञः एषोऽन्तर्याम्येष योनिः सर्वस्य प्रभवाप्ययौ हि भूतानाम् ॥** [15]

अयमेव सर्वेषाम् ईश्वरः सर्वेश्वरः, एषः सर्वज्ञः सर्वं जानाति तथाभूतः, एष एव अन्तर्यामी सर्वशरीरित्वात् सर्वनियन्त्रितत्वाच्च। अयमेव सर्वस्य चिदचिद्वर्गस्य योनिः कारणम्, अयमेव भूतानां प्राणिनां उत्पत्तिप्रलयौ। अत एव एषः जाग्रत्स्वप्नसुषुप्तिबहिर्भूतः तुरीयः परमात्मा श्रीराम एव सर्वेश्वरः, सर्वज्ञः, अन्तर्यामी, सर्वस्य योनिः, भूतानां प्रभवाप्ययौ।

केचन शरीरमेव परमात्मबुद्धया सेवन्ते, केचन मनः केचन बुद्धिं, केचनात्मानमेव परमात्माभिन्नं मन्वानाः प्रलपन्ति, किन्तु आत्मा परमात्मतः न केवलं पृथक्सत्ताकः प्रत्युत् तयोर्मध्ये अव्यक्तमप्येकम्। अनेन जीवात्मपरमात्मनोर्भेद एव सिध्यति।

अस्य भगवतः ब्रह्मणः श्रीरामस्य रूपमनुभवात्मकं सामान्यजनस्य नेत्रविषये न तिष्ठति, कश्चन यतमानोऽपि परमेश्वरं चक्षुषा न पश्यति। ये साधकाः एतत् पूर्वोक्तब्रह्मसाक्षात्कारप्रकारं जानन्ति ते मरणधर्मशरीरं विहाय भगवत् कैङ्कर्योपयोगिदिव्यशरीरं लब्ध्वा श्रीरामाभिधं ब्रह्म परस्मिन् साकेतधाम सेवन्ते।

ब्रह्मणः श्रीरामस्य सर्वेषामाश्रयदातृत्वं शरणागतानामभयदातृत्वं च श्रुतिस्मृत्यादौ बहुशः दृश्यते। यतो हि भगवान् श्रीराम एव सर्वलोकशरण्यः। यथोक्तं विभीषणेन वाल्मीकिये रामायणे-

**निवेदयत मां क्षिप्तं राघवाय महात्मने । सर्वलोकशरण्याय बिभिषणमुपस्थितम् ॥** [16]

श्रीराघवः भक्तानां कल्याणं करोति। श्रीरामः जीवमात्रस्य प्रपत्तिविषयः जीवानामभयदाता। आत्मा आप्नोति सर्वं व्याप्नोति तथाभूतः सर्वव्यापी, अतति सततं गच्छतीति। तस्मात् दुराग्रहं त्यक्त्वा सर्वशरण्यस्य श्रीरामस्येव शरणे गमनीयम्।

तत्र वाल्मीकिये रामायणे श्रीरामस्य स्वरूपविषये तेषामङ्गान्यन्या देवता इत्युक्तेन सर्वदेवाद्यात्मकत्वं दर्शयति। **'एतस्य महतो भूतस्य निःश्वसितमेतद्यद्दग्वेद'**[17] इत्यादि श्रुतिप्रमाणेन श्रीरामस्य निःश्वसितं वेदा इत्युक्ता। अत्र संस्कारपदेन प्रवृत्तिनिवृत्तिबोधकः वेद इत्यर्थः। अतः ब्रह्मणा उक्तम्- संस्काराः प्रवृत्तिनिवृत्तिव्यवहारबोधकाः तव वेदा अभवन् अतः त्वया विना एतज्जगन्नास्ति अत एव सर्वं चिदचिदात्मकं जगत् ते शरीरं धारणसामर्थ्यं वसुधातलम्। रावणस्य वधाय मानुषीं शरीरं प्रविष्टोऽसि। ते कोप: अग्नितापः, त्वत्प्रसादः सोमः। यो विष्णुः स भवान्देवः प्रकाशरूपः। प्रजापतिस्तदभिन्नतत्त्वः। एतत्सर्वं कार्यकारणरूपं जगत् श्रीरामस्य शरीरम्।

**उपसंहारः-**

चतुर्थाध्यायस्य प्रथमे पादे ब्रह्मादिदेवैः श्रीरामस्वरूपवर्णनमिति विषयमधिकृत्य अनुसंधानेन प्राप्यते यत् श्रीराम एव परब्रह्म। परब्रह्मस्वरूपस्य श्रीरामस्य ब्रह्मादिदेवैः स्वरूपवर्णनमुचितमेव। तत्र तेषां कृते तु साक्षात्मोक्षप्रापकः अनन्तकल्याणकरः श्रीराम एवोपास्यः। अनन्तकोटिब्रह्माण्डहेतुत्वं परंब्रह्मत्वञ्च श्रीरामस्यैव। स मनुष्यदेहे सर्वस्य लोकस्य पालकः शासकश्च। विभुः ब्रह्मादिदेवगणे श्रेष्ठः, रुद्रः महादेवः, नारायणपदवाच्यः, वराहरूपश्च। सदेव सोम्येदमग्र आसीदिति श्रुत्यनुसारेण सृष्टेः प्राक् सत्रूपेण श्रीराम एवासीत्। श्रीरामस्य विभुत्वं सर्वगतत्वं व्यापकत्वञ्च च विषये ब्रह्मादिदेवाः जानन्ति। ये साधकाः दिव्यमप्राकृतं जगतः जन्मादिहेतुरूपं परमानन्दस्वरूपं चैतन्यस्वरूपं अमृतं ब्रह्मपुरं साकेतलोकाधीशञ्च परिपश्यन्ति ते नित्यमोक्षं प्राप्नुवन्ति, नात्र संशयः।

शोधप्रबन्धेऽस्मिन् ब्रह्मादिदेवैः वर्णितं श्रीरामस्वरूपविषये सम्यगालोचनया ज्ञायते यत् ब्रह्मादिदेवादीनां कृते हृषीकेषः, पुरुषोत्तम: पद्मनाभः प्रणववाच्य: ओंकारस्वरूपात्मकञ्च श्रीरामः। श्रीरामस्योंकारस्वरूपं शास्त्रेषु वर्णितमस्ति। निरस्तहेयगुणकं समस्तहेयप्रत्यनीक-गुणगणनिलयं ब्रह्म तदपि ओंकार एव जगत्कारणत्वात्। ब्रह्म श्रीराम अतो जगत्कारणत्व-रूपमोंकारं श्रीराम

एव तस्यांशभूतानां चतुर्णां भातृणां चतुष्पादात्मरूपेण प्रतिपादनात्। जाग्रदवस्थायामन्तर्यामी विराट् सहस्रशीर्षा लक्ष्मणः। स्वप्नावस्थायामन्तर्यामी तैजसः हिरण्यगर्भो स शत्रुघ्नः। सुषुप्तौ प्राज्ञः स भरतः। पुनस्तुरीयावस्थायां जाग्रत्स्वाप्नसन्धौ जीवेन सह शरीरे तिष्ठन्नन्तर्यामी तुरीयो भवति स एव भगवान् श्रीरामः।

ब्रह्मादीनां कृते श्रीरामः सिद्धरूपः धर्मरूपः। सर्वेषां लोकानामुत्पत्तिस्थानं ब्रह्मादिदेवानां जनकः। ज्ञानस्वरूपं सत्यस्वरूपमानन्दस्वरूपञ्च श्रीराम एव। संसारस्य नियन्ता श्रीराम एव। सूक्ष्मातिसूक्ष्मं सर्वेभ्यः परत्वात् विश्वस्य स्रष्टारं श्रीराम एव। श्रीरामस्य सर्वेश्वरत्वं सर्वज्ञत्वमन्तर्यामित्वञ्च श्रुतिष्वसकृद् निरूपितम्। तस्मात् ब्रह्मादिदेवैः श्रीरामं ब्रह्मरूपेणोंकाररूपेण सर्वावतारित्वरूपेण च ध्यायते उपास्यते च।

**पादटिप्पणी**

1. वा. रा. १/१५/१९-२२
2. वा. रा. ६ / ११७ / ६-९
3. छान्दोग्योपनिषद् ६/२/१
4. छान्दोग्योपनिषद् ६/२/३
5. छान्दोग्योपनिशद् ६/२/३
6. ईशावास्योपनिषद् -८
7. श्वेताश्वतरोपनिषद् ४/१०
8. मुण्डकोपनिषद् २/१/७
9. वा. रा. ६ / ११७
10. शतपथब्राह्मण- १४
11. श्रीरामेत्तरतापिन्युपनिषत् १ / १
12. वा.रा. ६/११७/१६-२२
13. वा. रा. सुन्दरकाण्ड ५/३८/५२
14. श्रीमद्भगवद्गीता - ११/८
15. माण्डूक्योपनिषदि - ६
16. वा.रा. ६/१७/१७
17. बृहदारण्यकोपनिषद् २/४/१०

**सहायकग्रन्थसूची-**

************

**Volume XXI : January to June – 2023, ISSN 2250-1711**
**Journal of Veda Samskrita Academy [Recognised in the UGC-CARE List]**

# हेत्वाभासस्वरूपविमर्शः

**Dr. Anjan Das**
Assistant Professor, Dept. of Sanskrit
Ramakrishna Mission Vidyamandira
Belur Math, Howrah- 711202, West Bengal
Mobile- 8777791668
Email Id: dasanjan530@gmail.com

हेतुर्हि द्विविधः सद्धेतुः असद्धेतुश्च। तत्र व्याप्तिपक्षधर्मताविशिष्ट आद्यः। व्याप्तिपक्षधर्मत्वाभाववान्द्वितीयः। स एव हेत्वाभासो वा असद्धेतुर्वा। हेत्वाभासशब्दस्य द्विविधोऽर्थः प्राप्यते प्राचीनन्यायनव्यन्यायनये। तत्र प्राचीनन्यायमते हेत्वाभासशब्दस्यार्थो हि हेतुवदाभासन्ते इति हेत्वाभासाः। अर्थाद् अनुमानस्थले यो न प्रकृतहेतुः, परन्तु हेतुसदृशतया प्रतीयमानः स हेत्वाभास इत्युच्यते। तदुक्तं प्राचीननैयायिकभाष्यकारवात्स्यायनैः – "**हेतुलक्षणाभावादहेतवो हेतुसामान्याद्धेतुवदाभासमानाः**"[1] इति। नव्यनये च हेत्वाभासस्य व्युत्पत्तिर्हि हेतोराभासादोषाहेत्वाभासाः। अनया व्युत्पत्त्या हेतोः पञ्चविधत्वविशिष्टदोषो हि हेत्वाभासः। तथाहि नव्यनैयायिकरघुनाथशिरोमणिना भणितम् – "**केचित्तु यादृशपक्षकयादृशसाध्यकयादृशहेतौ यावन्तो दोषाः सन्तवन्ति, तावदन्यान्यत्वमेकमात्रदोषस्थले च तत्त्वमेव हेत्वाभासत्वम्**"[2]इति। गङ्गेशोपाध्यायैस्तत्त्वचिन्तामणौ त्रीणि हेत्वाभाससामान्यलक्षणानि उपन्यस्तानि–

**१. अनुमितिकारणीभूताभावप्रतियोगियथार्थज्ञानविषयत्वम्**[3],

**२. यद्विषयकत्वेनलिङ्गज्ञानस्यानुमितिप्रतिबन्धकत्वंतत्त्वम्**[4],

**३. ज्ञायमानंसदनुमितिप्रतिबन्धकंयत्तत्त्वंवा।**[5]

न्यायजनकमहर्षिगौतमनये पक्षसत्त्व-सपक्षसत्त्व-विपक्षासत्त्व-असत्प्रतिपक्षि-तत्व-अवाधितत्वरूपपञ्चधर्मा एव हेतुपदार्थस्य सामान्यलक्षणम्। तत्रोक्तपञ्चानां धर्माणां मध्ये एकैकस्य धर्मस्याभावे पञ्च विधो हेत्वाभासो भवति। यथा विपक्षासत्त्वराहित्ये सव्यभिचारहेत्वाभासः, सपक्षसत्त्वाभावे विरुद्धहेत्वाभासः, असत्प्रतिपक्षिततत्वाभावे प्रकरणसमहेत्वाभासः, पक्षसत्त्वाभावे साध्यसमहेत्वाभासः अबाधिततत्वहीने च कालातीतहेत्वाभासः।

हेत्वाभासस्य नैकविधः क्रमभेदो दृश्यते। यतः न्यायदर्शनं वैशेषिकदर्शनञ्च समानतन्त्रत्वेन परिचितिरस्ति। तथाहि प्रथमे न्यायदर्शनमुपस्थाप्य वैशेषिकमतम् उपपादयिष्यामि। तत्रादौ न्यायजनकेन भगवता गौतमेन सूत्रितम् – "**सव्यभिचार-विरुद्ध-प्रकरणसम-साध्यसम-कालातीताहेत्वाभासाः**"[6] इति। अयमेव क्रमः तर्कसंग्रहकृताप्यनुसृतः। परं तत्र केषाञ्चन नाम्ना भेदोऽस्ति। यथा प्रकरणसम-साध्यसम-कालातीतानां स्थाने क्रमशः सत्प्रतिपक्ष-असिद्ध-बाधिता इति निर्देशितः – "**सव्यभिचार-विरुद्ध-सत्प्रतिपक्ष-असिद्ध-बाधिताः पञ्चहेत्वाभासाः**"[7]इति। विश्वनाथन्यायपञ्चाननेन स्वल्पीयान्क्रमव्यत्ययः कृतः –"**अनैकान्तो विरुद्धश्चाप्रसिद्धः प्रतिपक्षितः। कालात्ययापदिष्टश्च हेत्वाभासास्तु पञ्चधा॥**"[8]इति। किन्तु अनैकान्तेति कारिकाव्याख्यानावसरे न्यायसिद्धान्तमुक्तावल्यां ग्रन्थकृतैव अनैकान्तिकविरुद्धसत्प्रतिपक्षितासिद्धबाधाइति सूत्रानुसारीक्रम एवादृतः। एतेन छन्दः पारवश्यान्मूले कश्चन क्रमभेदो विहित इत्यवगम्यते। चिन्तामणिकारैरपि एवं क्रमोऽनुसृतः – "**ते च सव्यभिचार-विरुद्ध-सत्प्रतिपक्ष-असिद्ध बाधिताः पञ्च**"[9]इति। अयमत्र विशेषो यद्एतैः सर्वैरपि व्यभिचारस्यादिमत्वं बाधस्य चान्तिमत्वं स्वीकृतमेव। परमेतद्विरुद्धं केशवमिश्रः सव्यभिचारं तृतीयस्थाने स्थापयति – "**ते चासिद्ध-विरुद्ध-अनैकान्तिक-प्रकरणसम-कालात्ययापदिष्टभेदात्पञ्चैव**"[10] इति। वैशेषिकनये सूत्रानुसारं विरुद्धसव्यभिचारा इति त्रयाणामेव

हेत्वाभासत्वं सिध्यति – "**अप्रसिद्धोऽनपदेशोऽसन्सन्दिग्धश्चानपदेशः**"[11] इति। काश्यपमतेऽपि हेत्वाभासास्त्रिधा – असिद्धो विरुद्धः सन्दिग्धः चेति। तथा चोक्तं भाष्ये – "**विरुद्धासिद्धसन्दिग्धमलिङ्गंकाश्यपोऽब्रवीदि**"ति।[12] अनध्यवसितो नामातिरिक्तश्चतुर्थो हेत्वाभास इति प्रशस्तपादाचार्याः। तथोक्तम् – "**एतेनासिद्धविरुद्धसन्दिग्धानध्यवसितवचनानामनपदेशत्वमुक्तं भवति**"[13]इति। लीलावतीकारा अप्येवमाहुः, "**तदाभासाश्चत्वार**" इति। शिवादित्यमिश्रास्तु प्राहुः – "**तदाभासा असिद्धविरुद्धानैकान्तिकानध्यवसित-कालात्यापदिष्टप्रकरणसमाः**"[14] इति।

इदानीं गङ्गेशोपाध्यायनये हेत्वाभासस्य सविभागं तेषां परिचयः समासेन क्रियते–सव्यभिचारविरुद्धप्रकरणसमासिद्धबाधिताः पञ्चहेत्वाभासा इति विभागोऽसमञ्जसः। हेत्वाभासत्वेन संग्राह्यस्यानध्यवसितस्य सोपाधेश्च अनभिधानाल्यूनतादोषो विभागे वर्तते। सकलकार्यसाधारणस्यानुमित्यसाधारणदोषत्वाभावात्सत्प्रतिपक्षस्य चानैकान्तिकेऽन्तर्भावात्बाधितप्रकरणसमयोः अतिरिक्तहेत्वा-भासत्वाभावात्तयोः प्रवेशेन विभागे अधिकतादोषोऽस्तीति मूलार्थः श्लिष्टः प्रतिभाति। वस्तुतस्तु गमकतौपयिकरूपेषु पञ्चस्वेकैकस्य अभावादेकैकोहेत्वाभास इति पञ्चहेत्वाभासाः सम्पद्यन्ते। पक्षवृत्तित्वरूपाभावाद्विरुद्धः, विपक्षावृत्तित्वाभावाद् अनैकान्तिकः, अबाधितत्वरूपाभावात्बाधितः कालात्ययापदिष्टः, असत्प्रतिपक्षितत्वाभावात्सत्प्रतिपक्षः प्रकरणसमश्च हेत्वाभासो भवति। अत एव हेत्वाभासानां पञ्चधा विभागेऽतीवरमणीय इति।

१) **सव्यभिचारः**— सव्यभिचारेतिव्यभिचारात्मकेन दोषेण सहवर्तत इति व्युत्पत्त्या व्यभिचारीत्यर्थः। सव्यभिचारस्य लक्षणं हि— सव्यभिचारत्वं पक्षातिरिक्तसाध्यवन्मात्रवृत्त्यन्यत्वे सति पक्षातिरिक्तसाध्याभाववन्मात्रवृत्त्यन्यधर्मत्वम् इति। लक्षणस्य निकर्षः खलु साध्याभाववन्मात्रवृत्त्यन्यधर्मत्वमनैकान्तिकत्वमित्युक्ते सद्धेतौ धूमादावतिव्याप्तिः। तदर्थं साध्यवन्मात्रवृत्त्यन्यत्वे सतीति। एतावति कृते विरुद्धे अतिव्याप्तिः स्यात्। तदर्थं साध्याभाववन्मात्रवृत्त्यन्यधर्मत्वमिति विशेषणम्। एवमपि साध्यतदभाव-वद्वृत्तिसाधारणानैकान्तिकेऽव्याप्तिर्भवेत्। तत्परिहाराय मात्र पदद्वयम्। एतावतिकृते अनुपसंहारिण्यव्याप्तिर्भवेत्। तत्परिहाराय पक्षातिरिक्तपदद्वयमिति।

अपि च एकं लक्षणं प्राप्यते सव्यभिचारस्य। तद्धिसाध्यवन्मात्रवृत्त्यन्वत्वे सति साध्याभाववन्मात्रवृत्त्यत्वमिति। अर्थात्तद्बीजं तु वह्निमान्धूमादित्यत्र सद्धेतोर्धूमस्य पक्षे साध्यवति महानसादौ च सत्त्वात्पक्षातिरिक्तं यत्साध्यवत्तन्मात्रवृत्तित्वं नास्तीति पक्षातिरिक्तसाध्यवन्मात्रवृत्त्यन्यत्वेनातिव्याप्तिरिति। अपि च अनुपसंहारिण्यव्याप्तिः। असाधकतायां व्यर्थविशेषणत्वमिति। अन्ये तु असाधारण्याभावकालावच्छिन्नसाध्यव्याप्यत्वाभाववत्त्वे सत्यसाधारण्याभावकालावच्छिन्नविरुद्धत्वाभाववत्त्वं सव्यभिचारत्वम्। अत्र असाधारण्याभावकालावच्छिन्नं यत्साध्यव्याप्यत्वं तदभाववत्त्वे सत्यसाधारण्याभावकालावच्छिन्नं यद्विरुद्धत्वं तदभाववत्त्वमिति। साध्यव्याप्यत्वाभाववत्त्वमनैकान्तिकत्वमित्युच्यमाने विरुद्धे अतिव्याप्तिः। तन्निवृत्तये विरुद्धत्वाभाववत्त्वम्। तावन्मात्रस्य सद्धेतावति-व्याप्तेस्तत्परिहाराय साध्यव्याप्यत्वाभाववत्वे सतीति विशेषणम्। एवमपि 'शब्दोऽनित्यः, शब्दत्वात्' इत्यादि सद्धेत्वसाधारणेऽतिव्याप्तिः स्यात्। तत्परिहाराय असाधारण्याभावकालावच्छिन्नेति। तेन सत्यपि साध्यव्याप्यत्वे विशेषणाभावाद्विशिष्टाभावः। एवमप्यसाधारणतापन्ने विरुद्धेऽव्याप्तिः स्यात्। तदर्थमसाधारण्याभावकालावच्छिन्नेति। तेन 'आत्मा अनित्यः आत्मत्वात्' इत्यादिषु असाधारणतापन्नेषु सत्यपि विरुद्धत्वेऽसाधारण्याभाव कालावच्छिन्नत्वरूपविशेषणाभावाद्विशिष्टाभावः सम्भवतीति नोक्तदोषः।

अयं सव्यभिचारः साधारणासाधारणानुपसंहारिभेदात्त्रिविधः। तदुक्तं तत्त्वचिन्तामणौ गङ्गेशोपाध्यायेन "**सव्यभिचारस्त्रिविधः— साधारणासाधारणानुपसंहारिभेदात्**"[15] इति। अथैवं साधारणादिभिस्त्रिभिरनुमितिप्रतिबन्धे हेत्वाभासाधिक्यं कथं नास्तिः? कथं वा न विभागव्याघातः? इति चेत्, स्वरूपसतानेन समान्यलक्षणेन साधारणादीनेकीकृत्य पञ्चैव हेत्वाभासा इति विभागकरणात्। नन्वेवमपि

साध्याभावज्ञापकत्वेन बाधसत्प्रतिपक्षयोः, सव्यभिचारविरुद्धासिद्धानां साक्षात्साध्याभावाज्ञापकतया चैकत्वेन द्विविधो हेत्वाभास इति कथं न विभागः कृत इति चेन्न, स्वतन्त्रेच्छस्य मुनेर्नियन्तुमशक्यत्वाद् इति।

***क)साधारणसव्यभिचारः—*** साधारणस्य लक्षणं हि पक्षसपक्षविपक्षवृत्तिः साधारणः इति। इदन्तु अलक्षणम्। विरुद्धसंकीर्णसाधारणे सपक्षवृत्तित्वाभावेनाव्याप्तेः। विपक्षवृत्तित्वज्ञानेनानुमितिप्रतिबन्धेऽसाधकतानुमाने च सम्भवति शेषवैयर्थ्यात्। न च विपक्षवृत्तित्वं साधारणत्वम्, विपक्षस्य निश्चयघटितत्वेन साधारणस्यानित्यदोषत्वापत्तेः। अनुमितिप्रतिबन्धे परं प्रत्युद्भावनेऽसाधकतानुमाने च साध्याभाववद्गामित्वस्यैव प्रयोजकत्वेन निश्चयभागस्य व्यर्थत्वादिति चेत्, न। विपक्षवृत्तित्वं साधारणत्वम्। विपक्षत्वं च साध्यव्यधिकरणधर्मवत्वम्। व्यधिकरणत्वं च तदधिकरणानधिकरणत्वम्। तथा च प्रतियोगिव्यधिकरणसाध्यात्यन्ताभाववद्गा-मित्वाद्युपाधीनां भानेऽस्योपाधेर्भानमावश्यकमित्येतद्विषयत्वेनैवसर्वेषामनुमिति प्रतिबन्धकत्वम्। अतो नाधिक्यम्, न वा विभागव्याघातः। एतस्मात्सन्देहात्सन्दिग्धानैकान्तिकता। ननु साध्यव्यधिकरणधर्मवद्वृत्तित्वे साध्यव्यधिकरणस्यैवानुमितिप्रतिबन्धकत्वादि सामर्थ्येऽधिक-वैयर्थ्यमिति चेत्, अन्यविशेषणत्वेनोपात्तस्य अन्यविशेषणत्वं कृत्वा दूषणाभिधानस्याप्रामाणिकत्वात्। न च वाच्यम्—पक्षे व्यभिचारसन्देहस्य अनुमितिप्रतिबन्धकत्वेऽनुमानमात्रोच्छेद इति, अनुकूलतर्कादिना व्यभिचारसन्देहनिवृत्तावनुमानप्रवृत्तेः। अथवा निश्चितहेतुमति साध्यव्यभिचारसंशयातिरिक्तव्यभिचार- संशयत्वेनानुमिति-प्रतिबन्धकत्वान्नानुमानमात्रोच्छेद इति।

***ख) असाधारणसव्यभिचारः—*** पक्षवृत्तित्वे सति सपक्षविपक्षावृत्तिरसाधारणः इति।अस्य निकर्षोहि विपक्षव्यावृत्तोऽसाधारण इत्युक्तेऽन्वयव्यतिरेकिणि सद्धेतावतिव्याप्तिः। तत्परिहारायसपक्षव्यावृत्तः इति। यत्किञ्चित्सपक्षव्यावृत्तधूमस्यासाधारणतामाभूदित्येतदर्थं सर्वेति विशेषणं सपक्षेदेयम्। एवमप्याकाशादावतिव्याप्तिःस्यात्। तदर्थं पक्षवृत्तित्वे सतीति। पक्षवृत्तित्वमसाधारणत्वमित्युक्तेऽन्वयव्यतिरेकिणि अतिव्याप्तिः। तदर्थं विपक्षव्यावृत्त इति। ननु एवं सपक्षव्यावृत्तिरेव दूषकतायामुपयुज्यते। न तु विपक्षव्यावृत्तिरपि, तस्या अनुगुणत्वात्। अपि च परं प्रतितदुद्भावनदशायां विपक्षव्यावृत्त्युपन्यासे साध्यसाधको व्यतिरेकसहचार एवोपन्यस्तो भवेत्। अपि च परामर्शोत्तरकालमिदमुद्भाव्यं वा? तत्पूर्वकालं वा? नाद्यः, बाधसत्प्रतिपक्षयोरभावे अनुमितेर्ब्रह्मणापि वारयितुमशक्यत्वात्। न द्वितीयः 'शब्दो नित्यः शब्दत्वात्' इत्युक्तवावादिनिनिवृत्ते सति न्यूननिग्रहोद्भावनद्वारा एव वादिनिवृत्तेः। न च स्वार्थानुमाने दोषो भविष्यति इति वाच्यम्, तत्रापि सपक्षव्यावृत्तत्वमात्रस्य दोषत्वात् इति। अत्र वदन्ति 'नित्यः शब्दः शब्दत्वात्' इत्यत्र शब्दत्वं साध्यवतस्तदभाववतश्च व्यावृत्तम्। एवञ्च यत्र यत्र नित्यत्वं तत्र तत्र शब्दत्वाभावः। यत्र यत्र नित्यत्वाभावस्तत्र तत्रापि शब्दत्वाभावः। एवं च साध्यतदभावाव्यापकाभावप्रतियोगिना शब्दत्वेन पक्षे किंसाधनीयमिति साध्यतदभावोत्थापकतया स्वार्थानुमाने परार्थानुमाने वा साधारणोदोषः।

***ग) अनुपसंहारी—*** व्याप्तिग्रहानुकूलैकधर्म्युपसंहाराभावो यत्र सहेत्वभिमतोऽनुपसंहारी। व्याप्तिग्रहानुकूल एकत्र धर्मिण्युपसंहारः सहचारः, तदभावो यत्र इति।अनुपसंहारीतु नानैकान्तिकेऽन्तर्भवति, दूषकतावीजस्य सन्देहजनकत्वस्याभावात्। नहि 'सर्वमनित्यं प्रमेयत्वात्' इत्यत्र प्रमेयत्वस्य अन्वयमुखेन व्यतिरेकमुखेन वा संशयजनकत्वं सम्भवति इति।अपि च 'सर्वमभिधेयम्, प्रमेयत्वात्' इत्यत्र संशयजनकत्वमसंभावितमेव, अभिधेयत्वानधिकरणस्य तस्याप्रसिद्धत्वात्। तस्मात्व्याप्तेरग्रहणात्व्याप्यत्वाप्रसिद्ध एवान्तर्भवति। उभयरूपस्य अनैकान्तिकस्य केवलान्वयिनिकेवलव्यतिरेकिणि च साध्येऽसंभवः, सपक्षविपक्षाप्रसिद्धेः। केवलान्वयि धर्मो नासाधरणो भवति, उभयव्यावृत्तेरस्याभावात्। अत्र साधारणस्य न क्वचिदपि विरुद्धसंकीर्णता। बाधाश्रयस्वरूपतद्विशेषणासिद्धिसंकीर्णता कुत्रचित्। व्याप्यत्वासिद्धिसंकीर्णता सर्वत्र इति। प्रतिपक्षसंकीर्णतासंभावना सर्वत्र, अस्य नित्यदोषात्। एवमसाधारणस्यापि विरुद्धबाधाश्रयस्वरूप – तद्विशेषणासिद्धिस्कीर्णता क्वचित्। व्याप्यत्वासिद्धिसंकीर्णता सर्वत्र। प्रतिपक्षः पूर्ववत्। तदेवं संकीर्णतायामपि

दूषकताबीजभेदोपाधिभेदोपजीव्योपजीवकभावभेदसत्त्वात्हेत्वाभासान्तरता व्यवहारः, न तु परस्परासंकीर्णलक्षणयोगित्वात्। ननु एवम्बिधानैकान्तिकलक्षणेऽसाधकतानुमानेव्यर्थतास्यात्? मैवम्, यदेव यत्र दूषकताबीजं तस्यैव तत्र हेतूकरणात्। तथाहि इदमसाधकं साध्यसंशयजनकत्वादिति। न चात्र व्यर्थता। असाधकताप्राप्ते तु विशेषं वक्ष्यामः।

२) **विरुद्धः**—विरुद्धस्य लक्षणं साध्यासमानाधिकरणो हेतुर्विरोधस्तादात्म्येन तद्वान्हेतुर्विरुद्धः। अत्र साध्यासमानाधिकरणः साध्याभावो बोध्यः। एतज्ज्ञानञ्चसाध्यसामानाधिकरण्यघटितव्याप्तिप्रकारकज्ञाने सामानाधिकरण्यांशे प्रतिबन्धकम्। उदाहरणन्तु समवाये न साध्यहेतुको गोत्ववान् अश्वत्वाद् इत्यादिरिति। प्राञ्चस्तु साध्यासामानाधिकरण्यं विरोधस्तद्वान्हेतुर्विरुद्ध इत्याहुः, तदसत्। केवलसाध्यासामानाधिकरण्यरूपविशिष्टनिरूपितविषयित्वस्य केवलसाध्यासामानाधिकरण्यवषयकज्ञाने हेत्वन्तरविशेष्यकतत्प्रकारज्ञाने च सत्त्वेन प्रकृतहेतुकानुमितितत्कारणज्ञानप्रतिबन्धकतातिरिक्तवृत्तितया केवलस्य तस्य हेतुदोषत्वासम्भवात्, अत एव अग्रेऽपि सर्वत्र विशेष्यान्तर्भाव इति बोद्धव्यम्।

३) **सत्प्रतिपक्षः**— सत्प्रतिपक्षस्य लक्षणं हि एकधर्मनिष्ठतद्व्याप्यत्वप्रकारकविषयता पक्षवृत्तित्वप्रकारकविषयताद्वयप्रतियोगिज्ञान - समानदेशसमानकालत्वे सत्येकधर्मनिष्ठतदभावव्याप्यत्वप्रकारकविषयतापक्षवृत्तित्वप्रकारकविषयतापक्षवृत्तित्वप्रकारकविषयताद्वयप्रति- योगिज्ञानत्वं सत्प्रतिपक्षत्वम् इति। एकस्मिन्धर्मिणि शब्दे, निष्ठं यत्साध्यमनित्यत्वं तद्व्याप्यं कृतकत्वं, तस्य भावस्तद्व्याप्यत्वं प्रकारो यस्यास्तद्व्याप्यत्वप्रकारिका, सा च साविषयता च, या च पक्षधर्मता, सा प्रकारो यस्याः, सा च सा विषयता च, ते एव द्वयं, तत्प्रतियोगिज्ञानं परामर्शो यस्य, कृतकत्वहेतोस्तृतीयलिङ्गपरामर्शविषयीभूतस्य तत्समानदेशकालत्वे सति। एतद्धर्मिनिष्ठः शब्दरूपधर्मिनिष्ठः, योऽयं तदभावोऽनित्यत्वाभावो नित्यत्वं, तद्व्याप्यं श्रावणत्वं, तस्य भावस्ताद्दशव्याप्यत्वं प्रकारो यस्याः सा विषयता च, पक्षवृत्तित्वं प्रकारो यस्याः, सा च सा विषयता च, ते एव द्वयं, तत्प्रतियोगिज्ञानं तृतीयलिङ्गपरामर्शः, यस्य श्रावणत्वहेतोस्तस्य भावस्तत्त्वमित्यर्थः। सत्यन्तमात्रे कृते सद्धेतावतिव्याप्तिः। तदर्थमेतद्धर्मिनिष्ठेत्याद्युत्तरदलम्। एवमपि विरुद्धेऽतिव्याप्तिः। तदर्थं सत्यन्तम्। एकधर्मीतिपदं विहाय तदितराभिधाने ‘अनित्यः शब्दः कृतकत्वात्’, ‘परमाणुः नित्यः निरवयवद्रव्यत्वात्’ इत्यनयोरपि सत्प्रतिपक्षता स्यात्। तन्निवृत्तये एकधर्मिपदम्। अत एव एतद्धर्मिपदमुत्तरदले सार्थकम्। अन्यत्सर्वं स्पष्टमिति। वस्तुतस्तु वक्तुं शक्यते यत्साध्याभावसाधको हेतुरन्यो सत्प्रतिपक्षः, वृत्तिमत्त्वादि यथाकथञ्चित्सम्बन्धेन तद्वान्हेतुः सत्प्रतिपक्षितः, अयञ्च स्वरूपसम्बन्धेन हि साक्षादनुमितिविरोधी, अत एव सद्धेतुरपि साध्याभावव्याप्यवत्तापरामर्शकाले सत्प्रतिपक्षितः, बाधितोऽपि साध्याभावव्याप्यवत्ता परामर्शदशायां कदाचिदसत्प्रतिपक्षित इत्याहुः। एतन्मते यथा श्रुतं न दोषलक्षणं किन्तु दुष्टलक्षणमेवेति न तत्राव्याप्तिः।

४) **असिद्धः**—साध्यव्याप्यत्वप्रकारकप्रमाव्यतिरेकतत्पक्षधर्मताप्रकारकप्रमाव्यतिरेकान्यतरत्वम् असिद्धत्वम्। तदन्यतरत्वं तदन्यान्यत्वम्। अतो यत्र व्यतिरेकद्वयं तत्र नाव्याप्तिः। न तु व्याप्तिपक्षधर्मताभ्यां रहितोऽसिद्ध इति लक्षणम्, तद्व्याप्तिपक्षधर्मतावैशिष्ट्यस्य अप्रसिद्धत्वेनासिद्धेरुद्भावयितुमशक्यत्वात्; अन्यस्यातिप्रसञ्जकत्वात्। एवमन्यान्यपि लक्षणानि दूषणीयानि। तदयमाश्रयासिद्ध-स्वरूपासिद्ध-व्याप्यत्वासिद्धभेदेन त्रिविधः।

***क) आश्रयासिद्धः*** – अनुमानस्थले यदि पक्षोऽसिद्धः स्यात्तर्हि आश्रयासिद्धहेत्वाभासा भवति। यथा काञ्चनमयपर्वतो वह्निमान् इत्यत्र काञ्चनमयपर्वतस्याप्रसिद्धात्पक्षाप्रसिद्धिरिति।

***ख) स्वरूपासिद्धः*** –हेतोः पक्षावृत्तित्वं स्वरूपासिद्धत्वम्। शब्दो नित्यश्चाक्षुषत्वादित्यत्र शब्दे चाक्षुत्वं नास्तीत्युक्तलक्षणसमन्वयः। पक्षतावच्छेदकावच्छेदेन हेत्वभावेपक्षतावच्छेदकसमानाधिकरण्ये न हेत्वभावे चोभयथापि स्वरूपासिद्धत्वम्।

***ग) व्याप्यतासिद्धः***–यत्र हेतोर्व्याप्तिर्नावगम्यते तत्र तु व्याप्यतासिद्धः। किञ्च सोपाधिको हेतुर्व्याप्यतासिद्ध इत्यन्नंभट्टमतम्। यथा पर्वतो

धूमवान्वह्नेरिति। अत्रेदमवधेयं यत् उपाधिस्तु साध्यव्यापकत्वे सति साधनाव्यापकत्वमिति। यथोक्तस्थले आर्द्रेन्धनसंयोग उपाधिः।स च धूमाधिकरणे सर्वत्र वर्तमानत्वात्साध्यव्यापकः। वह्न्यधिकरणेऽयोगोलकेऽवर्तमानत्वाच्चसाधनाव्यापकः।एतादृशोपाधिसहित्वादयं हेतुर्व्याप्यतासिद्धः।

५) **बाधितः**— बाधितस्य लक्षणं हि साध्याभाववान्पक्षोबाधः, वृत्तिमत्तादियत्किञ्चित्सम्बन्धेन तद्वान्हेतुर्बाधितः, एतज्ज्ञानञ्चसाक्षादेवानुमितिविरोधि। उदाहरणं हि ह्रदो वह्निमान्धूमाद् इति। अत्र साध्याभाववान्नामवह्न्यभाववान्तथजलं ह्रदरूपपक्षे वर्तते, अत एव बाधहेत्वाभासस्य लक्षणं प्रयुज्यते इति शम्।

<u>तथ्यसूत्राणि-</u>

1. न्यायदर्शन् (प्रथमखण्ड)।सम्पा. फणिभूषणतर्कवागीश, पृ. - ३३८
2. तदेव (पादटीका), पृ. – ३८९
3. सामान्यनिरुक्तिप्रकरणम्, सम्पा.वामाचरणभट्टाचार्य, पृ. - ०३
4. तत्रैव
5. तत्रैव
6. प्रागेव, सम्पा.फणिभूषणतर्कबागीश, पृ. –३८८
7. तर्कसंग्रहः,सम्पा.पञ्चाननशास्त्री, पृ. – १४३
8. भाषापरिच्छेदः,सम्पा.पञ्चाननशास्त्री, पृ. – ३७४
9. तत्त्वचिन्तामणिः, सम्पा.द्विवेदी..., पृ. – १६३७
10. तर्कभाषा, सम्पा.गङ्गाधरकर, पृ. – ३२१
11. वैशेषिकसूत्रोपस्कारः, सम्पा.शेखसाविरआलि, पृ. – २४५
12. प्रशस्तपादभाष्यम्(द्वितीयखण्ड), सम्पा. दीननाथत्रिपाठी, पृ. – ३३२
13. तदेव, पृ. – ३३२
14. सप्तपदार्थी, सम्पा.जयभट्टाचार्य, पृ. – ३७
15. तत्त्वचिन्तामणिः, सम्पा.कामाख्यानाथतर्कबागीश, पृ. –७८४

<u>ग्रन्थपञ्जी-</u>

आलि, शेखसाविर(सम्पा.)। *विश्वनाथन्यायपञ्चाननकृतान्यायसूत्रवृत्तिः* /कोलकाता: संस्कृतपुस्तकभाण्डार, २०१५ (प्रथमप्रकाश)।

गङ्गेशोपाध्यायः। *तत्त्वचिन्तामणिः (२)* /सम्पा. प्रो. एन्. एस्. रामानुजताताचार्य।तिरुपति: राष्ट्रियसंस्कृतविद्यापीठम्, १९९९।

गौतमः। *न्यायदर्शनम्* /सम्पा. अनन्तलालठक्कुर।मिथिला: मिथिलाविद्यापीठ, १९६७ए.ड.।

गङ्गेशोपाध्यायः। *तत्त्वचिन्तामणिः* /अनुवादक: ब्रह्मचारीमेधाचैतन्य।कोलकाता: आद्यापीठबालकाश्रम, १४१७वङ्गाब्द (प्रथमसंस्करण) ।

गौतम। *न्यायदर्शन (प्रथमभाग)* /सम्पा. फणिभूषणतर्कवागीश।कोलकाता: पश्चिमवङ्गराज्यपुस्तकपर्षद्, २०१२।मुद्रण।

___। *न्यायदर्शन (पञ्चमभाग)* /सम्पा. फणिभूषणतर्कवागीश।कोलकाता: पश्चिमवङ्गराज्यपुस्तकपर्षद्, १९८९।मुद्रण।

गोस्वामी, नारायणचन्द्र(सम्पा.)। *श्रीमदन्नंभट्टविरचिततर्कसंग्रहः* /कोलकाता: संस्कृतपुस्तकभाण्डार, २०१२।मुद्रण।

शास्त्री, गौरीनाथ(सम्पा.)। *उदयनाचार्यकृतकिरणावली (१, २एवं३)* /कोलकाता: पश्चिमवङ्गराज्यपुस्तकपर्षद्, १९९०एवं१९९१।

___, पञ्चानन(सम्पा.)। *श्रीमदन्नंभट्टोपाध्यायरचिततर्कसंग्रह* /कोलकाता: नवभारतपावलिशार्स, १३९२ (वङ्गाब्द)।मुद्रण।

कर, गङ्गाधर(सम्पा.)। *श्रीकेशवमिश्रविरचितातर्कभाषा (१एवं२)* /कोलकाता: यादवपुरविश्वविद्यालयएवंमहाबोधिबुक्एजेन्सि, २०१३।

प्रशस्तपाद। *प्रशस्तपादभाष्य (१एवं२)* /सम्पा. दण्डीस्वामीदामोदरआश्रम।कोलकाता: आद्यापीठबालकाश्रम, २०००एवं२०१४।मुद्रण।

*****************

**Volume XXI : January to June – 2023, ISSN 2250-1711**
**Journal of Veda Samskrita Academy [Recognised in the UGC-CARE List]**

# शिक्षाजगति गीतायाः प्रभावः

**Ambarish Das**
Ph. D. Scholar
Department of Sanskrit
Pondicherry University, Pondicherry- 605014
Contact No. : 9800194279
E-mail – dasambarish1993@gmail.com

**सारांशः**

सुन्दरसमाजस्य निर्माणार्थं व्यवहारिकशिक्षा आवश्यकी। गीतायां व्यवहारिकशिक्षाविषये उपदेशःप्रदत्तः। येन व्यवहारेण जीवनस्य सामग्रिकविकासोभवति। अद्यतनसमाजे नीतिशिक्षाया अभावः परिलक्ष्यते। एतस्मात् हेतोः व्यवहारिकशिक्षायाः समुन्नति आवश्यकी।एतेषांसमस्यायां समाधानं कथं कर्तव्यं तद्विषये मया शोधप्रबन्धे प्रतिपाद्यते।अधुना गुरुशिष्ययोः मध्ये आन्तरिकाभावः परिलक्ष्यते।गीतायांभगवतःश्रीकृष्णस्य समीपात्अर्जुनः व्यवहारिकशिक्षाजगति कीदृशं कार्यं कर्तव्यं तद्विषये ज्ञानं प्राप्तवान्।मम शोधप्रबन्धे गुरुशिष्ययोः मध्ये कीदृशं आचरणं भवेत् तद्विषये आलोच्यते।

**प्रस्तावना**

शिक्ष्-इति धातोः 'गुरोश्च हलः' इति सूत्रेण अ-प्रत्यये, 'अजाद्यतष्टाप्' इति सूत्रेण टापि शिक्षेति रूपं निष्पद्यते।'शिक्षा' इति शब्दस्यार्थः विद्या। 'विद्या' इति शब्दस्यार्थः विद्-धातोःक्यप्-प्रत्ययात् टाप्-प्रत्ययेन विद्या शब्दो निष्पद्यते। यस्य अर्थः ज्ञानम् । अमरकोशे षड्वेदाङ्गेषु मध्ये 'शिक्षा'तु अन्यतमा।रघुवंशे शिक्षविषये उक्तम्–

अशुच्च नम्रः प्रणिपात शिक्षया। शिक्षा विशेपल सुहस्ततया निमेपात्॥ [१]

विवेकानन्दमतानुसारं मनुष्याणाम् अन्तर्निहितार्थः तु'शिक्षा' इति। वर्तमानसमाजे'शिक्षा' इति शब्दस्यार्थउपाधिलाभो भवति। परन्तु विशेषरूपेण शिक्षाया अर्थो भवति'सर्वाङ्गिकविकासः'। जन्मतः मृत्युपर्यन्तं विविधपरिस्थितौ यो अनुभवोअस्तिसा शिक्षा एव। एषा शिक्षा गीतायां दृश्यते।अर्जुनः सदैव कृष्णसमीपात्शिक्षाग्रहणं कृतवान्। द्वयोः चरित्रं भारतीयसमाजस्य दिग्दर्शनस्वरूपम् इति।कृष्णः सदा सख्यादार्शनिकेन उपदेशकारेण च इतिरूपेण दृश्यते।

**आचार्यस्य धर्मः**

'धरतीति धर्म' अर्थात् धरति विश्वं यः स धर्मः। अत्र 'धर्म' इति शब्दस्यार्थः कर्म।आचार्यस्य के गुणाः भवेयुःतत्विषयेगीतायामुक्तम्। शिष्याणां मध्ये विनयश्रद्धादीनां स्थातव्यम्, आचार्याणामपि विशेषगुणसम्पन्नाः भवेयुः। शिष्यःआजीवनंशिक्षाक्षेत्रेयथार्थकार्यंकरिष्यति। प्रथमं तु शिक्षकः सदा ज्ञानं प्रतिश्रद्धा कर्तव्या। अद्यतनशिक्षाजगति ज्ञानं श्रद्धा चन दृश्येते। इदानींछात्रैः सह शिक्षकस्य कुटुम्बीनंन्यूनं वर्तते। इदानींगुरु-शिष्ययोः मध्येप्रेमाभावःपरिलक्ष्यते। गुरुः शिष्यस्य समीपे सदा आदर्शवान् भवेत्। अस्मात् कारणात् शिष्यस्य मनसि सर्वदा शिक्षक आत्मविश्वासं जागरयति।समाजे ये जनाः प्रतिकूलपरिस्थितौ सिद्धान्तग्रहणं न शक्नुवन्ति तदा जीवने बहुधा समस्या आगच्छति।अतःसमस्यायाः समाधानस्योपायः कः? गुरुः यदिगीतायै पाठदानं ददाति तर्हि समस्यायाः समाधानं भविष्यति। मम दृष्ट्या भगवान् श्रीकृष्णः वर्तमानजगतिशिक्षकरूपेण विराजते।अतः गीतायाम् उच्यते–

सर्वधर्मान्परित्यज्य मामेकं शरणंव्रज। अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः॥ [२]

अर्जुनः सर्वधर्मात् परित्यज्यकेवलमेकं मां शरणं प्राप्नुहि। अहं त्वां सर्वपापेभ्यो मोक्षयिष्यामि। त्वं शोकं मा कुरु। इदानींगुरुशिष्ययोः

श्रीकृष्णस्य उपदेशः स्वीकर्तव्यः।एतेषां शिष्याणांविविधसमस्यायाः समाधानं कर्तुं शक्नुवन्ति।गीतानुसारं शिक्षकेनशिष्यस्य मनसि नूतनं तत्त्वम् उद्भासयति। शिष्यस्य मनसि यदि काचित् निराशा तिष्ठति तर्हि तत् अपसारणीयं कर्तव्यम्। गीतायां श्रीकृष्णेनप्रोक्तं- 'हे अर्जुन मम शिष्यः कदापि न विफलो भवति।'श्रीमद्भगवद्गीतायाम् उक्तम्-

पार्थ नैवेह नामुत्र विनाशस्तस्य विद्यते। न हि कल्याणकृत्कश्चिद्दुर्गतिं तात गच्छति॥ [३]

एतेन वाक्येनशिष्यस्य मनसि नूतनरूपेणविश्वास उत्पन्नोभवति। शिष्यस्य जीवने समुचितरूपेण प्रसारयति।तस्य व्यक्तित्वनिर्माणं कर्तुं समर्थयति। गीतानुसारम्आचार्यःशिष्येण सह उत्तमः सम्बन्धः भवेत् । गुरुः शिष्यं सर्वदा सम्यकोपदेशः दातव्यः, येन तस्य जीवनं समृद्धं भवति। गुरोः करणीयंशिक्षायां कोऽपि विषयः गोपनीयो न भवेत्। शिष्यस्य मध्ये विश्वासस्थापनं तु गुरोः प्रधानकर्तव्यम् इति। आचार्येण व्यक्तित्वेनशिष्यः सदाप्रभावितोभवति। आचार्यस्य करणीयंसर्वेषां शिष्याणां मध्येसमानः व्यवहारःकरिष्यन्ति। शिष्यः सर्वस्मिन् परिस्थितौ सिद्धान्तग्रहणे समर्थो भवेत्। श्रीकृष्णेन गीतायां कथ्यते-

इति ते ज्ञानमाख्यातं गुह्याद्गुह्यतरं मया। विमृश्यैतदशेषेण यथेच्छसि तथा कुरु॥ [४]

आचार्यः स्वशिष्यायशिक्षादानं ददाति। यदि त्वम् आदर्शपुत्ररूपेण विद्यते तर्हि पिता तस्यउपरि प्रसन्नोभविष्यति। गुरुः सदा सदाचारः विचारशीलःविवेकश्चेतिभवेत्। येन स्वशिष्यस्य सम्यक्मार्गदर्शनं कर्तुं शक्नोति। अद्यतनशिक्षाजगति नैतिकता सदाचारश्चेति न परिलक्ष्यते।

## शिषस्य धर्मः

उपनिषद् इव गीतायां सत्पात्रे शिक्षादानं कर्तव्यम् इत्युच्यते। शिक्षाप्राप्तौ सर्वेषाम् अधिकारअस्ति। येषांमध्ये शिष्यानुकूलम् आचरणं नास्ति तेषां शिष्यरूपेण ग्रहणं न करणीयम् इति। भगवता श्रीकृष्णेन गीतायाम्उक्तम्–

इदं ते नातपस्काय नाभक्ताय कदचन। न चाशुश्रूषवे वाच्यं न च मां योऽभ्यसुयति॥ [५]

शिक्षाप्राप्तौ सर्वेषां जनानाम् अधिकारो सन्ति। शिष्यः आचार्यं प्रति सदा भक्तिश्रद्धाश्चेतिदृष्ट्याद्रक्षति। ज्ञानग्रहणकाले गुरुं प्रति शिष्यः सदा विनयशीलः भवति। गीतायाःचतुर्थे अध्याये श्रीकृष्णेन कथ्यते-

तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया। उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः॥ [६]

संशयः दूरीकर्तुम् असमर्थाः शिष्याः जीवने समस्यायाः सम्मुखीनो वर्तते।शिक्षाविषये शिक्षकस्य सम्यक् ज्ञानं भवितुमर्हति। येन शिष्यः कदापि समस्यायाः सम्मुखीनो न भवति। षष्ठोऽध्याये अर्जुनोभगवन्तं श्रीकृष्णं उक्तवान् -

एतन्मे संशयं कृष्ण छेत्तुमर्हस्यशेषतः । त्वदन्यः संशयस्यास्य छेत्ता न ह्युपपद्यते॥ [७]

हे कृष्ण मम सन्देहं पूर्णरूपेण निराकर्त्तुं भवानेव सक्षमः। यदा मनुष्याः अस्मिन् जगति तिष्ठन्ति तदा लक्ष्यभिमुखमग्रसरो भवन्ति। संसारे स्थित अर्जुनस्य मनसि विक्षिप्तम् अभवत् तदा स श्रीकृष्णस्य शरणापन्नम् अभवत्। एतस्मात् हेतो अर्जुनः स्वकर्तव्यात् विच्युतो न अभवत्। शिक्षाविषये गीतायां मुख्यगुणद्वयं वर्तते, प्रथमं तु ज्ञानार्जनं, द्वितीयं तु समर्पणविचारश्चेति। गीतानुसारं गुरु सर्वदा शिष्यं पुत्ररूपेण मन्यते। शिष्यस्य मध्ये गुरुभक्तिः जागरयति। आचार्य-शिष्ययोः मध्ये आत्मीयसम्बन्धः भवेत्। विद्याविषये गीतायाम् उक्तं यत् शिष्याणां मध्ये विद्या ग्रहणे सर्वदा विनयशीलः,जिज्ञासु, सेवापरायण इत्यादीनां गुणानां

स्थातव्यम्। यदि विनयं विना ज्ञानं लभते तर्हि तत् ज्ञानं यथार्थं न भवति। द्रोणाचार्यस्य शिष्यद्वयं वर्तते, अर्जुनः दुर्योधनश्चेति। तयोः मध्ये व्यवहारिकबोधस्याभावात् उभयोः चिन्ताऽपि भिन्ना। 'श्रद्धावान् लभते ज्ञानम्'इति वचनेन शिष्याणां मध्ये श्रद्धा स्थातव्या। विषयेऽस्मिन् गीतायाम् उक्तम् -

श्रद्धावाँल्लभते ज्ञानं तत्परः संयतेन्द्रियः। ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति॥[८]

वर्तमानजगतिजनाः यदा कार्यं कृतवन्तः तदा फललाभस्य आशास्महे। यदि कोऽपि जनाः सम्यग्रूपेण कार्यं न करोति तर्हि यथार्थफलप्राप्तिः न भवति। यदि फलस्य आकाङ्क्षां न कृत्वा शिक्षालाभं करोति तर्हि पूर्णफललाभं प्राप्यते ।विषयेऽस्मिन् गीतायाम् उच्यते यत् कर्म सम्पादनामेव तव अधिकारः, न तु फलप्राप्तिः। अतः भगवान् श्रीकृष्णः गीतायां प्रोक्तम् –

कर्मण्येवाधिकारस्ते मा फलेषु कदाचन । मातृकर्मफलहेतुर्भूमा तेसङ्गोऽस्त्वकर्मणि॥[९]

**शिक्षकशिष्ययोः सम्बन्धः**

श्रीमद्भतागवद्गीतायाः नवमोऽध्याये गुरुशिष्ययोः सम्बन्धविषये उक्तवान्। शिष्यःकदापि गुरुं प्रति ईर्ष्या न कर्तव्या। जीवनयुद्धे कथं विजयतां प्राप्नोति तद्विषये भगवान्श्रीकृष्ण अर्जुनं उपदेशः दत्तवान्। शिष्यः सदा गुरुं प्रति भक्तिः तथा श्रद्धा कर्तव्या इति। गुरुः सदा त्वां पुत्रवत्द्रष्टव्यम्।गुरुः शिष्यं मार्गं दर्शयति।उपनिषदि वर्णयति – 'आचार्यदेव भवः'[१०]आचार्यः सदा पितृतुल्यं भवति। तस्य आज्ञा सम्यग्रूपेण अनुसरणं कर्तव्यम् इति। भगवान् श्रीकृष्णः यदा ज्ञानाय दास्यतितदा शिष्यार्जुनः ध्यानपूर्वकं श्रृणोति स्म।यदि अर्जुनः किमपि न अवगच्छति स्म तर्हि स तत्क्षणात् अपृच्छत्।उपनिषदि वर्णयति-'गुरुदेवभ्यो भवः'[११]अर्थात् गुरुं विना शिक्षा लाभं न भवति।

**उपसंहृतिः**

गुरुः सर्वदा स्वशिष्याय ज्ञानं ददाति। सर्वथा अन्धकारस्य जगतः मुक्तिं करोति। कारणेऽस्मिन् गुरुभक्तिः अतीवआवश्यकी। गुरुविषये उच्यते - गुरुर्ब्रह्मा गुरुविष्णुः गुरुर्देवो महेश्वरः । गुरुः साक्षात् परमब्रह्म तस्मै श्रीगुरबे नमः॥

यदि शिष्याःगुरुतः शिक्षाग्रहणं कर्तुं तर्हि तेषां जीवनं सदा सुखम् आगच्छन्ति।प्रात्यहिकजीवने कीदृशं कार्यं करणीयं तद्विषये गुरुतः ज्ञानं प्रयोजनम्। साम्प्रतिकाले गुरुशिष्ययोः सुसम्बन्धाभावात् तयोः प्रभावः समाजे प्रतिफलति।गुरुः सदा सत्यज्ञानं धारयति।तस्य शिष्यस्य सुखाय सर्वदा चिन्तां करिष्यति।वर्तमानसमाजे शिक्षकशिष्याभ्यां शिक्षायाः अग्रगतिः भवति।छात्राणां सदा विवेकान् श्रद्धा भक्तिश्चेति अनुस्रियते। यदि कोऽपि छात्रस्य मध्ये एते गुणाः न विद्यन्ते तर्हि इहलोके परलोके वा कदापि आत्मिसुखं न स्थास्यति। गीतायां प्रोक्तम्

अज्ञश्चाश्रद्दाधानश्च संशयात्मा विनश्यति। नायं लोकोस्ति न परो न सुखं संशयात्मनः॥[१२]

**पादटिप्पण्यः**

| | | | |
|---|---|---|---|
| १.रघुवंशम्-२.२५ | ४. गीता-१८.६ | ७.गीता-६.३९ | १०. तैत्तरीयोपनिषद्-१.११. |
| २.गीता-१८.६६ | ५. गीता-१८.६७ | ८.गीता-४.३९ | ११. तैत्तिरीयोपनिषद्-१.११.२ |
| ३.गीता-६.४६ | ६.गीता- ४.३४ | ९. गीता-२.४७ | १२. गीता-४.४० |

**सहायकग्रन्थाः**


१. दास कालि, रघुवंश, संपा. कपिलदेव गिरिः, वाराणसी, चौखाम्बा संस्कृतभवन, प्रथम प्रकाशित २०१९

२. लघुसिद्धान्तकौमुदी, सम्पा. तपनशङ्करभट्टाचार्य्यः, संस्कृत वुक डिपो, प्रथमसंस्करणम् २००२

३. श्रीमद्भगद्गीता, स्वामी श्रीओडगडानन्दः,श्री परमहंस स्वामी ओडगडानन्दजी आश्रम ट्राष्टः, प्रथमसंस्करणम् २०१७

४. श्रीमद्भगवद्गीता,स्वामी रामसुखदासः, गीताप्रेसः, गोरक्षपुरः

५. उपनिषद्, गीताप्रेसः, गोरक्षपुरः, २०१४

६. उपनिषद्, सम्पा. अतुल चन्द्र सेनः, सीतानाथ तत्तवभूषणः, महेशचन्द्र घोषः, हरफप्रकाशनी, कोलकाता, २०१५ ( पुनमुद्रणम् ), अखण्ड संस्करणम् १९८०


**************

Volume XXI : January to June – 2023, ISSN 2250-1711
Journal of Veda Samskrita Academy [Recognised in the UGC-CARE List]

# प्रत्ययरेखाङ्कनपद्धत्या तर्कसङ्ग्रहे मङ्गलश्लोकस्य शाब्दबोधविचारः

**Pravat Sarkar**
Research Scholar
Dept. of Sabdabodha System & Computional Linguistics
National Sanskrit University,
Tirupati-517507, Andhra Pradesh
Phone No. 8670731388
Email – pravat7908@gmail.com

## उपोद्घातः

आधुनिकसङ्गनकयुगेऽस्मिन् ज्ञाननिरूपणाय नवनवपन्थानः आविष्कृताः। १९६० तमे दशके आलेखाधारितं शब्दार्थप्रतिपादनं लोकप्रियम् आसीत् , तन्मध्ये आमेरिकादेशीयः पाश्चात्यभाषासङ्गणकवैज्ञानिकः "JOHN FLORIAN SOWA"महाभागेन प्रमेयप्रतिपादकरेखाचित्राणि आविष्कृतानि । आङ्ग्लभाषायां प्रमेयप्रतिपादकरेखाचित्राणि "CONCEPTUAL GRAPHS" इति नाम्ना अभिधीयते । अनेन महाभागेन 1970 शताब्द्यां कृतकप्रज्ञासाधनविज्ञानक्षेत्रे अभूतपूर्वं कार्यं कृतवन्तः। पाश्चात्यभाषाशास्त्रस्य तथा कृत्रिमबुद्धिमत्ता (Artificial Intelligence) च गुणांशेन संयोजनेन "charles Sanders Peirce" महोदयस्य ज्ञाननिरूणपद्धतेः सुपरिष्कृतं रुपमेवैतत् ।[1] पाशात्यतर्कशास्त्रीयप्रमेयनिरूपणपद्धतौ अनुमानानुकूला अंशाः प्राधान्यं भजन्ते । वाक्यार्थभूतः प्रमेयः गौणत्वेन स्वीक्रियन्ते । अनया पद्धत्या तर्कशास्त्रीययुक्तिनां प्रदर्शनेन सुलभतयाबोधो जायते , सोदाहरणेन तर्कसंग्रहग्रन्थस्य मंगलश्लोकमाधारिकृत्य प्रमेयप्रतिपादकरेखाचित्राणि प्रस्तुयन्ते –

**"निधाय हृदि विश्वेशं विधाय गुरुवन्दनम् । बालानां सुखबोधाय क्रियते तर्कसंग्रहः ॥"[2]**

विश्वस्य ईशः विश्वेशः । विश्वशब्दस्य जगदित्यर्थः । षष्ठयाः नियाम्यत्वमर्थः । तत्र विश्वपदार्थस्य जगतः आधेयतासंबन्धेनान्वयः । तथा च विश्वनिष्ठनियाम्यता इति विश्वस्येति षष्ठ्यन्ताद्बोधः । ईशशब्दस्य नियामकतावान् इत्यर्थः । तदेकदेशनियामकतायां षष्ठ्यर्थनियाम्यतायाः निरूपितत्वसंबन्धेनान्वयः । विश्वेशमित्यत्र द्वितीयायाः विशेष्यत्वमर्थः । तत्र विश्वेशपदार्थस्य विश्वनिष्ठनियाम्यतानिरूपितनियामकतावतः आधेयत्वसम्बन्धेनान्वयः । तथा च विश्वनिष्ठनियाम्यतानिरूपितनियामकतावन्निष्ठविशेष्यता इति विश्वेशमिति पदाद्बोधः ।

निधायेत्यत्र निपूर्वकधाञ्धातोः अवस्थितत्वप्रकारकज्ञानविशेषोऽर्थः । अवस्थितत्वं च आधेयत्वं वृत्तित्वमिति यावत् । हृदि इत्यत्र सप्तम्याः आधारत्वमर्थः। हृत्पदस्य हृदयाख्यः शरीरावयवोऽर्थः । तस्य सप्तम्यर्थाधारत्वे आधेयतासंबन्धेनान्वयः । तथा च हृदयनिष्ठाधारता इति हृदि इत्यतो बोधः । आधारताया निरूपितत्वसंबन्धेननिपूर्वकधाञ्धात्वर्थैकदेशाधेयतायामन्वयः। विश्वेशमित्यत्र द्वितीयार्थविशेष्यतायाः निरूपकत्वसंबन्धेन धात्वर्थज्ञानविशेषेऽन्वयः। निपूर्वकधाञ्धातूत्तरल्यप्प्रत्ययस्य उत्तरकालीनत्वमर्थः । उत्तरकालीनत्वं च उत्तरत्वाश्रयकालवृत्तित्वम् । तदेकदेशे उत्तरत्वे प्रकृतिभूतधात्वर्थस्य ज्ञानविशेषस्य स्वावधिकत्वसंबन्धेनान्वयः । उत्तरकालीनत्वस्य च क्रियते इत्यत्र कृधात्वर्थ कृतावाश्रयत्वसंबन्धेनान्वयः । तथा च विश्वनिष्ठनियाम्यतानिरूपितनियामकता-वन्निष्ठविशेष्यतानिरूपकहृदयनिष्ठाधारतानिरूपिताधेयत्वप्रकारकज्ञानविशेषावधिकोत्तरत्वाश्रयकालवृत्तित्वाश्रयीभूता कृतिरिति निधाय हृदि विश्वशम् इत्यतो जायमानो बोधः[3] ।







गुरोः वन्दनं गुरुवन्दनम् । वन्दनशब्दस्य स्वावधिकोत्कृष्टत्वप्रकारकज्ञानविशेषानुकूलव्यापारोऽर्थः । गुरोरित्यत्र षष्ठयाः विशेष्यत्वमर्थः । तत्र प्रकृत्यर्थस्य गुरोः आधेयतासंबन्धेनान्वयः । विशेष्यतायाः निरूपकतासंबन्धेन वन्दनपदार्थैक देशज्ञानविशेषेऽन्वयः । स्वं ग्रन्थकर्ता । तथा च गुरुनिष्ठविशेष्यतानिरूपकस्वावधिकोत्कृष्टत्वप्रकारक ज्ञानविशेषानुकूलव्यापारः गुरुवन्दनपदार्थः । द्वितीयायाः विषयत्वमर्थः । तत्र वन्दनपदार्थस्य पूर्वोक्तव्यापारस्य आधेयतासंबन्धेनान्वयः।

विपूर्वकधाञ् धातोः कृतिरर्थः । द्वितीयार्थविषयतायाः कृतौ निरूपकतासंबन्धेनान्वयः । धातूत्तरल्यप्प्रत्ययस्य उत्तरत्वाश्रयकालवृत्तित्वमर्थः । तदेकदेशोत्तरत्वे धात्वर्थकृतेः स्वावधिकत्वसंबन्धेनान्वयः । ल्यबर्थस्य उत्तरत्वाश्रयकालवृत्तित्वस्य आश्रयतासंबन्धेन क्रियते इत्यत्र कृधात्वर्थकृतावन्वयः । तथा च गुरुनिष्ठविशेष्यतानिरूपकस्वावधिकोत्कृष्टत्वप्रकारक ज्ञानविशेषा-

नुकूलव्यापारनिष्ठविषयतानिरूपककृत्यवधिकोत्तरत्वाश्रयकालवृत्तित्वाश्रयीभूता कृतिरिति विधाय गुरुवन्दनम् इत्यतो बोधः । बालाना-मित्यत्र षष्ठ्याः समवेतत्वमर्थः । समवेतत्वं च समवायसंबन्धावच्छिन्ना-धेयत्वम् । तत्र बालपदार्थस्य निरूपितत्वसम्बन्धेनान्वयः ।षष्ठ्यर्थस्य समवेतत्वस्य आश्रयतासंबन्धेन सुखबोधपदार्थे बोधेऽन्वयः । सुखेन बोधः सुखबोधः । सुखशब्दस्य अनायास इत्यर्थः । अनायासः आयासाभावः । तृतीयायाः प्रयोज्यत्वमर्थः । तत्र प्रकृत्यर्थस्य आयासाभावस्य स्वनिष्ठप्रयोजकता- निरूपितत्वसंबन्धेनान्वयः । बोधशब्दस्य पदार्थज्ञानमित्यर्थः । तृतीयार्थस्य प्रयोज्यत्वस्य बोधशब्दार्थे पदार्थज्ञाने आश्रयता- संबन्धेनान्वयः । बोधायेति चतुर्थ्याः उद्देश्यत्वमर्थः । तत्र प्रकृत्यर्थस्य आधेयतासंबन्धेनान्वयः। उद्देश्यतायाश्च निरूपकतासंबन्धेन कृधात्वर्थकृतावन्वयः ।




तथा च **'बालनिरूपितसमवायसंबन्धावच्छिन्नाधेयत्वाश्रयआयासाभावनिष्ठप्रयोजकतानि-रूपितप्रयोज्यत्वाश्रयपदार्थज्ञान-निष्ठोद्देश्यतानिरूपकीभूता कृतिरिति** [4] **बालानां सुखबोधाय** इत्यस्माज्जायमानो बोधः ।

तर्क्यन्ते प्रतिपाद्यन्त इति तर्काः तेषां संग्रहः तर्कसंग्रहः । तर्कशब्दस्य द्रव्यादिपदार्था अर्थः । संग्रहशब्दस्य ज्ञानानुकूलसंक्षिप्तशब्दप्रयोग इत्यर्थः ।तर्काणामित्यत्र षष्ठयाः विषयत्वमर्थः । तत्र प्रकृत्यर्थस्य आधेयतासंबन्धेनान्वयः । विषयत्वस्य निरूपकतासंबन्धेन संग्रहपदार्थैकदेशज्ञानेऽन्वयः । मया इति अध्याहार्यम् । तत्र तृतीयायाः समवेतत्वमर्थः । तत्र प्रकृतिभूतास्मच्छब्दार्थस्य अन्नम्भट्टस्य निरूपितत्वसंबन्धेनान्वयः । कृधातोः कृतिरर्थः । तत्र तृतीयार्थसमवेतत्वस्य आश्रयतासंबन्धेनान्वयः । कृधातूत्तराख्यातस्य विषयत्वमर्थः । विषयत्वे धात्वर्थकृतेः निरूपितत्वसंबन्धेनान्वयः । विषयत्वस्य आश्रयतासंबन्धेन तर्कसंग्रहपदार्थे शब्दप्रयोगेऽन्वयः ।

तथा च **द्रव्यादिपदार्थनिष्ठविषयतानिरूपकज्ञानानुकूलसंक्षिप्तशब्दप्रयोगः । अन्नम्भट्टनिरूपितसमवेतत्वाश्रय कृतिनिरूपितविषयत्वाश्रयः** इति क्रियते तर्कसंग्रहः इत्यतो बोधः ।

**॥ निष्कर्षः ॥**

इत्येवं रूपेण प्रत्येकस्य पदस्य प्रकृत्यर्थप्रत्ययार्थतत्संसर्गादिनिर्णयपूर्वकमालोच्य यत्प्राप्यते – विश्वनिष्ठनियाम्यता निरूपित-नियामकतावन्निष्ठविशेष्यतानिरूपकहृदयनिष्ठाधारतानिरूपिताधेयत्वप्रकारकज्ञानविशेषावधिकोत्तरत्वाश्रयकालवृत्तित्वाश्रयीभूता,
गुरुनिष्ठवशेष्यतानिरूपकस्वावधिकोत्कृष्टत्वप्रकारकज्ञानानुकूलव्यापारनिष्ठविषयतानिरूपककृत्यवधिकोत्तरत्वाश्रयकालवृत्तित्वाश्रयीभूता,




बालनिरूपितसमवायसंबन्धावच्छिन्नाधेयत्वाश्रयआयासाभावनिष्ठप्रयोजकतानिरूपितप्रयोज्यत्वाश्रयपदार्थज्ञाननिष्ठोद्देश्यतानिरूपकीभूता, अन्नम्भट्टनिरूपितसमवेतत्वाश्रयीभूता च या कृतिः तन्निरूपितविषयताश्रयःद्रव्यादिपदार्थनिष्ठविषयतानिरूपकज्ञानानुकूल संक्षिप्तशब्दप्रयोगः इति संपूर्णात्श्लोकात्प्रमेयप्रतिपादकरेखाचित्राणामाधारेन अयं बोधः स्फुटतया भासते ।

**॥ चिह्नसूची ॥**

**अनेन चिह्नेन निरुप्य-निरुपकभावः सूच्यते ।**

**अनेन चिह्नेन आधेयत्वं आश्रयत्वं निष्ठत्वं वा सूच्यते ।**

**पदार्थः** **प्रकृतिः** **प्रत्ययः**

**पादटिप्पण्यः**

1. Knowledge representation: navya nyaya and conceptual graphes ,पृ.सं- 70

2. तर्कसंग्रहः,पृष्ट.सं – 1 3. तर्कसंग्रहः , पृष्ट.सं – 3 4. तर्कसंग्रहः , पृ.सं- 4

**सन्दर्भग्रन्थसूची**

1) तर्कसंग्रहः , राजा.एस्.गिर्याचार्यः ,श्रीराघवेन्द्रस्वामिमठः- 1980
2) An Introduction to Conceptual Graphs ,Simon Polovina , 2007
3) तर्कसंग्रहसर्वस्वम् , कुरूगण्टि श्रीरामशास्त्रि ,
4) Knowledge representation: navya nyaya and conceptual graphs. 2013

************

**Volume XXI : January to June – 2023, ISSN 2250-1711**

**Journal of Veda Samskrita Academy [Recognised in the UGC-CARE List]**

# प्रतापरुद्रीये काव्यस्वरूपविचारः

**Sunaada Krishna A.**
Research Scholar
Shri Durga Center for P. G. Studies and Research in Sanskrit
SDPT First Grade College, Kateel- 574148, Karnataka
Contact No. : 9110286172
E-mail : sunaadhakrishna@gmail.com

विद्यानाथेन प्रतापरुद्रीये काव्यस्य लक्षणमित्थं प्रणीतम् यत् –

गुणालङ्कारसहितौ शब्दार्थौ दोषवर्जितौ । गद्यपद्योभयमयं काव्यं काव्यविदो विदुः ॥इति ।

अस्माकं जीवने यथा पदार्थानाम् अपेक्षा भवति तद्वदेव काव्यस्यापि केषाञ्चित् अंशानां प्राधान्यं भवेदेव इत्यभिप्रायः ।

शब्दार्थौ मूर्तिराख्यातौ जीवितं व्यङ्ग्यवैभवम् । हारादिवदलङ्कारास्तत्र स्युरुपमादयः ॥

श्लेषादयो गुणास्तत्र शौर्यादय इव स्थिताः । आत्मोत्कर्षावहास्तत्र स्वभावा इव रीतयः ॥

शोभामाहार्यिकीं प्राप्ता वृत्तयो वृत्तयो यथा । पदानुगुण्यविश्रान्तिः शय्या शय्येव संमता ॥

रसास्वाद प्रभेदाः स्युः पाकाः पाका इव स्थिताः । प्रख्याता लोकवदियं सामग्री काव्यसम्पदः ॥

यथा जीवनस्य शरीरं प्रधानं साधनं तद्वदेव काव्यस्य शब्दार्थौ शरीरं भवति । यस्य जीवराहित्यं भवेत् तस्य अनादरणीयत्वं लोके अनुभूयते तद्वदेव काव्येऽपि व्यङ्ग्यवैभवरूपस्य जीवितस्य राहित्ये अनादरणीयत्वम् चोक्तम् । तथा च व्यङ्ग्यवैभवस्य आत्मस्थानं सिध्यति । हारादिवदलङ्काराः इत्यनेन अयमर्थः द्योत्यते यथा हार-केयूर-कङ्कनादिकाः मनुष्यशरीरं अलङ्कुर्वन्ति तद्वत् उपमादयः अलङ्काराः काव्यशरीरं अलङ्कुर्वन्ति । शौर्यादयःगुणाः नराणाम् उत्कर्षत्वं यथा जनयन्ति तद्वदेव श्लेषप्रसादादयः गुणाः काव्यपुरुषस्य उत्कर्षम् आवहन्ति । काव्यपुरुषस्य शोभां वैदर्भ्यादि रीतयः जनयन्ति । नानाव्यापारश्रान्तस्य पुरुषस्य यथा विश्रान्तिः अपेक्षिता तद्वदेव काव्यस्यापि शय्या भवेदेव इत्यभिप्रायः ।

यथा पाकाः भोज्यवस्तुषु रसोत्पादनं कुर्वन्ति तद्वत् काव्येऽपि द्राक्षादि पाकाः श्रृङ्गारादीनां रसानां स्वादुत्वं जनयन्ति ।

काव्यवृत्तयः यथा –

कैशिक्यारभटी चैव सात्वती भारती तथा । चतस्रः वृत्तयो ज्ञेया रसावस्थान सूचकाः ॥ इति ।

अभिधा - 'तपोविशेषैः प्रथितैः प्रजानाम् ……' इत्यनेन श्लोकेन प्रजानां चान्द्रायणादि प्रथिततपोविशेषैः जगतीमहिष्याः शुभैः चरितैश्च अस्य लोकस्य भाग्यविशेषेण च वीररुद्रनृपतिः राज्यं प्रशास्ति इति अत्र अभिधायाः उल्लेखः कृतः । ।

लक्षणा – लक्षणायाः विषये भेदचतुष्टयम् अङ्गीकृतम् – जहल्लक्षणा, अजहल्लक्षणा, सारोपलक्षणा, साध्यवसाय लक्षणा चेति ।

व्यञ्जना – व्यञ्जनाव्यापारविषये शब्दशक्तिमूला, अर्थशक्तिमूला, उभयशक्तिमूला इति त्रैविध्यम् अङ्गीकृतम्।

काव्यभेदाः – शब्दचित्रं यथा –

क्षोणीरक्षणदक्षिणाः क्षतजगत्क्षोभा दुरीक्षक्रमाः । क्षुद्रक्षत्रियपक्षशिक्षणविधौ प्रोत्क्षिप्तकौक्षेयकाः ।

उद्दामोद्यनस्य रुद्रनृपतेर्दोर्दण्डयोश्चण्डयो गर्जद्दुर्जन गर्वपर्वतभिदादम्भोलयः केलयः ॥

अत्र प्रतापरुद्रस्य बाह्वोः विषये वर्णनं दृश्यते । भूरक्षणे दक्षिणाः अर्थात् कुशलाः अभ्यासवशेन आयुधप्रयोगे पराक्रमयुक्ताः भवन्ति योद्धारः इत्यभिप्रायः । अत्र दोर्दण्डक्रीडानां अशनित्वरूपेण गर्दानां पर्वतरूपेण च कवेः वृत्यनुप्रासे एव सन्निवेशात् शब्दचित्रं सिध्यति ।

अर्थचित्रं यथा –

खड्गे युद्धविजृम्भिते रिपुमहीनाथाञ्जलिं बिम्बितम् पश्यन्तो जयलक्ष्मीवासकमलं मन्यन्ते विज्ञानिनः ।

मन्ये वीरप्रतापरुद्रविभोर्जन्येषु ग्रहीतुं पुनः सृष्ट्यै रिपुजीवितानि विधेर्यातस्य पीठाम्बुजम् ॥

अत्र प्रतापरुद्रस्य खड्गे शत्रु नृपाञ्जलौ प्रतिबिम्बते जयलक्ष्मीवासः कमलतामारोप्य पदद्वयेन अर्थासिद्धेन ब्रह्मासनकमलत्वप्रतिपादनात् अपह्नुतिः अलङ्कारः सिध्यति । अतः अर्थचित्रता संभवति ।

उभयचित्रं यथा –

विद्यासमुद्रे भुवनैकभद्रे प्रतापरुद्रे जितवैरिभद्रे । रक्षाविनिद्रे धृतशौर्यमुद्रे कान्तेव पृथ्वी रमते गुणार्द्रे ॥

अत्र अनुप्रासोपमाभ्यां चित्रता । अस्यार्थः – अत्र द्रे इत्यस्य पुनरावृत्तिः भवतीति शब्दचित्रम् । कान्तेव पृथ्वी इत्यनेन उपमारूप अर्थचित्रम् इति कारणादत्र उभयचित्रं सम्भवति ।

व्यङ्ग्यस्य प्राधान्यत्वं यत्र भवति तत्र ध्वनिकाव्यमिति व्यपदेशः । एवञ्च व्यङ्ग्यस्य अप्राधान्यं यत्र भवेत् तत्र मध्यमकाव्यं गुणीभूतव्यङ्ग्यमित्यङ्गीक्रियते । यत्र व्यङ्ग्यस्य अस्फुटत्वं दृश्यते तत्र अधमं काव्यं चित्रकाव्यमिति । अत्र काव्यत्रितयेष्वपि ध्वनिकाव्यस्यैव उत्तमं स्थानम् इति स्पष्टम् । एवं व्यङ्ग्यस्य चारुत्वापकर्षोपाधिकृतं न तु स्वाभाविकमिति गुणीभूतव्यङ्ग्यम् । अधमकाव्यस्य अस्फुटव्यङ्ग्यत्वेन नीरसत्वात् केवलवाच्यवाचकवैचित्र्याश्रयत्वेन स्वीक्रियमाणत्वात् चित्रशब्दवाच्यत्वं भवति । तच्चित्रम् शब्दार्थोभयरूपेण विद्यते –

तत्र ध्वनिकाव्यस्य उदाहरणं यथा –

स्वामिन् गोत्रमहीधरान् किमधुना नीचैर्विधित्से कुतो गाधानम्बुनिधीन् करोषि कुरुषे किं दिक्पतीनल्पकान् ॥

इत्थं पार्श्वचरानुलापमखिलं न्यक्कृत्य धर्मैषिणा सृष्टः पद्मभुवा गुणैकवसतिः श्रीवीररुद्रो नृपः ॥

श्लोकस्य अर्थः यथा – प्रतापरुद्रः गाम्भीर्यादि अनेकगुणानामेकवसतिः पार्श्ववर्तिनाम् आलापादिकम् अलक्ष्यीकृत्य वेधसा सृष्टो भवति । तेषाम् अनुलापः यथा – ब्रह्मन् ! किमर्थं भवान् सम्प्रति कुलपर्वतान् उन्नतान् करोति ? किमर्थं सागरान् अगाधेतरान् करोषि ? एवञ्च दिक्पालकान् अल्पकान् कुरुषे? इति ।

अत्र प्रतापरुद्रस्य कुलशैलातिशायित्वम् उन्नतत्वेन प्रतिभाति । गम्भीरतायाः विषये समुद्रादधिकं लोकपालपेक्षया अधिका विभूतिश्च ध्वन्यते । तथा च अत्र कुलशैल-सागर-लोकपालक-निर्माण-सम्भ्रम-अतिशायि । सर्वविलक्षणम् प्रतापरुद्रनिर्माणवैभवम् ।

गद्यस्य लक्षणं तावत् "अपादः पदसङ्घटनः गद्यम्" इति । अत्र कादम्बर्यादयः उदाहरणम् । पद्यञ्चतुष्पदमिति पद्यस्य लक्षणात् रघुवंशादि पद्यकाव्यम् उदाहरणम् । गद्यपद्यात्मककाव्यं चम्पूकाव्यमिति तल्लक्षणं श्लोकरूपेण उक्तं यथा – 'गद्यपद्योभयमयं चम्पूरित्यभिधीयत' इति ।

वक्त्रं चापरवक्त्रं च सोच्छ्वासत्वं च भेदकम् । वर्ण्यते यत्र काव्यज्ञैरसावाख्यायिका मता ।

इत्यनेन श्लोकेन आख्यायिकायाः लक्षणमुक्तम् । आख्यायिका नाम गद्यकाव्यविशेषः तत्र वक्त्रमित्यादिषु वृत्तविशेषौ गृह्येते ।

अत्र क्षुद्रप्रबन्धाः –

येन केनापि तालेन गद्यपद्यसमन्वितम् जयत्युपक्रमं मालिन्यादिप्रासविचित्रितम् । तदुदाहरणं नाम विभक्त्यष्टकसंयुतम् ॥

तत्र उपक्रमे जयति इति पदम् भवति तथा मालिन्यादि रम्य वृत्तैः निबद्धः दृश्यते । अपि च उपक्रमाणि अष्टवाक्यानि सप्रासानि सतालानि प्रत्येकस्मिन् विभक्तिषु निबध्यते इति । ततः विभक्त्याभासाः च निबध्यन्ते । तदुदाहरणाख्यं क्षुद्रप्रबन्धस्य लक्षणम् ।

एवं काव्यलक्षणं, काव्यप्रभेदाः, वृत्तिनिरूपणम्, अभिधालक्षणा-व्यञ्जनादीनां स्वरूपमित्यादिविचाराः प्रतापरुद्रीये सम्यक् प्रतिपादिताः ।

*************

Volume XXI : January to June – 2023, ISSN 2250-1711
Journal of Veda Samskrita Academy [Recognised in the UGC-CARE List]

# अनुवादसाहित्ये प्रतिबिम्बिताः संस्कृतग्रन्थाः, हस्तप्रतयश्च

## 'Reflection on Sanskrit Texts and Manuscripts in Translation'

('विद्वान् डा ॥ एच्.वि. नागराजरावमहोदयविरचिताः अनुवादितग्रन्थाः')

**Smt. Kavitha B**
Research Scholar
Karnataka Sanskrit University, Chamaraja Pete
Bengaluru-560018, Karnataka
Registration No:Ph.D/RG-LF/19-20/28
Ph.No: 8088710623
Email ID: kavithopadhya@gmail.com

*शोधपत्रिकायाः मुख्योद्देशाः :-

१. सागरसदृशे संस्कृतसाहित्ये विद्यमानानां विशिष्टानां काव्यप्रकाराणामवगमनं, भाषान्तकृतीनामध्ययनं साध्यते ।

२. आधुनिकसंस्कृतसाहित्ये विद्वान् डा॥ एच्.वि.नागराजरावमहोदयानामपूर्वं योगदानमवगम्यते ।

३. संस्कृतशतकसाहित्यग्रन्थेषु नागराजशतककृतीनां महत्त्वं, विशिष्टस्थानमानञ्च ।

४. अनुवादसाहित्ये कवेः कवितारचनायाः विशिष्टा शक्तिः, काव्यप्रौढिमा, साहित्यसङ्ग्रयश्च अवगम्यन्ते ।

५. कवेः जीवनप्रीतिः, रीतिः, नीतिः, लौकिकज्ञानम्, अलौकिकानुभूतिः, प्रेरणाशक्तिः, काव्यसूक्ष्मतापि च सम्यक् द्रष्टुं शक्यते ।

*पत्रिकायाः सारलेखः :-

आधुनिकसंस्कृतसाहित्याकाशेऽग्रेसरः, व्याकरणालङ्कारपण्डितः, राष्ट्रपतिप्रशस्तिपुरस्कृतः, सुधर्मासंस्कृतपत्रिकायाः गौरवसम्पादकः विद्वान् डा॥ एच्. वि. नागराजराव् महोदयस्य संस्कृतज्ञानं, प्रतिभा, वाक्पटुता च सर्वेषां सुपरिचितैव । अनेन महाभागेन वैविध्यपूर्णाः, वैशिष्ट्यपूर्णाः, पाण्डित्यपूर्णाः, विद्वत्पूर्णाः बहवःशास्त्रग्रन्थाः, शतकग्रन्थाः, अनुवादग्रन्थाः च विरचिताः । तेषां ग्रन्थानां प्रकटनं मैसूरुनगरस्थिते विश्वमान्यसुधर्माप्रकाशनद्वारा कारितमस्ति ।

तेषु सर्वेषु ग्रन्थेषु अनन्यविचाराः, अपूर्वसङ्गतयः, सन्मार्गः, सत्यसङ्गः, आदर्शजीवनमौल्यानि, धार्मिकनितिः, निःस्वार्थता, विश्वभ्रातृत्वम्, सहनाशीलता,सद्विद्या, भूसंरक्षणं, भूतदया, ज्ञानार्जनम्, तत्त्वचिन्तनम्, वैज्ञानिकप्रगतिः, आध्यात्मानुभूतिः, दैविकविचाराः, स्वाध्ययनम्, सांसारिकजीवनम्, सामाजिकस्वास्थ्यम्, प्रतिभासम्पन्नता, राजनीतिः, कापुरुषाः, प्राकृतिकसम्पदः, पशु-पक्षिणः, संस्कृतिः, भाषाविनोदः, ज्ञान-विज्ञानयोः महत्त्वम्, रोगोपशमनम्, इन्द्रियाणि, विनयशीलता, सौन्दर्यप्रज्ञा, मानसिकारोग्यम्, देशभक्तिः, वैदिकसाहित्यम्, विषयपाण्डित्यम्, क्षमादानादयः अनेकानेकविषयाः प्रस्तापिताः, विमर्शिताः, वर्णिताश्च ।

*मुख्य/कूटशब्दाः-

संस्कृत-कन्नड-आङ्ग्लभाषाभिज्ञः, कविताशक्तिः, कन्नडसाहित्यम्, कन्नडग्रन्थाः, नीतिविषयकाः, जीवनमौल्यानि, लोकज्ञानम्, भाषानुवादाः, अनुवादग्रन्थाः, जीवनानुभूतिः, नैतिकशिक्षणम् इत्यादयः ।

*पीठिकाभागः/प्रस्तावना :–

साहित्यलोके वैदिकसाहित्यमनुसृत्य बहवः ग्रन्थाः, कृतयश्च कालान्तरे लिखिताः । तत्रापि च रामायणं, महाभारतमधिकृत्य वैविध्यपूर्णाः अनुवादग्रन्थाः अनेकासु भारोपीयभाषासु रचिताः । एवमेव साहित्ये अनेकेषां कवीनां, ग्रन्थानां च महासन्दोहः विद्यते । वैदिककालादारभ्य कला-गणित-खगोल-ज्योतिष-रसायन-भूगोल-भू-प्राणि-सस्य-बीज-रेखा-योग-यन्त्र-लोहशास्त्रादयः प्रधानाः विषयाः

सर्वत्र उपलभ्यन्ते । संस्कृतसाहित्ये भारतीयजीवनस्य संस्कृतिः, परम्परा च विराजते । अत्र तु न केवलं शास्त्रविषयाः अपि तु स्तोत्र-स्तव-स्तुति आदयः भक्तिविषयकाः कृतयः, प्रस्तुतकाव्यानि, स्फुटकाव्यानि, शतककाव्यानि, सुभाषितकाव्यानि, नीतिबोधककाव्यानि, विमर्शात्मककाव्यानि तथा विडम्बनात्मककाव्यानि च वर्तन्ते ।

भारतीयसाहित्यलोके अनुवादग्रन्थानां स्थानमानं सर्वथा महत्त्वपूर्णं वर्तते । किमर्थमिति चेत्, अनुवादग्रन्थद्वारा वैविध्यपूर्णाः भाषापाकाः, आचार-विचाराः, संरचनाः, संस्कृतिः, परम्परा, सामाजिकवैविध्यतापि च प्रसरितुं सर्वथा शक्यते । अनेन समग्ररूपेण भाषाभिव्यक्तिरपि कर्तुं शक्यते । साहित्यप्रसरणेन देशभाषाणां कीर्तिरपि निरन्तरं प्रवहति । एवमेवात्र समाजस्य रूपान्तरविषयाः, सुधारणमार्गाः, उन्नतिः, समग्रता, समृद्धिः, ऐक्यं, हृदयोल्लासः, जीवननीति-प्रीति-रीतयः, समाजस्य स्वस्थता, अराजकता, अनाचाराः, मौढ्यविषयाः, विषमसङ्गतिरपिसाहित्यग्रन्थेषु अनादिकालादपि अनुस्यूततया प्रतिबिम्बिता एव । संस्कृतानुवादसाहित्येऽपि च भारतीयानां, भारतीयसमाजानां च भव्यविचाराः पुनः पुनः दर्शिताः, सङ्गृहीताः, बोधिताः च ।

जनसामान्यानां मानसिक-भावनात्मकभावनाः, हृदयवृत्तयः, मानसिकविकाराः साहित्ये वर्णिताः, अभिव्यक्तिविषये तु साफल्यमपि आप्नुवन्ति । अनुवादसाहित्ये मानवहृदयमेव रङ्गस्थलो भूत्वा राग-द्वेष-मोह-हर्ष-प्रेम-सुख-दुःख-करुणा-उत्साह-विषाद-धैर्यादयः भावनाः अनुस्यूततया प्रवहन्ति; तथैव सहृदयानां भावसमाधिश्च अनायासेन प्रविशन्ति ।

*<u>विषयविमर्शः</u> :-

संस्कृतानुवादसाहित्यप्राकारेऽपि च विविधाः काव्यप्रकाराः अनुस्यूततया विविधासु भाषासु अनूदितास्सन्ति । तत्रापि कन्नडभाषायां संस्कृतकृतीनां भाषान्तरप्रक्रिया अविच्छन्नरूपेण संदृश्यते ।यतो हि लौकिकसंस्कृतसाहित्ये मूलतः श्रव्य-दृश्यभेदात् द्विविधं भवति । श्रव्यं तु पाठ्यं; दृश्यं तत्राभिनेयं भवति । गद्य-पद्य-मिश्रभेदादपरं त्रिविधम् । तत्रापि महाकाव्य-खण्डकाव्य-मुक्तकादिभेदात्पद्यकाव्यमनेकविधम् । कथा-आख्यायिकादिभेदात् गद्यकाव्यमपि बहुविधम् । तथैव मिश्रञ्च चम्पूविरुदकरम्भकादिभेदादनेकविधम् । काव्यञ्च पुनरैतिहासिकप्रबन्धकाव्यादिभेदादपि बहुधा भेदितमस्ति । दृश्यमपि रूपकम्, उपरूपकमिति द्विविधम् । यथा,




*<u>संस्कृतसाहित्यकारः- 'विद्वान् डा. एच्.वि.नागराजराव</u>:-

आधुनिकसंस्कृतसाहित्याकाशेऽग्रेसरः, व्याकरणालङ्कारपण्डितः, राष्ट्रपतिप्रशस्तिपुरस्कृतः, सुधर्मासंस्कृतपत्रिकायाः गौरवसम्पादकः विद्वान् डा.एच्.वि.नागराजमहोदयस्य बहूनां कृतीनां प्रकटनं विश्वमान्यसुधर्माप्रकाशनद्वारा कारितमस्ति । संस्कृत-कन्नड-आङ्ग्लभाषाभिज्ञस्य विद्वान्.डा. एच्.वि.नागराजमहाभागस्य योगदानं सर्वथा अपूर्वम्, अनन्यम्, अनुपमञ्च वर्तते । कवेःशास्त्रग्रन्थाः, शतकग्रन्थाः, कन्नडानुवादकृतयः, आङ्ग्लानुवादकृतयः, संस्कृतानुवादकृतयश्च विद्वत्पूर्णाः, लोकमान्याः, अपूर्वास्सन्ति । तेषु ग्रन्थेषु अनन्यविचाराः, अपूर्वसङ्गतयः, सन्मार्गः, सत्यसङ्गः, आदर्शजीवनमौल्यानि, धार्मिकनितिः, निःस्वार्थता,

विश्वभ्रातृत्वम्, सहनाशीलता, सद्विद्या, भूसंरक्षणं, भूतदया, ज्ञानार्जनम्, तत्त्वचिन्तनम्, वैज्ञानिकप्रगतिः, आध्यात्मानुभूतिः, दैविकविचाराः, स्वाध्ययनम्, सांसारिकजीवनम्, सामाजिकस्वास्थ्यम्, प्रतिभासम्पन्नता, राजनीतिः, कापुरुषाः, प्राकृतिकसम्पदः, पशु-पक्षिणः, संस्कृतिः, भाषाविनोदः, ज्ञान-विज्ञानयोः महत्त्वम्, रोगोपशमनम्, इन्द्रियाणि, विनयशीलता, सौन्दर्यप्रज्ञा, मानसिकारोग्यम्, देशभक्तिः, वैदिकसाहित्यम्, विषयपाण्डित्यम्, क्षमादानादयः अनेकानेकविषयाः प्रस्तापिताः, विमर्शिताः, वर्णिताश्च ।

तत्रापि अनुवादसाहित्ये अस्य कवेः योगदानम् अनिर्वचनीयम्, अभूतपूर्वमेव च । यतो हि अनेन महाभागेन विरलातिविरलविषयाः अपि प्रमुखकाव्यवस्तुरूपेण चर्चिताः, परिकल्पिताः, परामर्शिताः च । अस्य कवेः काव्यस्वरूपं, कविताशक्तिं, शतकग्रन्थविषयं, अनुवादचर्यां, रचनावैशिष्ट्यमपि उद्दिश्य विद्वान्. अरैयर् श्रीरामशर्मणः प्रशंसिताभिप्रायः एवं वर्तते । यथा, 'पनसफलं विभज्य, कण्टकशल्कास्थिमुक्तं कृत्वा, कठिनबीजादिकम् अपनीय सरसविवृत फलतूमांशमात्रं सम्पाद्य, सुभोग्यमित दत्तमिदं नागराजेन नारिकेलफलं वा विभज्य निश्शल्ककवचं स्फोटकरूपेण परिणामितं गुडापाकमिश्रितं खण्डखाद्यमिव सुलभचर्वणं कृतं नीतिशास्त्रम्' इति 'सज्जनशतकम्' नाम शतकग्रन्थस्य सोत्कण्ठेनोक्तम् ।

श्रीनागराजराववर्यस्य प्रतिभाशक्तिः अनन्या, अपूर्वा, अमूल्या च विद्यते । अस्मिन् कवौ सज्जनत्त्वं, समस्तजीवनकौशलानि च समाहितानि इति अस्य विविधेषु ग्रन्थप्रकारेषु ज्ञायते । अस्य विवेकपूर्णं वाक्चातुर्यं, सहृदयता, सरलता, सात्विकता च परिपूर्णतायाः विशेषानुभूतिम् आतनोति ।

कविताकामिनीविलासोद्याने विहरन्तम् अभिजातकविं विद्वान्. डा. एच्.वि.नागराजराव् महाभागं विद्वत्प्रपञ्चे सर्वेऽपि जानन्ति, आदरन्ति च । व्याकरणालङ्कारशास्त्रयोः नदीष्णः प्राचीनहस्तलेखशोधनधुरन्धरः, साहित्यविमर्शज्ञः, काव्यालापनिष्णातः, स्वनामधन्यः नागराजरावः "विद्या विनयेन शोभते", "सम्पूर्णकुम्भो न करोति शब्दम्" इत्यस्य च सार्थक्यरूपेण सर्वदा विराजते ।

*<u>डा.नागराजवर्यविरचिताः प्रमुखग्रन्थाः</u> :-

भारतीयसाहित्ये अनुवादसाहित्यप्रकारस्य योगदानं महत्त्वपूर्णं विद्यते । अनेन महोदयेन संस्कृतकाव्यप्रकारस्य विविधेषु विषयविभागेषु बहवः काव्यरचनाप्रयोगाः अविच्छन्नतया यशस्विरूपेण कृताः । ते,

(अ) <u>स्वरचिताः संस्कृतग्रन्थाः</u>-

१.सूक्तिद्विशती
२. नागराजशतकम्
३. रामचन्द्रशतकम्
४. सज्जनशतकम्
५.दुर्जनशतकम्
६.निन्दास्तुतिशतकम्
७.दृष्टान्तशतकम्
८.अर्थान्तरन्यास्यशतकम्
९. कलिविमर्शनशतकम्
१०.कथालहरी
११. विचारलहरी
१२. ऋणमुक्तिः
१३. कथामञ्जरी
१४. समुद्यता
१५. विदुलापुत्रीयम्
१६. दाम्पत्यकलहम्
१७. रत्नहरिणम्
१८. अभयदायिनी
१९. कीर्तिपिशाचिका
२०.दर्शनसाहित्यक्षेत्रे कर्णाटकस्य योगदानम्
२१.बसवप्पशास्त्री
२२.मधुभक्तिः
२३. सुवर्णबीजम्, च

(आ)<u>सम्पादिताः संस्कृतग्रन्थाः</u> :-

१.हृदयामृतम् २. शिवनामकल्पलतालवालम् ३. कामविलासभाणः ४. न्यायशतकम्, च ।

भारतीयसाहित्ये अनुवादसाहित्यप्रकारस्य योगदानं महत्त्वपूर्णं विद्यते । तत्रापि आधुनिककवेः विद्वान् डा. एच्.वि. नागराजराववर्यस्य संस्कृत-कन्नड-आङ्ग्लानुवादकृतीनां योगदानं विद्वत्पूर्णं, मनोज्ञं, विचारपूर्णञ्च दृश्यते । अनेन विविधाः साहित्यप्रकाराः वैशिष्ट्यपूर्णेनात्र

अनूदितास्सन्ति । तेषु न केवलं साहित्यक्षेत्रस्य अपि तु भिन्न भिन्न सामाजिकार्थिक-शैक्षणिक-बौधिक-धार्मिकाध्यात्मिक-शास्त्रीय विषयकग्रन्थाः अनुस्यूततया अनुवादिताः विद्यन्ते । एतैः ग्रन्थैः भारतीयसाहित्यस्य कीर्तिः संवर्धिता इति अतिशयोक्तिः नास्ति ।

(इ)संस्कृतग्रन्थानां कन्नडानुवादाः (अनुवादिताः संस्कृतग्रन्थाः) :-

१.नीतिद्विषष्ठिका
२.वरदराजस्तवः
३. भजगोविन्दस्तोत्रम्
४. दर्पदलनम्
५.वेदान्तार्यपञ्चाशत्
६. बसवानन्दलहरी
७. अलङ्कारसर्वस्वः
८. व्यक्तिविवेकः
९. कथासरित्सागरः (३ सम्पुटाः)
१०. शिवपादादिकेशान्तवर्णन स्तोत्रम्, च ।

(इ) कन्नडग्रन्थाः :-

१.परिचय
२.संस्तव
३. चिन्तन त्रिवेणी
४. वेदवेदाङ्ग
५. संस्कृति चिन्तने
६. प्राचीन प्रपञ्चद एळु अद्भुतगळु
७. सौन्दर्यलहरियल्लि काव्यसौन्दर्य
८. पण्डिता क्षमाराव्, च ।

*अनुवादसाहित्ये एच्.वि.नागराजमहाभागस्य योगदानम् :-

अनेन कविना विरलातिविरलविषयाः अपि प्रमुखकाव्यवस्तुरूपेण चर्चिताः, परिकल्पिताः, परामर्शिताः वर्तन्ते । तथैव वैविध्यमयाः, पाण्डित्यपूर्णाः बहवः संस्कृतग्रन्थाः कन्नडभाषायाम् विशिष्टरूपेण अनूदितास्सन्ति । ते,

*संस्कृतग्रन्थानां कन्नडानुवादाः

१.नीतिद्विषष्ठिका – नीतिविषयकविषयाः विद्यन्ते ।

२.वरदराजस्तवः- अतिविशिष्टः अनुवादग्रन्थः । वरदराजस्वामिनः स्तुतिविषयककृतिः ।

३. भजगोविन्दस्तोत्रम् – श्री आदिशङ्कराचार्यवर्यस्य महाकृतेः कन्नडानुवादः विद्यते ।

४. दर्पदलनम् – विभिन्नविषयकः कृतिः ।

५.वेदान्तार्यपञ्चाशत्- वेदान्तविषयकः ।

६. बसवानन्दलहरी- जगज्ज्योतिः बसवेश्वरवर्यस्य विषयमधिकृत्य विरचिता कृतिः ।

७. अलङ्कारसर्वस्वः- आलङ्कारिककृतेः अनुवादः ।

८. व्यक्तिविवेकः- महिमभट्टस्य सुप्रसिद्धालङ्कारिककृतेः अनुवादः ।

९. कथासरित्सागरः (३ सम्पुटाः)- सोमदेवकवेः महाकृतेः कन्नडानुवादानां सम्पुटाः विद्यन्ते ।

१०. शिवपादादिकेशान्तवर्णनस्तोत्रम्- स्तुतिकाव्यं वर्तते ।

एते प्रसिद्धाः संस्कृतग्रन्थाः सललितरूपेण, सुबद्धरीत्या, सुपाकपूर्णं च कन्नडभाषायाम् अनुवादिताः वर्तन्ते । एते ग्रन्थाः न केवलं संस्कृतसाहित्ये अपि तु कन्नडसाहित्ये, अनुवादसाहित्येऽपि च विशिष्टस्थानमानम् आवहन्तीति प्रशंसा विद्यते ।

*उपसंहारः :-

एवं संस्कृतानुवादसाहित्यस्य कृते नागराजवर्यस्य योगदानं तु सर्वथा आचन्द्रार्कपर्यन्तं कीर्तिवर्धकं विद्यते ।अनेन कविवर्येण पाण्डित्यपूर्णाः बहवः शास्त्रग्रन्थाः, भाषान्तरग्रन्थाश्च विरचिताः । यतो हि काव्यप्रपञ्चे कविः सर्वथा प्रजापरिर्भूत्वा स्वप्रतिभया काव्यरचनां करोति । अत एव काव्यलोके कवेः काव्यसामर्थ्यं तु एवं प्रशंसितम् ।

“अपारे काव्यसंसारे कविरेव प्रजापतिः । यथास्मै रोचते विश्वं तथेदं परिवर्तते ॥“ (ध्वन्यालोके)

अत एव अस्य कवेः एकैकं ग्रन्थमपि उद्दिश्य विशालरूपेण विमर्शात्मकाध्ययनं कृत्वा साहित्यलोकस्य अनन्यानुभूतिमवगन्तुं अस्माभिः प्रयत्नः करणीयः । अनेन प्रत्यनेन साहित्याभिरुचिः, काव्यासक्तिरपि भूयो भूयो संवर्धते एव ।विद्वान्, डा. एच्.वि. नागराजराव् महाकवेः शतकग्रन्थाः शतकसाहित्येतिहासे अतिविशिष्टाः, अनन्याः, अपूर्वाः, अनुपमाश्च इति श्लाघ्याः च वर्तन्ते । अस्यां पत्रिकायाम् अस्य कवेः प्रसिद्धानां विविधानां काव्यप्रकाराणाम्, अनुवादग्रन्थानां सूक्ष्मावलोकनं कृतमस्ति । एतेषाम् अनुवादग्रन्थानाम् अध्ययनेन, अवलोकनेनापि च साहित्यलिकस्य अगाधता, विशालता, समृद्धतापि च विज्ञायते ।

***********


*परामर्शनग्रन्थाः*

| नागराजकाव्यलहरी | डा॥ एच्.वि. नागराजराव् | सुधर्मा प्रकाशनम्, मैसूरु | २०१५ |
|---|---|---|---|
| नागराजशतकत्रयी | डा॥ एच्.वि. नागराजराव् | सुधर्मा प्रकाशनम्, मैसूरु | २०१८ |
| संस्कृतसाहित्येतिहासः | आचार्य लोकमणि दाहालः | चौखम्बा कृष्ण अकाडेमि, वाराणसी | २००५ |
| भर्तृहरिविरचितं नीतिशतकम् | डा ॥सावित्रीगुप्ता | विद्यानिधिप्रकाशनम्, दिल्ली-११००९४ | २००८ (ऐ.एस्.बि.एन्. ८१-८६७००-७५-७) |
| ಸಂಸ್ಕೃತಕಾವ್ಯ | ಡಾ॥ ಕೆ. ಕೃಷ್ಣಮೂರ್ತಿ | ವಿದ್ಯುತ್ ಪ್ರಕಾಶನ ಟಿ.ಕೆ.ಲೇಔಟ್, ನಾಲ್ಕನೇ ಹಂತ, ಮೈಸೂರು – 570009 | 2003 |
| Sanskrit Subhashita Ratnakara | Dr. N P Unni (English Translation) | Chowkhamba Krishnadas Academy, Varanasi-221001 | 2009 (ISBN: 978-81-218-0269-5) |


**************

**Volume XXI : January to June – 2023, ISSN 2250-1711**
**Journal of Veda Samskrita Academy [Recognised in the UGC-CARE List]**

# पाणिनीयव्याकरणे णत्वविधानसमीक्षा

**Dr, Sudip Mandal**
Assistant Professor, Dept. of Sanskrit
University of North Bengal (Jalpaiguri Campus)
P.O.: Jalpaiguri Govt. Engeenering College
Dist. : Jalpaiguri, West Bengal- 735102
Contact No. : 7890766880
E-mail : sudiprkmvu@gmail.com

**०. उपोद्घातः**

उच्चारणगतभेदात् प्रदेशगतभेदात् वा अपशब्दानामुत्पत्तिः। तेषाम् अपशब्दानां प्रयोगे पापमुत्पद्यते इति वैयाकरणानामभिमतम्। तथाह्युक्तं हरिणा– "वाचकत्वाऽविशेषे वा नियमः पुण्यपापयोः" इति।[1] अतः अपशब्दान् परित्यज्य केवलमात्रं पुण्योत्पादकान् साधुशब्दान् ज्ञापयितुमेव व्याकरणस्योत्पत्तिः। स च व्याकरणशब्दः व्याक्रियन्ते व्युत्पाद्यन्ते शब्दाः अनेन इत्यर्थे विपूर्वकात् आङ्पूर्वकात् कृधातोः "करणाधिकरणयोश्च"[2] इति सूत्रेण ल्युटि निष्पद्यते। अथवा व्याक्रियन्ते प्रकृतिप्रत्ययविभागपूर्वकं विविच्य असाधुशब्देभ्यः साधुशब्दाः पृथक्क्रियन्ते अनेन इत्यर्थे व्याकरणशब्दः निष्पद्यते। तेन स्पष्टं यत् व्याकरणेन साधुशब्दाः व्याक्रियन्ते, असाधुशब्देभ्यः साधुशब्दाः पृथक्क्रियन्ते वेति। संस्कृतजगति प्रसिद्धतमेषु अष्टसु नवसु वा ऐन्द्रादिव्याकरणेषु पाणिनीयव्याकरणमन्यतमम्। तस्य आधारीभूतः ग्रन्थः भवति अष्टाध्यायी इति। तस्याः अष्टमाध्याये चतुर्थपादे णत्वविधायकानि ३९ सूत्राणि द्वे वार्तिके च सन्ति। तेषां सूत्राणां वार्तिकानाञ्च निमित्तनिमित्तिनोः अवस्थानभेदात्, निषेधविकल्पादिभेदात् वा पञ्च विभागाः अस्मिन् शोधप्रबन्धे कल्पिताः। तथाहि समानपदस्थान्निमित्तात् णत्वम्, पूर्वपदस्थान्निमित्तात् णत्वम्, उपसर्गस्थान्निमित्तात् णत्वम्, विकल्पेन णत्वम्, निषेधस्थलं चेति। क्रमिममनुसृत्य एतानि णत्वविधायकानि सूत्राणि वार्तिके च प्रबन्धेऽस्मिन् सरलतया आलोच्यन्ते। अनेन शोधपत्रेण वर्णगतदोषाः उच्चारणादिगतदोषाः वा दूरीभूताः भवेयुः इति मन्यते।

**१. समानपदस्थान्निमित्तात् णत्वम्**

समानपदं नाम एकपदम्। अर्थात् निमित्तनिमित्तिनौ एकपदस्थौ चेत् नियमानुसारेण नकारस्य णत्वं स्यात्। तत्र समानपदस्थात् निमित्तात् निमित्तिनः नकारस्य णकारविधायकानि द्वे सूत्रे, वार्तिकमेकं च विद्यन्ते। तथाहि–

**१.१. रषाभ्यां नो णः समानपदे** [3] – णत्वविधानात् सूत्रमिदं विधायकम्। अत्र रषाभ्यामिति पञ्चमीद्विवचनान्तं पदम्, नः इति षष्ठ्यन्तं पदम्, णः इति प्रथमान्तं पदम्, समानपदे इति सप्तम्यन्तं पदम्। परस्य इति अध्याहार्यम्। अत्र समानपदमित्यस्यार्थः एकपदमिति। तत्र प्रमाणं तावत् "समानग्रामा वयम्" इति प्रयोगः। तेन निमित्तनिमित्तिनोः समानपदस्थत्वे सति रेफात् षकाराच्च अव्यवहितस्य परस्य नस्य णत्वं प्रकृतसूत्रेण विधीयते । यथा कृष्णः इत्यत्र षकारात् अव्यवहितपरस्य नस्य णत्वं सूत्रेणानेन साध्यते।

ननु निमित्तनिमित्तिनोः अपदस्थत्वाभावात् पदे इत्यनेन एव एकत्वे सिद्धे समानग्रहणं किमर्थमिति चेदुच्यते समानपदम् अखण्डत्वलाभाय। तच्च निमित्तवत्पदभिन्नपदस्थत्वाभाववदिति। तेन रामनाम इत्यादौ नकारस्य एकपदवृत्तित्वेऽपि निमित्तवत्पदभिन्नपदस्थत्वात् णत्वं न सिद्ध्यति। परन्तु कृष्णः इत्यत्र नकारस्य निमित्तवत् अर्थात् षकारवत्पदभिन्नपदस्थत्वाभावात् णत्वं सिद्ध्यति।

**१.२. ऋवर्णाच्चेति वक्तव्यम्** [4] – मातृणाम् इत्यादौ नकारस्य रेफषकाराभ्यां परत्वाभावात् णत्वे अप्राप्ते वार्तिकमिदम् आरब्धम्।

ऋवर्णात् परस्य नकारस्यापि णत्वं वक्तव्यमिति अस्य वार्तिकस्यार्थः। तच्च णत्वं पूर्वोक्तनियमानुसारेण भवति। अर्थात् निमित्तनिमित्तिनोः एकपदस्थत्वे सति ऋकारनिमित्तात् अव्यवहितपरस्य नकारस्य णत्वं वार्तिकेनानेन सिद्ध्यति। यथा धातृणामित्यत्र ऋवर्णात् अव्यवहित-परस्य नस्य णत्वमिति।

**१.३. अट्कुप्वाङ्नुम्व्यवायेऽपि** [5]– सूत्रमिदमपि विधायकम्। सूत्रस्थम् अट्कुप्वाङ्नुम्व्यवाये इति पदं भावसप्तम्यन्तम्, अपि इति अव्ययपदम्। अट् इति प्रत्याहारः, तेन स्वरवर्णाः हयवरकाराश्च बोध्यन्ते। कु इति कवर्गः, पु इति पवर्गः। अट् च कुश्च पुश्च आङ् च नुं चेति अट्कुप्वाङ्नुमः इति इतरेतरद्वन्द्वः, तैः व्यवायः अर्थात् व्यवधानमिति अट्कुप्वाङ्नुम्व्यवायः इति तृतीयातत्पुरुषसमासः, तस्मिन् अट्कुप्वाङ्नुम्व्यवाये इति भावे सप्तमी। अत्र "रषाभ्यां नो णः समानपदे"[6] इति सूत्रमनुवर्तते। तेन प्रकृतसूत्रस्यार्थः भवति अट्कुप्वादीनामेतेषां व्यवधानेऽपि रेफषकाराभ्यां परस्य नस्य णकारः स्यात्समानपदे इति।

ननु अडादिभिः समस्तैः व्यवधाने सति नस्य णत्वं भवति उत तेषु केनापि एकेन वर्णेन व्यवधाने सति नस्य णत्वं भवति इति जिज्ञासायामुच्यते प्रथमपक्षस्तावत् असम्भवः। कारणं हि तादृशः शब्दः संस्कृतवाङ्मये कुत्रापि नास्ति, यस्मिन् रेफषकाराभ्यां परस्य नस्य एतैः अडादिभिः समस्तैः व्यवधाने सति णकारः भवति। केनापि एकेन वर्णेन व्यवाये इत्युच्यते चेत् रामेण इत्यादौ अव्याप्तिः स्यात्। पुनश्च यथासम्भवं मिलितैः व्यवाये इत्युच्यते चेत् कृष्णः इत्यादौ णत्वं न स्यात्। अतः एवोच्यते सूत्रेऽस्मिन् व्यवाय इति पदमुपलक्षणम्। तेन अडादिभिः व्यस्तैः यथासम्भवं मिलितैः वेत्यर्थः फलति। तदेव उक्तं वामनजयादित्येन – "व्यवायोपलक्षणार्थत्वात् अडादीनामिह व्यस्तैः समस्तैश्च व्यवायेऽपि णत्वं भवती"[7] ति। अत्र समानपदं नाम एकपदं तन्नाम अखण्डपदमेव विवक्षितम्। तेन रघुनाथः रामनाम इत्यादौ नातिप्रसङ्गः। कारणं हि लुप्तप्रत्ययमाश्रित्य रघुनाथादौ रघुनाथाद्योः शब्दयोः पृथक् पृथक् पदत्वम् अङ्गीक्रियते। अड्व्याये उदाहरणं तावत्– करणम्, हरणम्। कवर्गव्यवाये– अर्केण, गर्गेण। पवर्गव्यवाये– दर्पेण, रेफेण इति।

ननु अटि आङः आकारस्य सत्त्वात् अड्व्याये इत्यनेन एव नस्य णत्वे सिद्धे पुनः आङ्ग्रहणं किमर्थमिति चेदुच्यते - "पदव्यवायेऽपि"[8] इत्येकं सूत्रमस्ति। तेन सूत्रेण पदेन व्यवाये सति रेफषकाराभ्यां परस्य नस्य अडादिव्यवायेऽपि णत्वं न भवति। अतः आङ्ग्रहणम् "उपसर्गादसमासेऽपि"[9] इत्यत्र पदव्यवाये णत्वनिषेधस्य पुनः प्राप्त्यर्थम्। तेन पर्याणद्धं निराणद्धमित्यादिषु णत्वं सिद्ध्यति। पुनश्च नुम्ग्रहणं किमर्थमिति चेदुच्यते नुम्ग्रहणमनुस्वारोपलक्षणार्थम्। कारणं हि "इवि प्रीणने" इत्यत्र इव्-धातोः ल्युटि अनादेशे इदित्त्वान्नुमि च प्रेन्वनमिति रूपं सिद्ध्यति। अत्र "कुमति च"[10] इत्यनेन सूत्रेण नुमा व्यवधानेऽपि णत्वं भवितुमर्हति। किन्तु बृंहणम्, तृंहणमित्यादौ णत्वं न स्यात्। कारणं हि अत्र अनुस्वारेण व्यवायः वर्तते न तु नुमा। अतः उच्यते नुमा अनुस्वारः लक्ष्यते। तेन प्रेन्वनमित्यत्र नुमः सत्त्वादपि नस्य णत्वं न भवति। किन्तु तृंहणमित्यत्र असत्यपि नुमि, नुम्ग्रहणस्य अनुस्वारोपलक्षणार्थत्वात् अनुस्वारेण व्यवाये नस्य णत्वं भवति।

**२. पूर्वपदस्थान्निमित्तात् णत्वम्**

णत्वविधायकेन प्रथमसूत्रेण[11] निमित्तनिमित्तिनोः समानपदस्थत्वमपेक्षते इत्युक्तम्। एकस्मिन् एव पदे निमित्तं निमित्ती च स्यादित्यर्थः। परन्तु केषुचित् स्थलेषु पूर्वपदनिमित्तादपि नस्य णत्वं भवति। तत्र निमित्तनिमित्तिनोः भिन्नपदस्थत्वे अपि नस्य णत्वं भवति। तेषां विवरणमधः प्रदीयते।

**२.१. पूर्वपदात् संज्ञायामगः**[12]– पूर्वपदं निमित्तीकृत्य णत्वविधानार्थमिदं सूत्रम्। अत्र पूर्वपदशब्दस्य पूर्वपदस्थं निमित्तमित्यर्थः। अगः इत्यस्य गकारवर्जितः इत्यर्थः। "रषाभ्यां नो णः समानपदे" इत्यनुवर्तते। तेन पूर्वपदस्थात् निमित्तात् परस्य उत्तरपदस्थस्य नकारस्य अडादिभिः व्यवाये गकारव्यवधानाभावे णत्वं स्यादिति सूत्रार्थः भवति। तच्च संज्ञायामेव भवति। यथा द्रुरिव नासिका यस्य स

द्रुणसः इत्यत्र पूर्वपदस्थात् रेफनिमित्तात् परस्य उत्तरपदस्थस्य नकारस्य गकारव्यवधानाभावे उकारव्यवधाने णत्वं सिद्ध्यति। ऋगयनमित्यत्र तु पूर्वपदस्थस्य निमित्तस्य सत्त्वेऽपि गकारव्यवधानात् उत्तरपदस्थस्य नकारस्य णत्वं न भवति।

**२.२. वनं पुरगामिश्रकासिध्रकाशारिकाकोटराऽग्रेभ्यः**[13] – एभ्यः पुरगादिशब्देभ्यः एव परस्य उत्तरपदस्य वनशब्दस्य नकारस्य णत्वमनेन सिद्ध्यति। यथा पुरगावणम् इत्यत्र पूर्वपदात् पुरगाशब्दात् परस्य उत्तरपदस्थस्य नकारस्य णत्वम्। एभ्यः पुरगादिशब्देभ्यः एव परस्य वननकारस्य णत्वं भवतीति स्वीकारे असिपत्रवनम् इत्यत्र वनशब्दस्थस्य नकारस्य णत्वं न सिद्ध्यति। दीर्घान्ताः पुरगादयः पञ्च संज्ञायामेव सिद्ध्यन्ति। अतः "पूर्वपदात्संज्ञायामगः"[14] इत्यनेन एव सिद्धे पुनर्विधानं नियमार्थं भवति। तेन एभ्यः कृतदीर्घेभ्यः पुरगादिभ्यः एव वनशब्दस्थस्य नकारस्य णत्वम्, नान्येभ्यः इत्यर्थः सम्पद्यते।

**२.३. प्रनिरन्तःशरेक्षुप्लक्षाम्रकार्ष्यखदिरपीयूक्षाभ्योऽसंज्ञायामपि**[15] – प्र, निर्, अन्तर्, शर, इक्षु, प्लक्ष, आम्र, कार्ष्य, खदिर, पीयूक्षा इत्येतेभ्यः पूर्वपदनिमित्तेभ्यः परवर्तिनः उत्तरपदस्थस्य वनशब्दस्थस्य नकारस्य णत्वविधानार्थं सूत्रमिदम्। अनेन संज्ञायामसंज्ञायामपि णत्वं विधीयते। यथा प्रकृष्टं वनं प्रवणम् इति संज्ञायाम् असंज्ञायां वा पूर्वपदनिमित्तात् प्रशब्दात् परवर्तिनः वनशब्दस्थस्य नकारस्य णत्वम्। एवं निर्वणम्, अन्तर्वणम्, शरवणमित्यादिष्वपि द्रष्टव्यम्।

**२.४. अह्नोऽदन्तात्**[16] – अदन्तात्परस्य अह्नादेशस्य नकारस्य णत्वविधानार्थमिदं सूत्रम्। "पूर्वपदात्संज्ञायामगः" इत्यतः पूर्वपदात्, "रषाभ्यां नो णः समानपदे" इति षकारवर्जं चेति अनुवर्तते। तेन अदन्तपूर्वपदस्थात् रेफात्परस्य उत्तरपदस्य अह्नादेशस्य यः नकारः, तस्य णत्वं स्यादित्यर्थः सम्पद्यते। यथा सर्वाह्णः इत्यत्र अदन्तपूर्वपदस्थात् सर्वशब्दस्थात् रेफात् परस्य उत्तरपदस्थस्य अह्नादेशभूतनकारस्य णत्वम्।

**२.५. वाहनमाहितात्**[17] – पूर्वपदम् आहितवाचकं चेत् तत्स्थात् निमित्तात् परस्य उत्तरपदस्य वाहनशब्दस्य नकारस्य णत्वं भवति। आहितं नाम यत् वहनार्थं वाहने स्थाप्यते, यच्च पुनः स्वयमेव आरोढुं न शक्नोति। यथा इक्षुवहनाय वाहने तन्नाम याने इक्षुं स्थाप्यते। अतः इक्षुः आहितमित्युच्यते। ततः आहितवाचकात् इक्षुशब्दात् परस्य उत्तरपदस्थस्य वाहननकारस्य णत्वे इक्षुवाहणमिति रूपं सिद्ध्यति। आहितं स्वयमेव आरोढुं न शक्नोति इत्युच्यमाने इन्द्रवाहनमित्यत्र णत्वं न भवति।

**२.६. पानं देशे**[18] – देशविशेषे गम्यमाने पूर्वपदस्थात् निमित्तात् परस्य पानशब्दस्थस्य नकारस्य णत्वं स्यात्। यथा क्षीरपाणाः उशीनराः इत्यत्र क्षीरं पानं येषां ते क्षीरपाणाः, सोऽयं शब्दः उशीनरदेशविशेषे लाक्षणिकः। अतः देशविशेषे प्रयुक्तः क्षीरपाणाः इत्यत्र पूर्वपदस्थात् रेफनिमित्तात् परस्य पानशब्दस्थस्य नकारस्य अडादिव्यवाये णत्वं सिद्ध्यति।

**२.७. एकाजुत्तरपदे णः**[19]– एकः अच् यस्मिन् तद् एकाच्। तत् उत्तरपदं यस्य सः एकाजुत्तरपदः। तस्मिन् एकाजुत्तरपदे समासे प्रातिपदिकान्तनुम्विभक्तिस्थस्य नकारस्य पूर्वपदस्थात् निमित्तात् णत्वं भवति। यथा वृत्रहणौ इत्यत्र पूर्वपदस्थात् निमित्तात् परस्य हन् इत्यस्य एकाजुत्तरपदस्य प्रातिपदिकान्तस्य नकारस्य णत्वम्। एवं क्षीरपाणि क्षीरपेण इत्यादौ अपि नुमः विभक्तिस्थस्य च नकारस्य णत्वं द्रष्टव्यम्। ननु सूत्रारम्भसामर्थ्यात् एव नित्यत्वे सिद्धे पुनर्णग्रहणं किमर्थमिति चेदुच्यते पुनर्णग्रहणं विकल्पाधिकारनिवृत्तेः स्पष्टार्थमिति।

**२.८. कुमति च**[20] – अनेकाजुत्तरपदस्य णत्वविधानार्थं सूत्रमिदम्। कु अर्थात् कवर्गः अस्य अस्तीति कुमत्। तस्य कवर्गवतः उत्तरपदस्य प्रातिपदिकान्तनुम्विभक्तिस्थस्य नकारस्य पूर्वपदस्थात् निमित्तात् णत्वमनेन विधीयते। यथा हरिकामिणौ इत्यत्र कवर्गवतः उत्तरपदस्य प्रातिपदिकान्तस्य नकारस्य पूर्वपदस्थात् निमित्तात् णत्वं भवति। एवं हरिकामाणि हरिकामेण इत्यादौ नुमः विभक्तिस्थस्य च णत्वं द्रष्टव्यम्।

**३. उपसर्गस्थान्निमित्तात् णत्वम् :** क्वचित् उपसर्गस्थात् निमित्तादपि नस्य णत्वं दृश्यते। तत्र समासे असमासे वा उपसर्गस्थात् निमित्तात्

अव्यवहितपरस्य अडादिभिः व्यवहितपरस्य वा निमित्तिभूतस्य उत्तरपदस्थस्य नकारस्य णत्वं भवति। यथा –

**३.१. उपसर्गादसमासेऽपि णोपदेशस्य**[21] – णकारः उपदेशे यस्य स णोपदेशः। तस्य णोपदेशस्य धातोः नकारस्य उपसर्गस्थात् निमित्तात् णत्वादेशः प्राप्नोति। एतादृशं णत्वम् असमासे अपि भवति समासेऽपि भवति। यथा णम प्रह्वत्वे शब्दे च इति धातोः उपदेशे णकारः वर्तते। अतः प्रणमति इत्यत्र णोपदेशस्य धातोः नकारस्य उपसर्गनिमित्तं णत्वं प्राप्नोति। असमासे इति ग्रहणं किमर्थमिति जिज्ञासायामुच्यते पूर्वपदाधिकारात् समासे एव स्यात्। अतः तदधिकारस्य निवृत्तिद्योतनार्थमेव असमासे इति गृहीतम्।

**३.२.हिनुमीना**[22] – हिनु मीना इत्यनयोः द्वन्द्वात् षष्ठीद्विवचनम्, तस्य द्विवचनस्य च आर्षः लुक्। उपसर्गस्थात् निमित्तादुत्तरस्य हिनु, मीना इत्येतयोः नकारस्य णत्वमनेन विधीयते। यथा प्रहिणोति इत्यत्र उपसर्गस्थात् रेफनिमित्तात् उत्तरस्य हिनु इत्यस्य नकारस्य णत्वम्। एवं प्रमीणाति इत्यादौ अपि ऊह्यम्।

**३.३. आनि लोट्**[23]– आनि लोट् इत्युभयं लुप्तषष्ठीकं पदम्। उपसर्गस्थात् निमित्तात् उत्तरस्य लोडादेशस्य आनि इत्येतस्य नकारस्य णत्वादेशः प्रकृतसूत्रेण विधीयते। यथा प्रभवाणि इत्यत्र आनि इत्येतस्य लोडादेशस्य नकारस्य उपसर्गस्थात् निमित्तात् उत्तरस्य णत्वं सूत्रेणानेन सिध्यति।

**३.४. नेर्गदनदपतपदघुमास्यतिहन्तियातिवातिद्रातिप्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु च**[24]– एतेषु गदादिषु परतः उपसर्गस्थात् निमित्तादुत्तरस्य नि-इत्यस्य नकारस्य णकारादेशः स्यात्। यथा प्रणिगदति इत्यत्र उपसर्गस्थात् निमित्तादुत्तरस्य गदधातौ परतः च ने-इत्यस्य नकारस्य णत्वम्। एवमन्यत्रापि ऊह्यम्।

**३.५. अनितेः**[25] – उपसर्गस्थात् निमित्तात् परस्य अनितेः अर्थात् "अन प्राणने" इति धातोः नकारस्य णकारादेशः भवति। यथा प्रपूर्वकात् आङ्पूर्वकात् अन्-धातोः तिपि, शपि, शपः लुकि, इडागमे प्रानिति इति जाते उपसर्गस्थात् निमित्तात् रेफात् परस्य अन्-धातोः नकारस्य प्रकृतसूत्रेण णत्वे प्राणिति इति सिध्यति।

**३.६. अन्तः**[26]– सूत्रेणानेन उपसर्गस्थात् निमित्तात् परस्य पदान्ते विद्यमानस्य अन्-धातोः नकारस्य णकारादेशः विधीयते। यथा प्रपूर्वकात् आङ्पूर्वकात् अन्-धातोः क्विपि सर्वापहारिलोपे सम्बोधनैकवचने सुपि सुब्लुकि हे प्रान् इति जाते प्रकृतसूत्रेण उपसर्गस्थान्निमित्तात् परस्य अन्-धातोः पदान्तनकारस्य णकारादेशे हे प्राण् इति सिध्यति। "पदन्तस्य"[27] इत्यनेन पदान्ते विद्यमानस्य नकारस्य यः णत्वप्रतिषेधः क्रियते तस्यैव अपवादसूत्रम् "अन्तः" इति प्रकृतसूत्रम्।

**३.७. उभौ साभ्यासस्य**[28] – साभ्यासस्य अन्-धातोः उभयोः नकारयोः णकारादेशः भवति। यथा प्राणिणिषति इति।

**३.८. हन्तेरत्पूर्वस्य**[29] – एकमात्राविशिष्टाकारपूर्वस्य हन्तिनकास्य उपसर्गस्थात् निमित्तादुत्तरस्य णकारादेशः स्यात्। यथा प्रहण्यते इत्यत्र अत्पूर्वस्य हन्-धातोः नकारस्य उपसर्गस्थान्निमित्तादुत्तरस्य णकारादेशः भवति। अत्पूर्वग्रहणात् प्रघ्नन्ति इत्यादौ अकारपूर्वत्वाभावात् णत्वं न भवति। तपरकरणात् प्राघानि इत्यादौ ह्रस्वाकाराभावात् णत्वं न भवति।

**३.९. अन्तरदेशे** [30] – अन्तःशब्दादुत्तरस्य अत्पूर्वस्य हन्तिनकारस्य णकारादेशः भवति अदेशाभिधाने। यथा अन्तर्हण्यते इत्यत्र अन्तःशब्दादुत्तस्य अत्पूर्वस्य हन्तिनकारस्य णकारादेशः भवति। परन्तु "अन्तर्हननः देशः" इत्यत्र अन्तःशब्दादुत्तस्य अत्पूर्वस्य नकारस्य विद्यमानत्वेऽपि देशाभिधाने णत्वं न भवति।

**३.१०. अयनं च**[31] – 'अन्तरदेशे' इति अनुवर्तते। तेन अदेशाभिधाने अन्तःशब्दादुत्तरस्य अयनशब्दस्य नकारस्य णकारादेशः भवतीत्यर्थः सम्पद्यते। यथा अन्तरयणं वर्तते इत्यत्र णत्वम्। अदेशे इति ग्रहणात् "अन्तरयनो देशः" इत्यत्र देशाभिधाने नकारस्य णकारादेशः न भवति।

**३.११. छन्दस्यृदवग्रहात्** [32] – अवगृह्यते विच्छिद्य पठ्यते इति अवग्रहः। ऋत् चासौ अवग्रहश्च इति ऋदवग्रहः। तस्मात् ऋकारान्तात् अवग्रहात् पूर्वपदात् उत्तरस्य नकारस्य णकारादेशः भवति छन्दसि विषये। यथा नृमणाः, पितृयाणमिति। अत्र ऋकारः अवगृह्यते।

**३.१२. नश्च धातुस्थोरुषुभ्यः** [33] – धातुस्थात् निमित्तात्, ऊरुशब्दात्, षुशब्दाच्च उत्तरस्य नसः नकारस्य णकारादेशः भवति छन्दसि विषये। यथा "अग्ने रक्षा णः"[34] इत्यत्र धातुस्थान्निमित्तात् उत्तरस्य नसः नकारस्य णकारादेशः भवति। एवम् "उरु णस्कृधि"[35] इत्यादौ "अभी षुणः सखीनाम्"[36] इत्यादौ च उरुशब्दात् षुशब्दात् उत्तरस्य नकारस्य णत्वं बोध्यम्।

**३.१३. उपसर्गाद् बहुलम्** [37] – उपसर्गस्थात् निमित्तादुत्तरस्य नसः नकारस्य णकारादेशः भवति बहुलम्। यथा प्रणः शूद्रः, प्रणो राजा इत्यादौ उपसर्गस्थान्निमित्तादुत्तरस्य नसः नकारस्य णकारादेशः भवति छन्दसि। बहुलग्रहणात् भाषायामपि भवति। यथा प्रणसं मुखमिति।

**३.१४. कृत्यचः** [38] – अचः परस्य कृत्स्थस्य नकारस्य उपसर्गस्थात् निमित्तात् णकारादेशः भवति। अत्र अन-मान-अनीय-अनि-इनि-निष्ठादेशाः णत्वं प्रयोजयन्ति। यथा प्रयाणम्, प्रयायमाणमित्यादौ अचः उत्तरस्य कृत्स्थस्य नकारस्य णत्वं सूत्रेणानेन सिद्ध्यति। अचः इति ग्रहणात् प्रमग्नः इत्यादौ नकारस्य कृत्स्थत्वेऽपि अचः परत्वाभावात् उपसर्गनिमित्तं णत्वं न भवति।

**३.१५. इजादेः सनुमः** [39] – "हलश्चेजुपधात्" [40] इति सूत्रात् हलः इति अनुवर्तते। तत्र धातोः विशेषणत्वेऽपि तदन्तविधिः नासीत् परन्तु अत्र सामर्थात् तदन्तविधिः स्वीक्रियते। इच् आदिः येषां ते इजादयः। नुमा सहितः सनुम्, तस्मात् सनुमः इति। तेनार्थः भवति इजादेः सनुमः हलन्तात् धातोः विहितः यः कृत्, तत्स्थस्य नकारस्य उपसर्गस्थान्निमित्तादुत्तरस्य णकारादेशः भवति। यथा प्रेङ्खणम् इत्यादौ इख-धातुः इजादिः सनुम् हलन्तश्च वर्तते। अतः तस्मात् विहितस्य ल्युडादेशनकारस्य उपसर्गस्थान्निमित्तात् णकारादेशः भवति।

**४. उपसंहारः** प्रबन्धेऽस्मिन् समानपदस्थात्, पूर्वपदस्थात्, उपसर्गस्थाच्च निमित्तात् णत्वविधायकानि सर्वाणि सूत्राणि वार्तिकं चालोचितानि। अत्र निमित्तनिमित्तिनोः अवस्थानभेदात्, निषेधविकल्पादिभेदात् वा पञ्च विभागाः कल्पिताः। तथाहि समानपदस्थान्निमित्तात् णत्वम्, पूर्वपदस्थान्निमित्तात् णत्वम्, उपसर्गस्थान्निमित्तात् णत्वम्, विकल्पेन णत्वम्, निषेधस्थलं चेति। परन्तु विस्तरभयात् विकल्पेन णत्वम्, निषेधस्थलञ्च नैव प्रतिपादितम्। तत्रादौ समानपदस्थात् तन्नाम एकपदस्थात् निमित्तात् णत्वविधायकानि सूत्राणि वार्तिकमेकञ्च व्याख्यातानि। ततश्च पूर्वपदस्थात् उपसर्गस्थाच्च निमित्तात् णत्वविधायकानि सूत्राणि आलोचितानि। व्याख्यानावसरे आगतानां विशेषानामपि विवरणं तत्र तत्रैव प्रस्तुतम्। यथा "पूर्वपदात्संज्ञायामगः" इत्यनेन एव पुरगादिषु णत्वे सिद्धे "वनं पुरगा...." इत्यादिना पुनर्विधानं किमर्थमिति चेदुच्यते पुनर्विधानं नियमार्थं भवति। तेन एभ्यः कृतदीर्घेभ्यः पुरगादिभ्यः एव वनशब्दस्थस्य नकारस्य णत्वं, नान्येभ्यः इत्यर्थः सम्पद्यते। पुनश्च "एकाजुत्तरपदे णः" इत्यत्र सूत्रारम्भसामर्थ्यात् एव नित्यत्वे सिद्धे पुनर्णग्रहणं किमर्थमिति चेदुच्यते णकारग्रहणं स्पष्टार्थमिति शम्।

**पादटिप्पणी :**

1. वाक्यपदीये पदकाण्डे सम्बन्ध समुद्देशे कारिकासंख्या – ३०
2. अष्टाध्यायी – [३/३/११७]
3. अष्टाध्यायी – [८/४/१]
4. "रषाभ्यां नो णः समानपदे" इति सूत्रे पठितं वार्तिकमिदम्।
5. अष्टाध्यायी – [८/४/२]6. अष्टाध्यायी – [८/४/१]
7. काशिकायां पत्रसंख्या – ४०५/ सूत्रसंख्या- [८/४/२]
8. अष्टाध्यायी – [८/४/३८]
9. अष्टाध्यायी – [८/४/१४]
10. अष्टाध्यायी – [८/४/१३]
11. रषाभ्यां नो णः समानपदे [अष्टाध्यायी – ८/४/१]

12. अष्टाध्यायी – [८/४/३]
13.अष्टाध्यायी – [८/४/४]17. अष्टाध्यायी – [८/४/८]
14. अष्टाध्यायी – [८/४/३]
15. अष्टाध्यायी – [८/४/५]
16. अष्टाध्यायी – [८/४/७]
18. अष्टाध्यायी – [८/४/९]
19. अष्टाध्यायी – [८/४/१२]
20. अष्टाध्यायी – [८/४/१३]
21. अष्टाध्यायी – [८/४/१४]
22. अष्टाध्यायी – [८/४/१५]
23. अष्टाध्यायी – [८/४/१६]
24. अष्टाध्यायी – [८/४/१७]
25. अष्टाध्यायी – [८/४/१९]
26. अष्टाध्यायी – [८/४/२०]
27. अष्टाध्यायी – [८/४/३७]
28. अष्टाध्यायी – [८/४/२१]
29. अष्टाध्यायी – [८/४/२२]
30. अष्टाध्यायी – [८/४/२४]
31. अष्टाध्यायी – [८/४/२५]
32. अष्टाध्यायी – [८/४/२६]
33. अष्टाध्यायी – [८/४/२७]
34. ऋग्वेदः - [७/१५/१३]
35. ऋग्वेदः - [८/७५/११]
36. ऋग्वेदः - [४/३१/३]
37. अष्टाध्यायी – [८/४/२८]
38. अष्टाध्यायी – [८/४/२९]
39. अष्टाध्यायी – [८/४/३२]
40. अष्टाध्यायी – [८/४/३१]

## परिशीलिताः ग्रन्थाः


१. अमरसिंहः। *अमरकोषः* (सुधाव्याख्यया सहितः)। वाराणसी : चौखम्बा कृष्णदास अकादेमी, २०१३।

२. *ऋग्वेदसंहिता* (सायणभाष्यसमेता)। वैदिकसंशोधनमण्डलः (प्रकाशकः)। पुना : तिलक महाराष्ट्र विद्यापीठ, १८५५।

३. तपनशंकरभट्टाचार्यः। *वैदिकव्याकरणम्।* कलकाता : संस्कृत वुक् डिपो, २०११।

४. पाणिनिः। *अष्टाध्यायी।* गोपालदत्तपाण्डेयः (सम्पा.)। वाराणसी : चौखम्बा सुरभारती प्रकाशन, २००९।

५. पाणिनिः। *अष्टाध्यायीसूत्रपाठः।* दीक्षितपुष्पा (सम्पा.)। नवदेहली : संस्कृतभारती, २०१०।

६. भट्टोजिदीक्षितः। *वैयाकरणसिद्धान्तकौमुदी* (बालमनोरमातत्त्वबोधिनीटीकाद्वयोपेता)। गिरिधरशर्मा, परमेश्वरानन्दशर्मा च (सम्पा.)। वाराणसी : मोतीलाल बनारसीदास, २०१०।

७. भट्टोजिदीक्षितः। *वैयाकरणसिद्धान्तकौमुदी।* अशोककुमारपण्डा (सम्पा.)। कलकाता : लेजार कम्पोज प्रग्रेसिभ पावलिशार्स, मे २०१२।

८. भट्टोजिदीक्षितः। *वैयाकरणसिद्धान्तकौमुदी।* गोविन्दाचार्यः (सम्पा.)। वाराणसी : चौखम्बा सुरभारती प्रकाशन, २०१२।

९. भट्टोजिदीक्षितः। *वैयाकरणसिद्धान्तकौमुदी* (लक्ष्मीव्याख्योपेता)। श्रीबालकृष्णशर्मा पञ्चोलिः (सम्पा.)। वाराणसी : मोतिलाल बनारसी दास, १९६६।

१०. भर्तृहरिः। *वाक्यपदीयम्।* सत्यनारायणखण्डूडी (सम्पा.)। वाराणसी : चौखम्बा कृष्णदास अकादमी, २०१४।

११. भर्तृहरिः। *वाक्यपदीयम्।* हरिनारायणतिवारी (सम्पा.)। वाराणसी : चौखम्बा संस्कृत सीरीज आफिस, २०१५।

१२. भीमसेनशास्त्री। *लघुसिद्धान्तकौमुदी* (भैमीव्याख्यासहिता)। दिल्ली : भैमी प्रकाशन, २०२१।

१३. वामनजयादित्यः। *काशिका* (न्यास-पदमञ्जरी-भावबोधिनीसहिता)। जयशङ्करलालत्रिपाठी (सम्पा.)। वाराणसी : तारा बुक एजेन्सी, २०१५।


***********

**Volume XXI : January to June – 2023, ISSN 2250-1711**

**Journal of Veda Samskrita Academy [Recognised in the UGC-CARE List]**

# शक्तिविशिष्टाद्वैतसिद्धान्तस्वरूपं महत्वं च निरूपणम्

**जे. आर्. सिद्धलिङ्गस्वामि,**

शोधछात्रः, कर्नाटक संस्कृत विश्वविद्यालयः,

चामराज पेटे–560018, बेङ्गलूरु, कर्नाटक

Contact No. : 9620816109, E-mail : siddalingaswamyjr@gmail.com

**पीठिका –**

**"वेदोऽखिलो धर्ममूलम्"**– इति विषयः सुविदितमेव वैदिकवाङ्मयविदां विदुषां यद् **'वेदोऽखिलो धर्ममूलम्'** इति महामानवेन मनुना संपूर्णस्य धर्मस्य मूलत्वेन वेदाः एवोपन्यस्ताः । मानवसमुदायस्य ज्ञानम् अधिकं भवति चेत् साङ्घिक–जीवनस्य व्यवस्थां दृष्टुं धर्मः, अर्थः, कामः, मोक्षेषु धर्म एव धर्मः एव अत्यन्तं प्रमुखं भजते । तदा प्रतिव्यक्तेः आन्तरिकविकासद्वारा समग्रः मानवसमूहः बुद्धिभावानां समाधानस्थितेः स्थापकत्वस्य प्रेरकस्थानं भवति धर्मः । जगति विद्यमानेषु श्रेष्ठाः मानवाः सन्ति । तेषु धर्मविषये अध्ययनद्वारा एकः अंशः सम्यक् ज्ञायते यत् सर्वेषाम् अपि धर्माणां सारः एकः एव इति । अतः चतुर्विधपुरुषार्थेषु धर्मस्य स्थानं प्रथमम् । तत् स्थानं केनापि न निराकर्तुं शक्यते । दया, करुणा, अनुकम्पः, सेवा, त्यागः, सत्यं, अहिंसा आस्तेयान् न कोपि धर्मः निराकरोति । 'एकं सद् विप्राः बहुधा वदन्ति' इति वचनं दर्शनेषु दार्शनिकाः अपि प्रतिपादयन्तः । अयं विषयः सिद्धान्तशिरोमणौ धर्माचारस्थले एवं निरूपितम् –

**"अहिंसा सत्यमस्तेयं ब्रह्मचर्यं दया क्षमा ।**
**दानं पूजा जपो ध्यानमिति धर्मस्य संग्रहः ॥"**

धार्मिकाणां मूलं भारतदेशः । तस्मिन् देशे दार्शनिकानां प्रयत्नानुसारं विरचितम् आस्तिक–नास्तिकदर्शनम् च द्विविधं प्रसिद्धमस्ति । वेदप्रामाण्यम् अनङ्गीकरणात् चार्वाकादीनां नास्तिकदर्शनमिति, वेदादिप्रमाणानां अङ्गीकरणात् सांख्ययोग न्यायवैशेशिकपूर्वमीमांसा–उत्तरमीमांसा एतानि आस्तिकदर्शनानि इत्युच्यते । एतेषु षट्सुदर्शनेषु जीव–ब्रह्म–मोक्ष–मोक्षोपायादीनां विषये परामर्शः कृतः वर्तते । उत्तरमीमांसा दर्शनम् इतरदर्शनानामपेक्षया साहाय्यम्, ज्ञानं च अत्यवश्यक–मस्ति ।

एतादृश उत्तरमीमांसादर्शनेषु द्वैतदर्शनम्, अद्वैअदर्शनम्, विशिष्टाद्वैतदर्शनम्, शक्तिविशिष्टाद्वैतदर्शनम् इति चत्वारि दर्शनानि प्रसिद्धानि । द्वैतदर्शनस्य प्रवर्तकः श्रीमन् मध्वाचार्यः, अद्वैतदर्शनस्य श्री शंकराचार्यः, विशिष्टाद्वैतदर्शनस्य श्री रामानुजाचार्यः, शक्तिविशिष्टाद्वैतदर्शनस्य श्री जगद्गुरु पञ्चाचार्यः । अत्र तत् सम्बद्धपर्यायांशानां परिशीलनद्वारा प्रस्थानत्रयमिति परिगणितानां उपनिषद्भगवद्गीताब्रह्मसूत्राणां भाष्यं प्रसिद्धम् । एवं वीरशैव, शक्तिविशिष्टाद्वैतदर्शनं प्रति श्रीनीलकण्ठशिवाचार्यः आदौ ब्रह्मसूत्राणामुपरि श्रीनीलकण्ठभाष्यं रचितवान् ।

**शक्तिविशिष्टाद्वैतसिद्धान्तस्वरूपम्–**

निगमागमप्रसिद्धोऽयं वीरशैवसिद्धान्तः सनातनः शिवागमप्रसिद्धश्च । उक्तं च रेणुक भगवत्पादाचार्यैः –

**सिद्धान्ताख्ये महातन्त्रे कामिकाद्ये शिवोदिते ।**
**निर्दिष्टमुत्तरे भागे वीरशैवमतं परम् ॥** इति ।

शिवोक्ते सिद्धान्ताख्ये कामिक, योगज, चिन्त्यम् कारण, अजितम् दीप्त, सूक्ष्म, सहस्रसुप्रभेद, अंशुमान्, विजय, विश्वास, साय्वुभुव, अनल, वीर, रौरव, मुकुट, विमल, चन्द्रज्ञान, ललित, प्रोद्गित, सिद्धम् संतानम् सर्वोक्त, पारमेश्वर, किरण, वातुलागम मन्त्रतन्त्रे उत्तरभागं परं सर्वोत्कृष्टं वीरशैवमतं निर्दिष्टम्, उपदिष्टम् । अनेन पूर्वभागे शैवं उपदिष्टम् इति सूचितम् । श्रीपण्डिताराध्या अपि स्वकीयभाष्यग्रन्थे एवं निर्दिशन्ति–

**श्रुत्यैकदेशप्रामाण्यं द्वैताद्वैतमतादिषु ।**
**द्वैताद्वैतमते शुद्धे विशेषाद्वतसंज्ञके ।**
**वीरशैवकसिद्धान्ते सर्वश्रुतिसमन्वयः** ॥ इति ॥

वेदान्ते द्वैतमतम्, अद्वैतमतम्, शुद्धाद्वैतम्, केवलाद्वैतम् इत्येवमादीनि मतानि विलसन्ति । परन्तु तेषु मतेषु सर्वासामपि श्रुतीनां समन्वयः न भवति । केचित् भेदश्रुतीनां प्रामाण्यमङ्गीकृत्य अभेदश्रुतीनां गौणत्वमङ्गीकुर्वन्ति । अन्ये तु अभेदश्रुतीनां एव प्रामाण्यमङ्गीकृत्य भेदश्रुतीनां गौणत्वमुपपादयन्ति । तेषु सर्वेषु मतेषु श्रुत्यैकदेशस्यैव प्रामाण्यं अङ्गीकृतं भवति । इदं च शोभास्पदम् । परन्तु शक्तिविशिष्टाद्वैतसिद्धान्ते एव सर्वश्रुतिसमन्वयः भवति इति निश्चप्रचम् ।

वीरशैवशब्दनिर्वचनमपि सिद्धान्तशिखामणौ एवं निर्दिष्टम् –

**विशन्देनोच्यते विद्या शिवजीवैक्यबोधिका ।**

**तस्यां रमन्ते ये शैवाः वीरशैवाः प्रकीर्तिताः** ॥ इति ॥

एवमाचार्यपादैरपि स्वीये श्रीकरभाष्ये "भेदाभेदात्मकं" अथवा "द्वैताद्वैतात्मकं" इति यद्यपि निर्दिष्टं तथापि भाष्यमिदं "विशिष्टा–द्वैत" परमिति वदन्ति । तत्स्वरूपमपि तत्रैवोक्तम् ।

अ) **विशेषाद्वैतदर्शनम् – विशब्देनोच्यते शम्भुर्हंसेति मन्त्रतः ।**

**शेषशब्देन शरीरे "यथाग्ने" रिति मन्त्रतः ॥**

अद्वैतेन भवेद्योगो यथा नद्य इति श्रुतेः । विशेषाद्वैतपदनिर्वचनं च निरूपितम् यथा –"विश्च शेषश्च विशेषौ तयोरद्वैतं विशेषाद्वैतं" इतिनिरुक्तिः । अद्वैतपदेन भ्रमरकीटवज्जीवस्य स्वाभाविकभेदनिवृत्तिः प्रतिपाद्यते । **"हंसहंसेति यो ब्रूयात्" हंसो नाम सदाशिवः । यावत्पश्येत्खगाकारं तदाकारं विचिन्तयेत् ॥"विश्बदश्चक्षुषि व्योम्नि वाते परमात्मनि पक्षिणि"** इति नैघण्टुकेषु विशब्दस्य परमात्मवाचकत्वेन स्पष्टोपदेशात् । वात्युत्पादयतीति व्युत्पत्या च विशब्देन जगत्कारणत्वं ब्रह्मलक्षणं सूचितम् । **"यथाग्नेः विस्फुलिङ्गार्ज्वलतस्सर्वा दिशो विस्फुलिङ्गाः प्रतिष्ठेरन् एवमेवैतस्मादात्मनस्सर्वे प्राणाः यन्नायतनं संप्रतिष्ठन्ते प्राणेभ्यो देव देवेभ्यो लोकाः"** इति श्रुतिषु परमशिवांशत्वेन जीवानां व्यपदेशात् । शेषशब्देन जीवोऽभिधीयते । अद्वैतपदेन **'यथा नद्यः' स्यन्दमाना समुद्रेस्तं गच्छन्ति नामरुपे विहाय । तथा विद्वान् नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्"** इत्यादि श्रुतिसिद्धसायुज्यं जीवब्रह्मणोरुपदिष्टम् ।

आ) **शक्तिविशिष्टाद्वैतम् –** शक्तिश्च शक्तिश्च शक्ती ताभ्यां जीवेशौ; तयोरद्वैतम् । सा च शक्तिर्द्विविधा स्थूलचिदात्मिका शक्तिः – सूक्ष्मचिदात्मिका शक्तिश्चेति । शक्तिश्च शक्तिश्च शक्ती इत्यत्र प्रथमशक्तिपदस्य स्थूलचिदचिदात्मकशक्तिरिति द्वितीयस्य शक्तिपदस्य सूक्ष्मचिदात्मकशक्तिरिति चार्यः । जीवः स्थूलचिदचिदात्मकशक्तिविशिष्टः । अत्र स्थूलचित् – किञ्चिज्ज्ञत्वरूपा, स्थूला अचित् किञ्चित्कर्तृरूपा । शिवस्तु सूक्ष्मचिच्छक्तिविशिष्टः । सूक्ष्मा चित् सर्वज्ञत्वरूपा, सूक्ष्मा अचित् सर्वकर्तृरूपा । अर्थाज्जीवः किञ्चिज्ज्ञत्व – किञ्चित्कर्तृत्व – रूपशक्तिविशिष्टः शिवः सर्वज्ञत्वसर्वकर्तृकत्वरूपशक्तिविशिष्टः इति सिद्ध्यति । एवम्भूतयोः जीवेशयोः स्थूल–सूक्ष्म–चिदचिच्छक्तिविशिष्टरूपयोः यत् अद्वैतं अर्थात् सामरस्यं **"जले जलमिव न्यस्तं""वह्नौ वह्निरिवार्पितः । परब्रह्मणि लीनात्मविभागेन दृश्यते"** । इति (न्यायानुसारं)यत् तत् शक्तिविशिष्टाद्वैतम् ।

**शक्तिविशिष्टाद्वैतपदं** भाष्यकारेण **"शक्तिविशेषविशिष्टशिवाद्वैतमिति"**, क्रियासारकारेण नीलकण्ठशिवाचार्येण **"तस्माच्छक्तिविशिष्टास्य जिज्ञासा ब्रह्मणः स्फुटम्"** इति, वीरशैवानन्दचन्द्रिकारेण मरितोण्टदार्यशिवयोगिना **"वीरशैवसिद्धान्तस्य लिङ्गाङ्गसामरस्यात्मकपरिणाम्युपादानरूपशक्तिविशिष्टशिवाद्वैतस्य सकलद्वैतविलक्षणत्वेन साधनीयतया"** इति च प्रयुक्तम् ।

किञ्च श्रीकरभाष्ये –**"एतद्वैताद्वैतमेव किचिद्विशेषाद्वैतमिति, सेश्वराद्वैतमिति, सर्वश्रुतिसारमिति पर्यायत्वेन प्रवदन्ति"** इति अस्य सिद्धान्तस्य पर्यायनामान्युल्लिखितानि ।

इ) **विशिष्टाद्वैतम् –**विशिष्टं विशिष्टं च विशिष्टे, विशिष्टे लिङ्गाङ्गे, तयोरद्वैतं विशिष्टाद्वैतम् । अत्र प्रथमस्य विशिष्टपदस्य चिच्छक्तिविशिष्टः परशिवः रुद्रादि संज्ञकं "लिङ्गमित्यर्थः । द्वितीयस्य विशिष्टपदस्य अचित्तशक्तिविशिष्टशिआंशरूपोऽङ्ग शब्द–वाच्यो जीव इत्यर्थः । एवंरूपयोह् लिङ्गाङ्गयोः यदद्वैतं (सामरस्यं) तद्विशिष्टाद्वैतम् ।

ई) **शिवाद्वैतम् –** शिवश्च शिवश्च शिवौ तयोरद्वैतम् शिवाद्वैतम् । अत्रापि प्रथमस्य शिवपदस्य सूक्ष्मचिदचिच्छक्तिविशिष्टं शिवाभिधं "लिङ्ग"मित्यर्थः । अपरस्य शिवपदस्य स्थूलचिदचिच्छक्तिविशिष्टं अनाद्यविद्ययाऽभिभूतशिवांशरूपः, शिवदीक्षया–पह्रियमाणमलो जीवः "अङ्ग" मित्यर्थः । एवम्भूतयोर्लिङ्गाङ्गयोर्यदद्वैतं तत् शिवाद्वैतम् । पदमिदं इदं "शिवसिद्धान्तमिति" मदद्वैतपरं शास्त्रं" शिवाद्वैतपरिज्ञानं""शिवद्वैतपरानन्दं" इत्यादिना सिद्धान्तशिखामणि पर्यायपदानि बहुधा प्रयुक्तानि ।

उ) **शिवयोगः –** सूक्ष्मचिदचिच्छक्तिविशिष्टे शिवे शिवदीक्षया नष्टमलस्य शुद्धात्मनो जीवस्य यो योगः सामरस्यं सः शिवयोगः इत्यर्थः । श्रीमन्नीलकण्ठशिवाचार्यः सिद्धान्तमिदं विशिष्टाद्वैतं शक्तिविशिष्टाद्वैतं वा वक्तव्यमिति वदन्ति ।

यद्यपि श्रीकण्ठ–रामानुजावपि स्वस्वमतं विशिष्टाद्वैतमिति वदतः । तदुक्तं वैशिष्ट्यं च यथाक्रमं अन्तर्गणिकमेदरूपम् अपृथक्सिद्धत्वरूपं वा क्रियासाराभिप्रेतं न भवितुमर्हति । यतः तादृशं वैशिष्ट्यं श्रीपति पण्डितेन सम्यग् निराकृतम् । उक्तञ्च –"एवं विशिष्टाद्वैतस्याऽसङ्गत्वात् विशेषाद्वैतमेव मुमुक्षुभिरादरणीयम्" इति । अन्यत्र च–"अत्र केचित् अस्मिन्नानन्दमये ब्रह्मणि जीवस्य अस्य तद्योगं शेषत्वसम्बन्धं शास्ति शास्त्रं प्रतिपादयतीति विशिष्टाद्वैतमेव जल्पन्ति; तदवैदिकत्वान्न मुमुक्षुभिरग्राह्यम् वैदिकमीमांसाकर्तृभिर्भट्टभास्करादिपूर्वाचार्यैः स्वसिद्धान्तस्थापनावसरे पूर्वपक्षस्यान्त्ययोग्यत्वेनोपेक्षितत्वात् । विशिष्टाद्वैत–मित्युक्तिविरोधात्; विशिष्टस्य दुर्निरूपत्वेन मिथ्यात्वाच्च । विशिष्टं नाम विशेषणविशेष्यसम्बन्ध एव वा ? तदतिरिक्तं ? नाद्यः, त्रयाणामनेकत्वेन अद्वयत्वासम्भवात् । **"एते दण्डिपुरुषसम्बन्धाः"** इति समूहालम्बनस्य दण्डीति विशिष्टप्रत्ययत्वा–नतिरिक्तविषयत्वात् । न द्वितीयः– विशेष्यरूप– परमात्मनोऽप्यत्वेन विशिष्टाभिमतपरमात्मनो विशिष्टाद्वैतसिद्धिः ?

केवलपुरुषास्यान्यत्वाङ्गीकारात् । अन्यथा केवलपुरुषे दण्डीति प्रत्ययस्य वा दण्डिनि पुरुषे केवलपुरुष इति प्रत्ययस्य वा प्रसङ्गात् । त्रितयातिरिक्तस्य विशिष्टस्य एतद्दण्डविशिष्टत्वं वा ? एतदतिरिक्तदण्डविशिष्टत्वं वा ?

नाद्यः – त्रितयातिरिक्तत्वासिद्धेः । विशेषणस्यापि विशिष्टशरीरत्वात् । न द्वितीयः – अनुपपत्तेः अनवस्थापनाच्च ।इति शाक्तिविशिष्टाद्वैतस्वरूपं मायानिरूपितम् । अग्रे अयं सिद्धान्तस्य महत्वं एवं निरूपितम् । **शक्तिविशिष्टाद्वैतसिद्धान्ते वीरशैवाणां महत्वविषयनिरूपणम्**–अथ वेदशिरस्यापि वीरशैवशब्दं दर्शयति– **"शिवरूपायां ब्रह्मरूपायां ब्रह्मस्वरूपायां विद्यायां", "वेदान्तवाक्यजा विद्या"** इति सूतगीतोक्तेः वेदान्तवेद्यायां विशेषात् रमणं रतिः अस्ति, तस्मात् एते तत्र रतिमन्तः महाभागाः परमश्रेष्ठाः वीरशैवाः इति स्मृताः इत्यर्थः ।

**वीरशैवशब्दनिर्वचनम्–** **वी शब्देनोच्यते विद्या शिवजीवैक्यबोधिका ।**
**तस्यां रमन्ते ये शैवाः वीरशैवास्तु ते मताः ॥**

अथ वेदागममस्तकयोरपि विरशैवशब्दनिर्वचनं दर्शयति–शिवजीवैक्यबोधिका लिङ्गरूपशिवजीवैक्यप्रकाशिका विद्या वी शब्देनोच्यते पण्डितैः कथ्यते इत्यर्थः । **"वी गतिप्रजनव्याप्तिकान्त्यसनखादनेषु"** इति धातोः । तस्यां विद्यायां ये शैवाः शिवभक्ताः रमन्ते, ते तु विरशैवाः इति मताः संमताः इत्यर्थः ।

**अथ वीरमाहेश्वरशब्दनिर्वचनं करोति–**

**विद्यायां रमते यस्मात् मायां हेयां श्ववद्रहेत् ।**
**अनेनैव निरुक्तेन वीरमाहेश्वरः स्मृतः ॥**

यस्मात् लिङ्गाङ्गसम्बन्धकारणार्थं शिवजीवैक्यप्रकाशिकायां विद्यायां रमन्ते, मायां जगद्रूपां हेयां त्यजनीयां श्ववत् शुनकवत् रहेत् निवारयेत्, अनेनैव निरुक्तेन एकद्वित्यादिपदगताद्यक्षरप्रवचनेनैव वीरमाहेश्वरः इति अन्वर्थनाम्ना स्मृतः इत्यर्थः ।

**वीरशब्दस्य वेदान्तसिद्धान्ते–**

**वेदान्तजन्यं यद् ज्ञानं विद्येति परिकीर्त्यते ।**
**विद्यायां रमते तस्यां वीर इत्यभिधीयते ॥**

एवं वेदान्तसिद्धान्तसिद्धवीरशैवसिद्धशैवशब्दमाहेश्वरशब्दाश्च विविच्य, अनन्तरं वेदागमशिद्धरस्सिवीरशैव–वीरमाहेश्वरस्वरूपं विशदयति ।

**शैवमाहेश्वरयोः आत्यन्तिकभेदभावः–**

**शैवमाहेश्वरैश्चैव कार्यमन्तर्बहिः क्रमात् ।**
**शिवोमाहेश्वरश्चेति नात्यन्तमिह भिद्यते ॥**

वीरशब्दः वेदान्तप्रसिद्धः इति विषयः–**"वेदान्तवाक्यजा विद्या"** इति सूतगीतोक्तेः वेदान्तवाक्यप्रकाश्यं यत् ज्ञानंविद्या तस्यां यो रमते सः वीरः इत्यर्थः । एवं वेदान्तप्रसिद्धवीरशब्दपूर्वकत्वेन सिद्धदान्तप्रसिशिवतत्त्वज्ञाननिष्ठान् शैवान्, माहेश्वरतत्त्वकर्मनिष्ठान् माहेश्वरांश्च सार्धसूत्रेण स्फुटयति – शैवैः वीरशब्दपूर्वकशैवैः वीरशैवैरित्यर्थः । माहेश्वरैः वीरमाहे–श्वरैश्च अन्तर्बहिः क्रमात्, शिवलिङ्गार्चनमिति शेषः कार्यं कर्तुं योग्यम् । एवंस्थिते शिवः निष्कलः शिवः महेश्वरः सकलः सदाशिवश्चेति स्थितौ, इह–**"शिवश्शूली महेश्वरः"**– इत्यभिधानगुणपाठे । यथा अत्यन्तं न भिद्यते, तयोः आत्यन्तिकोभेदः नास्ति ।

**यथा तथा न भिद्यन्ते शैवाः माहेश्वराः अपि ।**
**शिवाश्रितेषु ते शैवाः ज्ञानयज्ञरताः नराः ॥**

अथ शैवमाहेश्वरयोः अन्तर्बाह्यरूपलिङ्गार्चनं यदुक्तं तत् कीदृशमित्याह–तथा शैवाः शिवसम्बन्धिनः वीरशैवाः, अपि महेश्वरसम्बन्धिनः वीरमाहेश्वराश्च न भिद्यन्ते भिन्नाः न भवन्ति । अत्र सदाशिवस्य सोपाधिकत्वेऽपि, तदुपाधेः वक्ष्यमाणरीत्या सत्त्वगुणप्रधानत्वेन नापरत्वात् तयोः आत्यन्तिकभेदो नास्तीति भावः । शिवाश्रितेषु ये नराः पुरुषाः ज्ञानयज्ञरताः हृत्कमलस्थचिल्लिङ्गपूजायां प्रीतियुक्ताः ते शैवाः वीरशैवाः इत्यर्थः ।

**माहेश्वराः समाख्याताः कर्मयज्ञरताः भुवि ।**
**तस्मादभ्यन्तरे कुर्युः शैवाः माहेश्वराः बहिः ॥**

कर्मयज्ञरताः करकमलस्थक्रियालिङ्गपूजायां प्रीतियुक्ताः माहेश्वराः वीरमाहेश्वराः इति भुवि समाख्याताः प्रख्याताः इत्यर्थः । माहेश्वराः वीरमाहेश्वराः बहिःकर्मकाण्डस्थभक्तमाहेश्वरप्रसादि स्थलोक्तधर्माचरणं कुर्युरित्यनुषङ्गः ।

**वीरशैवास्तु षड्भेदाः स्थलधर्मविभेदतः ।**
**भक्तादिव्यवहारेण प्रोच्यन्ते शास्त्रपारगैः ॥**
**"ज्ञानं प्रधानं नतु कर्महीनं कर्मप्रधानं न तु चिद्विहीनम् ।**

**तस्मात् द्वयोरेव भवेत् प्रसिद्धिःनह्येकपक्षो विहगः प्रयाति ॥**
**'न क्रियारहितं ज्ञानं न ज्ञानरहिता क्रिया ।**
**अपश्यन्नन्दको दग्धः पस्यन् पङ्गुश्च दह्यते' ॥**

इत्यादिवचनात् शैवमाहेश्वरयोः ज्ञानं क्रिया च समानैवेत्यनुमीयते ।किन्तु बाह्यान्तरपूजाप्रीतिमात्रं विशिष्यते इति । अथ **'वीरमाहेश्वराः'** इति प्रसिद्धवीरशैवास्तु भक्तादिशिवैक्यान्तव्यवहारेण स्थलधर्मविभेदतः पिण्डादिवृत्तिज्ञानशून्यान्तस्थलाचारभेदतः षड्भेदः षड्विधभेदवन्तः इति शास्त्रपारगैः प्रोच्यन्ते इत्यर्थः ।
अथ तच्छास्त्रभेदं दर्शयति–

**[तत्प्रमाणभूतशास्त्रस्यापि षड्विधत्वम् ]**

**शास्त्रं तु वीरशैवानां षड्विधं स्थलभेदतः ।**
**धर्मभेदसमायोगात् अधिकारिविभेदतः ॥**

**[षण्णां स्थलानां क्रमशः नामानि]**

**आदौ भक्तस्थलं प्रोक्तं ततो माहेश्वरस्थलम् ।**
**प्रसादिस्थलमन्यत्तु प्राणलिङ्गस्थलं ततः ॥**
**शरणस्थलमाख्यातंषष्ठमैक्यस्थलं मतम् ॥**

वीरशैवानां शास्त्रं तु विशेषद्योतकस्थलभेदतः स्थलभेदात् धर्मभेदसमायोगात् स्थलोक्तसदाचारभेदसम्बन्धात् अधिकारिविभेदतः स्थलनिष्ठभक्ताद्यधिकारिभेदतश्च षड्विधं षट्प्रकारवत् इत्यर्थः ।

**प्रकृतशास्त्रस्य अनुबन्धचतुष्टयनिरूपणम्–**

अस्य शास्त्रस्य वीरशैवधर्मनिष्ठस्सन्मुमुक्षुः भक्तः अधिकारि । शिवभक्तिलभ्यशिवैक्यरूपपरमुक्तिः प्रयोजनम् । एकोत्तरशतस्थलं विषयः अस्य ज्ञानस्य शास्त्रेण प्रकाश्यप्रकाशकभाव एव सम्बन्धः । एवं अनुबन्धचतुष्टयवत् एतच्छास्त्रम् स्पष्टम् ।

**उपसंहारः–**

वीरशैवसिद्धान्ते परशिवब्रह्म एव ''स्थल'' शब्देन कथयति ।

**स्थीयते लीयते यत्र जगदेतच्चराचरम् ।**
**तद्ब्रह्मस्थलमित्युक्तं स्थलतत्वविशारदैः ॥**

इति प्रमाणानुसारेन चराचरात्मकं जगदिदं यत्र तदर्थं यस्मिन् उत्पत्तिलयं प्राप्नोति, तद् ब्रह्म 'स्थल' इति कथयति । तादृशस्थलरूप परशिव ब्रह्म एव, स्वलीलया अङ्गं लिङ्गं इति द्विप्रकारः भवति । चित्तशक्तिविशिष्टः जीवः एव 'अङ्गं', तथा चिच्छक्तिविशिष्टपरशिव एव 'लिङ्गं' इति ज्ञायते । लिङ्गाङ्गपदवाच्यरूप शिवजीवयोः ऐक्यमेव ''लिङ्गाङ्गसामरस्यम्'' इति कथ्यते । स्थलं भक्त–माहेर–प्रसादी–प्राणलिङ्गी–शरण–ऐक्य इति भेदेन षट्प्रकारः भवति । स्थलशब्द भक्तादि षट्स्थलेषु प्रतिपादितविषयनिरूपणपूर्वक शक्तिविशिष्टाद्वैतसिद्धान्ते निरूपितलिङ्गाङ्गसामरस्यरूप मोक्षस्वरूपं उपसंहाररूपेण मया एवं प्रतिपादितम् ।

**शिवे भक्तिस्समुत्पन्ना यस्यासौ भक्त उच्यते ।**
**तस्यानुष्ठेय धर्माणामुक्तिर्भक्तिस्थलं मतं ॥**
**केवलं सहजे दाने निष्णातः शिवतत्परः ।**
**ब्रह्मादिस्थानविमुखो भक्तो माहेश्वरः स्मृतः ॥**
**मनः प्रसादसिद्ध्यर्थं निर्मलज्ञानकारणम् ।**
**शिवप्रसादं स्वीकुर्वन् प्रसादीत्येष कथ्यते ॥**
**लिङ्गं चिदात्मकं ब्रह्मतच्छक्तिः प्राणरूपिणे ।**
**तद्रूपलिङ्गविज्ञानीप्राणलिङीति कथ्यते ॥**
**सतीव रमणीयस्तु शिवेशक्तिं विभावयन् ।**
**तदन्यविमुखः सोऽयं ज्ञातः शरणनामवान् ॥**
**प्राणलिङ्गादियोगेन सुखातिशयमेयीवान् ।**
**शरणाख्यः शिवेनैक्य भावनादैक्यवान् भवेत् ॥**

स्थलानुगुणां पूजाविशेषम् आश्रित्येव प्रवर्तते । शिवयोगी प्रथमं भक्तस्थलम् आश्रित्या सुखासने उपविष्टः सन् भवत्या इति

प्रथमं कथ्यते । अनन्तरं माहेश्वरस्थलम् आश्रित्या आत्मनिष्ठया ओं नमः शिवाय इतिः पञ्चाक्षरमहामन्त्रस्य अनुष्ठानं कर्तव्यम् । अर्थात् जपः कर्तव्यः । अनन्तरं प्रसादिस्थलम् आश्रित्या स्वानुभूत्यानुस्वारं पूजां यावद्भक्तिपूजां कुर्यात् । अनन्तरं प्राणलिङ्गि लिङ्गं चिदात्मकं ब्रह्म तच्छक्तिः प्राणरूपिणे इति मत्वा तद्रूपलिङ्ग विज्ञानीप्राणलिङ्गीति कथ्यते ।

अनन्तरं शरणस्थलम् आश्रित्य उपलब्धान् पदार्थान् शिवलिङ्गस्य समर्पयेत् । अन्ते च ऐक्यस्थलम् आश्रित्या भक्त्या शिवार्पितं शिवप्रसादं स्वीकृत्या आत्मतृप्तिम् आनन्दानुभवं अनुभूयमानः स्यात् । एतादृश षटस्थल आरोहण मार्गेण शिवभक्तः गुरुणादत्त इष्टलिङ्ग यावज्जीवं प्रपूजयेत्, तस्य पूजाफलेन प्राप्यमानशिवज्ञानेन शिवभक्तः नष्टमलःसन् भवबन्धनेन विमुक्तः भवेत्तथा भक्तः जनन मरण रहित लिङ्गाङ्गसामर्स्यरूप मोक्षं प्राप्नोति ।एतदेव शक्तिविशिष्टाद्वैतसिद्धान्तस्य अन्तिम् फलम् ।

अग्रे उक्त श्लोकद्वयौ द्वारा लेखनं परिसमापनं भवति ।

**जले जलमिव न्यस्तं वह्नौ वह्निरिवार्पितः ।**
**परब्रह्मणी लीनात्मा विभागेन न दृश्यते ॥**

**यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय ।**
**तथा विद्वान् नामरूपाद् विमुक्तःपरात् परं पुरुषमुपैति दिव्यम् ॥**

**परामर्शनग्रन्थाः**

१. ब्रह्मसूत्रशाङ्करीवृत्तिः–उमचिगि शङ्करशास्त्रिविरचिता – शैवभारतीशोधप्रतिष्ठानम्, जङ्गमवाडीमठ, वाराणसी ।
२. अनुभवसूत्रम् – श्रीमायिदेवविरचितं विमर्शात्मकपरिष्करणम् – वि । डा । हेच्. पि. मल्लदेवरु, प्राच्यविद्यासंशोधनालयः, मैसूरु.
३. बृहदारण्यकोपनिषत् – स्वामि आदिदेवानन्दः –रामकृष्णमठः, मैसूरु.
४. लिङ्गधारणचन्द्रिका – आंग्लटिप्पण्या संकलिता – एम्. आर्.साखरे, बेळगाम्.
५. क्रियासारः – श्रीनीलकण्ठशिवाचार्य विरचित भागत्रयोपेतः, प्राच्यविद्यासंशोधनालयः,मैसूरु.
६. महानारायणोपनिषत् – श्रीवृषभदेवकृतव्याख्यासमलङ्कृता, काशी ।
७. मुण्डकोपनिषत्– वीरशैवभाष्यम् – उमचिगि शङ्करशास्त्रिविरचितम् संस्कृतमूलसहितम्, प्राच्यविद्यासंशोधनालयः, मैसूरु.
८. श्रीकरभाष्यम् – सम्पुट १ –२ – श्रीपति पण्डिताचार्य विरचितम् –प्राच्यविद्यासंशोधनालयः, मैसूरु.
९. वीरशैवानन्दचन्द्रिका – श्रीमरितोण्टाधार्यशिवयोगि विरचित, हुब्बळ्ळि.
१०. सिद्धान्तशिखामणिः – श्री शिवयोगि शिवाचार्यः – प्राच्यविद्यासंशोधनालयः, मैसूरु.
११. सिद्धान्तशिखोपनिषत् – उमचिगि शङ्करशास्त्रिविरचितम् –श्री वृषभदेवपण्डितः काशी ।
१२. शक्तिविशिष्टाद्वैतदर्शनम् –डा. टि.जि. सिद्धप्पाराध्य विरचितम् मैसूरु विश्वविद्यालयः, मैसूरु– १९६१.
१३. सिद्धान्त शिखामणि विचार दीप्ति– सम्पादकः डा. एम्. शिवकुमारस्वामी, वीरशैवानुसन्धान संस्थान विजयनगर रने डन्त बेङ्गळूरु.
१४. शिवाद्वैतमञ्जरी – स्वप्रभानन्दशिवाचार्यविरचितः पञ्चाचार्य एलेट्रिकल् प्रेस् मैसूरु. १९४०.
१५. शिवानुभवसूत्रम्– सं. पंडित. वै. नगेशशास्त्री, मुरुघामठ, धारवाड – १९८६

*****************

Volume XXI : January to June – 2023, ISSN 2250-1711
Journal of Veda Samskrita Academy [Recognised in the UGC-CARE List]

# संस्कृतसाहित्ये प्रतिपादितब्राह्मणानां विषयनिरुपणम्

**वि. श्रीनाथः के.**
शोधछात्रः, कर्नाटक संस्कृत विश्वविद्यालयः,
चामराज पेटे–560018, बेङ्गलूरु, कर्नाटक
Contact No. : 9538055882, E-mail : sreenath.cks@gmail.com

**पीठिका**

"विद ज्ञाने" इति ज्ञानार्थकात् विद्वातोः घञि प्रत्यये कृते वेद इति रूपं निष्पद्यते । मुख्यतया वेदशब्दो ज्ञानार्थकः । ज्ञानराशिर्वेद इति वक्तुं शक्यते । विद सत्तायाम्, विद विचारणे, विदलृ लाभे, विद् चेतनाख्याननिवासेषु इत धातुभ्योपि घञि वेदरूपं निष्पद्यते । वेदा ज्ञानराशित्वात् शाश्वतस्थायिनः, ज्ञाननिधयः, मानवानां तथा समस्तजीवसङ्कुलानां हितप्रापकाः, मनुष्यकर्तव्यबोधका इति विविधधात्वर्थग्रहणादवगम्यते ।

वेदार्थानुशीलनात् ज्ञयते यत् श्रुतयः हि विविधा ज्ञानविज्ञानराशयः, सनातनसंस्कृतेः आधारस्तम्भीः, कर्तव्या–कर्तव्यबोधकाः शुभाशुभनिदर्शकाः, जीवनस्योन्नायकाः, जगद्हितसंपादकाः, आचारविचारव्यवहारसंचारकाः, सुखशान्ति–साधकाः, ज्ञानलोकप्रसारकाः, मातृवत्हितचिन्तकाः, पितृवत्समस्तसमाजपरिपोषका, सत्यतायाः सरणयः कलाकलापप्रेरकाः चतुर्वर्गावाप्तिसोपानस्वरूपाश्च सन्ति इति । एतादृश वेदवाङ्मयस्य विषये समग्रे प्रपञ्चे महानादरः दृश्यते । तत्र ऋङ्वाङ्मयमधिकृत्य ऐतरेयब्राह्मणोक्ताख्यानेषु मानवजीवनोन्नतिविषये गवेषणोद्यमेयन्मप्रवृत्तिःसाजनि । अत्र तु मुख्यतया अपूर्व उपदेशो दृश्यते ।

**ब्राह्मणानि**

संस्कृतवाङ्मये 'ब्राह्मण'शब्दस्य अनेकार्थाः भवन्ति । शब्दोयम् यदा ग्रन्थवाची भवति तदा नपुंसके ब्राह्मणम् इत भवति । मेदिनीकोशोक्तिः एवम् वर्तते । "ब्राह्मणम् ब्रह्म संघाए वेदभागे नपुंसकम्" (मे, कोशः, णान्तवर्गः ६७) इति । 'मन्त्राणां विवरणात्मको विनियोगः यत्र भवति तत्' वेदेषु ब्राह्मणमिति कथ्यते । पाणिनिरपि कथयति एवम्"इति ह ब्राह्मणम्", "तस्योक्तं ब्राह्मणम्" इत्यादि प्रयोगो बहुत्र तदीयग्रन्थेषु समालक्ष्यते । निरुक्ते (३–११) अपि एवं दृश्यते । एवमेव शतपथब्राह्मणे तैत्तिरीयसंहितायां च उपलभ्यते ।

यतो हि मुख्यतया वेदमन्त्राणां अर्थविवरणेषु ब्राह्मणग्रन्थानां प्रवृत्तिः विशेषतया दृश्यते, तथापि 'यज्ञयागादीनां वैज्ञानिकक्रमसंप्रदर्शने आध्यात्मिकाधिभौतिकमीमांसाविधानेषु च व्याख्यानपुरस्सरं विनियोगकथनम् दृश्यते' इतिदुर्गभाष्यावलोकनेन समालक्ष्यते तत्र तत्र । अनेन एवमभ्युपगम्यते यज्ञप्रक्रिया अपि राष्ट्रसंवर्धिविज्ञानम् इति । यज्ञेन नभोमण्डलस्य शुद्धिर्भवति । तेन वृष्टिः वसुधायाम् प्रभूततया भवतीति । देवतागणानां तृप्तिः, वनौषधधान्यसस्यादिसंमृद्धिः जायते । तेन पशुपक्षिक्रिमिकीटादीनां संकुलानां संवृद्धिर्जायते । सर्वत्र समष्टिरनुष्ठानम् अनेन संभाव्यते इति । वातावरणस्य शुद्धता परिकल्पनापूर्वमेव पूर्वाचार्याणां समासीदिति अनेन यज्ञानुष्ठानविधानोपदेशेनावगम्यते । इमानि ब्राह्मणानि गद्यरूपात्मकनि भवन्ति । येषु ब्राह्मणेषु प्राचीननवीनाख्यानानि उपवर्णितानि सन्ति तानि अनुव्याख्यानानि तदानीन्तनचरित्रकथनानि च प्रकाशयन्ति तदानीन्तनलोकव्यवहारं सम्यग् उपवर्णयन्ति इति अवगम्यते । मीमांसादर्शने अयं अर्थवादः इतिनिगद्यते । ब्राह्मणभागेषु तत्र तत्र गाथाप्रगाथावंशगोत्रणां च विवरणं समुपलभ्यते । एवमेव देवतास्तुतिः ऐहिकामुष्मिकप्रार्थनाप्रकारः निन्दाप्रशंसाप्रदकथनं रोगनिवारणशत्रुमारणसंग्रामनिर्वहणविजयसंपादनपरसूक्तानामुल्लेखो दृश्यते । ब्राह्मणेषु कुत्रचत् सोमयागादौ विधीयमानमन्त्रसूक्तानां समुल्लेखोपि समालक्ष्यते । विशेषतया ब्राह्मणग्रन्थेषु यज्ञविधानं यागकालसूचनायागस्य फलनिर्देशः अधिकारी अनुष्ठानप्रकारः मन्त्राणां विनियोगक्रमः याज्ञिकद्रव्यनिर्देशः विधिः विवेचनं च उपवर्ण्यते । तदर्थं मीमांसका कथयन्ति **'विधिविधायकं वाक्यं ब्राह्मणम्'** इति । अनेन इदम् सुविदितं भवति अलौकिकपदार्थबोधनार्थे एव ब्राह्मणानां प्रवृत्तिः इति । ब्राह्मणेषु विधिवाक्यानां व्याख्यानावसरे इमे विषयाः परिदृश्यन्ते । तत्रापि निरुक्तिः, स्तुतिः, आख्यानम्, हेतुवचनानि च समालक्ष्यन्ते । ब्राह्मणेषु एते विषयाः निर्दिष्टास्सन्तीति शाबरभाष्ये व्यलेखि । **"हेतुः निर्वचनंनिन्दाप्रशंसासंशयो विधि । परक्रियापुराकल्पोव्यवधारणकल्पना । उपमानं दशैते तु विधयो ब्राह्मणस्य तु"**इति (शा, भा, २–१–८) ।

प्रत्येकस्यापि विषयस्य विवरणं तत्र तत्र शाबरभाष्ये समुपस्थापितं च वर्तते । ब्राह्मणग्रन्थाः बहवः सन्ति । परम् अद्योपलभ्यमानानां ब्राह्मणानां संख्या अत्यन्तं न्यूना एव वर्तते । बहूनि ब्राह्मणानि गृह्यसूत्रेषु उदाहृतानि सन्ति । आश्वलायनगृह्यसूत्रे ऋषिराचार्ययोः वैलक्ष्यण्यं प्रदर्शितम् । मन्त्रदृष्टारः ऋषयः ब्राह्मणदृष्टारः आचार्याः इति आश्वलायनस्याशयः ।

आचार्यतर्पणप्रसङ्गे आचार्याणां गणत्रयं प्रदर्शितम् । १) पथमो गणः माण्डुकेयः २) द्वितीयः शाङ्कायनः ३) तृतीयो गणः आश्वलायनः इति । आचार्याणां क्रमशः नामानि च तत्र दृश्यन्ते । तानि च नामानि कहोलकौशीथकमहाकौशीतकभरद्वाज पैङ्घमहापैङ्घसुयज्ञशाङ्कायनैतरेयबाष्कलशाकलगार्ग्यसुजातवक्रौदवाहिसौजामिशौनकाश्वलायन इति । परं तु इमानि नामानि अन्यत्र न दृश्यन्ते । सन्दर्भे अस्मिन् शाङ्कायन ऐतरेयप्रभृतयः ब्राह्मणदृष्टारः इत्यवगम्यते । सामान्यतः शाङ्कायनब्राह्मणमस्य कृते कौशीधकिब्राह्मणमिति लोकव्यवहारः सारस्वतप्रपञ्चे श्रूयते ।

**ब्राह्मणग्रन्थानाम् विनियोगः**

ब्राह्मणग्रन्थाः मन्त्राणां विनियोगविषये महदवधानं प्रयच्छन्ति । यस्य मन्त्रस्य विनियोगः यत्र भवति किमर्थं विनियोक्तव्यं तेन प्रयोजनं किम् इत्यादिविषयेषु विवरणं मार्गदर्शनं च समुपलभ्यते । इमानि ब्राह्मणानि मन्त्राणां रष्स्यं प्रकाशयन्ति । आध्यत्मिकमहत्वं च प्रदर्शयन्ति । यज्ञेषु मन्त्राणां प्रयोगविधिं निरूपयन्ति । 'आ नो मित्रावरुणा' इति ऋक्मन्त्रस्य गानेनरुग्णस्य रेगोपशमनं भवति इति अत्रत्यउल्लेखेनावगम्यते । तस्य अनुष्टानप्रकारः विधानं च बोधयति । दिवाधिष्ठातृदेवतामित्रः प्राणवायोः प्रतिनिधिश्च, रात्रावधिष्ठातृदेवतावरुणअपानवायोः प्रतिनिधिश्च वर्तते । एतौ मित्रावरुणौ दीर्घरोगयुक्तस्य रुग्णस्यशरीरे प्राणापानयोधारणबलात् स्वास्थ्यं प्रकल्पयतः इति अनेन वस्तुविषयविवरणेन ज्ञायते । अयं विषयः ताण्ड्यब्राह्मणे (६–९–६–९) दृश्यते । ब्राह्मणग्रन्थानां प्रधानो प्रतिपाद्यो विषयः विधिनिर्देशः । तत्र विधिः हेतुनिरुक्तिस्तुत्याख्यानविशधीकरणात्मकः इति अनेनावगम्यते ।

**हेतुः अथवा हेतुवचनम्**

कर्मकाण्डेषु विशेषविध्युपयुक्तकारणनिर्देशः एव हेतुः इति निगद्यते । ब्राह्मणेषु यागोक्तविधिनिर्देशः बहुत्र विस्तारेणोपलभ्यते । अग्निष्टोमे उद्गातासदसि औदुम्बरवृक्षस्य शाखां उच्छ्राययति । विषयममुम् ताण्ड्यब्राह्मणं विस्तरेण विचारयति एवम् प्रजापतिः कदाचित् देवताभ्यः ऊर्जा एच्चारणम् कृतवान् तदा औदुम्बराख्यो वृक्षः समुत्पन्नः इति । औदुम्बरवृक्षस्य अधिष्ठातृदेवता प्रजापतिः इति अनेनावगम्यते (ता, ब्रा ६–४–१) इति । बहिष्पवमाने स्तोत्रे पञ्चऋत्विजः प्रदक्षिणं कुर्वन्ति अयं विधिः । तदा प्रथमस्थाने य ऋत्विग् भवति अर्थात् अध्वर्युः वर्तते सस्वहस्ते दर्भस्तरं गृष्त्वा प्रदक्षिणं कुर्यादिति निर्देशः । विषये अस्मिन् विवरणं ताण्ड्यब्राह्मणे समालक्षयते एवम् । यज्ञः अश्वरूपं धृत्वा धावति तदा अध्वर्युः दर्भप्रस्तरं संप्रदर्श्य अश्वं बहिर्मुखमानयतीति अस्य गूढार्थः। तदर्थं दर्भप्रस्तरग्रहणं कर्तव्यत्वेन निर्बन्धितम् । (ताब्रा ६–७–१६–२०) । एवं हेतुवचनोल्लेखः यागानुष्ठानमहत्व श्रद्धा च दृढयति इति अनेन ज्ञायते । अन्येषु ब्राह्मणग्रन्थेष्वपि नानाहेतुवचनानि उपवर्णितानि सन्ति । कुत्रचित् विधिवाक्यतया तानि निर्दिशन्ति इत्यपि अवगम्यते ।

**अर्थवादाः**

यागेषु निषिद्धपदार्थानां निन्दा, विहितानां प्रशंसा च ब्राह्मणेषु तत्र तत्र दृश्यन्ते । उदाहरणार्थम् 'अमेध्यावैमाषाः' इति वचनं (तै, सं, ५–१–८–१) माषानिषिद्धायज्ञल्व्येषु इतविषयं सत्यापयति इदं वचनम् । ब्राह्मणेषु यागानुष्ठानस्य प्रशंसा तस्य महत्वं होमनीयद्रव्याणां देवतानां च परिचयं नानाप्रकारेण क्रियते इति तु विशेषांशः । अग्निष्टोमयागस्य बहुतरप्रशंसा ताण्ड्यब्राह्मणे दृश्यते (ता, ब्रा, ६–३) । विधिवचनानां पुष्टीकरणम् अर्थवादस्य महिमा वर्तते ।

**निरुक्तिः**

भाषासाहित्यदृष्ट्या ब्राह्मणाग्रन्थाः नानावस्तु विषयोषस्थापनद्वारा महत्वपूर्णस्थानमावहन्ति । तत्र तत्र ब्राह्मणेषु नानाशब्दानां व्युत्पत्तिविषये अर्थविवरणे धर्मोत्पत्तिः धर्मकर्मस्वरूपवर्णनम् तथा सन्दर्भे सोदाहरणद्वारा प्रदत्तम् इति ज्ञायते । भाषाविज्ञानदृष्ट्या इमानि निर्वचनानि अत्यन्तमुपादेयानीति ज्ञायते । संहितास्वपि कुत्रचत् शब्दनिर्वचनं समुपलभ्यते । "उदानिषुः महीरिति तस्मादुदकमुच्यते" (अ, वे, सं, ३–१३–१) । शतपथब्राह्मणं तथा ताण्ड्यमहाब्राह्मणम् एतादृशशास्त्र्यशब्दनिर्वचने कोशवदुपाकरोति । आज्यस्तोत्रस्य व्याख्यां "यदाजिमायन्तदा अज्यानाम् आज्यत्वम्" (ता, ब्रा, ७–२–१) इतिरथन्तरनिरुक्तिं च प्रदर्शयन्ति । तद्यथा ताण्ड्ये "रथंमर्या क्षेप्लातारीन् इततद्रथन्तरस्य रथन्तरत्वम्" इति (ता, ब्रा, ७–६–४) इति । ततः बृहत्सामं प्रस्तौति एवम् (ता, ब्रा, ७–६–५) "ततो बृहदनुमर्या इदं सज्योगन्तरभूदिति तद् बृहतो बृहत्वम्" इति । अनेन इदमव ज्ञायते यत् रथन्तरसामस्यानन्तरमेव बृहत्सामस्योत्पत्तिरिति । एतादृशानां शास्त्रीयवस्तुविषयाणां निर्वचनसौलभ्ययुक्तभण्डागारवदवभासन्ते ब्राह्मणग्रन्था इति अभ्युपगम्यते ।

**आख्यानानि**

विध्यर्थवर्णनावसरे तत्र तत्र समुपलभ्यमानानि आख्यायिकानि नवरसयुक्तकाव्यानि वा इमानि इति कदाचित् शङ्कामपि जनयन्ति । यज्ञवधानस्य सविस्तरवर्णनालस्यमपि आख्यायिकानि परिहरन्ति । साहित्यशास्त्रोत्पत्तिरत्रैव अभूद्वा इति कदाचित् अनुमानमपि उपस्थापयन्ति । आख्यानेषु नानाप्रकाराः दृश्यन्ते । कुत्रचत् आख्यानेषु वस्तुविषयस्थौल्यम् कुत्रचत् हृस्वतरविषयप्रतिपादनं ब्राह्मणग्रन्थानां विशेषः । देवतापरित्यागेन वाक्जले वनस्पतिषु च प्रविष्टवती इति एका कथा श्रूयते । (ता, ब्रा, ६–५–१०—१३) । देवासुराणां युद्धवृत्तान्तः, यज्ञस्य अश्वरूपधारणम्, अग्नमथनावसरे अश्वानयनविधानम्, दर्भमुष्टिग्रहणम्, ब्राह्मणग्रन्थेषु दृश्यन्ते (ता, ब्रा ६–७–१८) (शत, ब्रा, १–६–४–१५). (ऐ, ब्रा, १–४–२३; ६–२–१) इति ।

ब्राह्मणग्रन्थेषु समुपलभ्यमानानि आख्यानानि तत्वरूपपराणि, अतिगम्भीरविषयोपस्थापकानि, गूढार्थपराणि, सूत्ररूपाणि च दृश्यन्ते । शतपथे (१–४–५–८, १२,) मनोवाक्कलहकथनप्रकरणं आधुनिकमनोविज्ञानिनां कृते बहूपकरोति इति ज्ञायते । एवम् वाक्सम्बन्धियुक्ताख्यानानि सृष्टिविषयकाख्यानानि च तत्र तत्र सन्ति । प्रजापते : अङ्गावयवद्वारा वर्णोत्पत्तिजतिति ताण्ड्यमहाब्राह्मणे श्रूयते । रजनीउदयोल्लेखः परा एका कथा मैत्रायणिसंहितायां दृश्यते (मै, सं, १–४–१२) । संस्कृतसाहित्ये अत्यन्तप्रसिद्धमाख्यानम् उर्वशीपुरूरववृत्तान्तकथनम् शतपथब्राह्मणे अक्षिपथमायाति (११–५–१) । प्राचीनजलप्रलयवृत्तान्तः (शत, ब्रा १–८–१), शुनश्शेफकथा च ऐतरेयब्राह्मणे वर्तते (ऐ, ब्रा, ७–२) । एवम् आख्यानानाम् इतिवृत्तकथनम् ब्राह्मणग्रन्थानां वस्तुविषयविशेषः इति ज्ञायते ।

**ब्राह्मणानां महत्वम्**

वैदिकयुगीयोदन्तःशासनकथनम्, वंशानुचरितम्, भूगर्भवृत्तान्तः, सगोलाख्यानम्, ग्रहनक्षत्रपरमन्त्राणाम् उल्लेखः तेषामिति वृत्तं च उपवर्णनं ब्राह्मणानां मुख्यो विषयः । भगवद्भक्तियुक्तसात्विकानुष्ठानानां विचारः प्रभूततया उपलभ्यते । यागाद्यनुष्ठानद्वारा इन्द्रादिलोकपालान् समभ्यर्च्य स्वेष्टफलं सम्प्राप्नुवन्तिस्मतदानीन्तनकाले जनाः इत्यनेन ज्ञायते । सनातनभारतस्य धर्मोत्पत्तिः सत्यस्य ऋतस्य च स्वरूपोल्लेखः, ऋणत्रयविचारः अभ्युदयनिःश्रेयसपरधर्मयोः विकासादिवृत्तान्तावगमे च महदुपकुर्वन्ति इमानि ब्राह्मणानि । भारतीयानां जीवनक्रमः, जीवनस्य ध्येयोद्देशः, कर्मानुष्ठानविधानं धार्मिकाध्यात्मिकसामाजिकभावनावगमने इमानि ब्राह्मणानि आधारभूतानि इतिवृत्तानि भवन्ति । कर्मकाण्डज्ञानकाण्डसाहित्यसंस्कृतिनिरूपणे च अनुष्ठानेष्वपि इमानि आकररत्नानि भवन्ति । मानवजीवनमौल्यानां निरूपणे जीवनोद्देशस्य साफल्यप्रदर्शने च अन्तरङ्गबहिरङ्गसाधनान्वेषणे च अनुशीलनोपदेशः ग्रन्थेषु तत्र तत्र दरीदृश्यते । भगवदनुग्रहप्राप्तये च नैकविधसात्विकमार्गाक्रमणिका च परिदृश्यते । एवम् सनातनभारतस्येतिवृत्तानुशीलने ब्राह्मणग्रन्थाः बहुथामार्गदर्शनम् कुर्वन्तिस्म । तत्र तत्र नैकविधरर्शनानां बीर्जवापः तेषां प्रवृद्धिश्च दृश्यते । उदाहरणार्थं मीमांसादर्शनस्योदयः ब्राह्मणग्रन्थे समालक्ष्यते न्यायानां सदुपयोगक्रमः निरुक्तानां व्यवस्था च दृश्यते । एवम् "ब्रह्मवादिनों वदन्ति" "अथमिमांसन्ते" इत्यादिप्रयोगविवरणं च श्रुतिपथमायाति अत्र ॐ । "उदितेहोतव्यम् अनुदितेहोतव्यम्" (कौ, बा, २–९) इत्यादि प्रयोगादेशोपि दृश्यन्ते । एवम् कर्मोपासनाज्ञानकाण्डानां विषये मार्गदर्शनम् अनुष्टानविधानं बहुत्र समालक्ष्यते ।

**ब्राह्मणग्रन्थानां कालः**

ब्राह्मणग्रन्थानां कालविषये महान् विवादः आधुनिकसंशोधकमण्डले दृश्यत्ते । इदमित्थम् इत्ति निर्णयः न दृश्यते । पाश्चात्याब्राह्मणग्रन्थरचनाविधसनम् अन्यथा कथयन्ति । केचन इतिहासतत्वविदः एकया दृष्ट्या स्वाशयं न प्रदर्शयन्ति । अस्मिन् विषये आधुनिकेतिवृत्तसंशोधकानां भारतीयानामाशयः अन्ततः विभिन्ना एव दृश्यते । परंतु सांप्रदायिकानां पण्डितानां विश्वासः या परंपरासमागता तदनुरोधेन अत्र केचन विषयाः सम्यङ् निरूपितास्सन्ति । ब्राह्मणग्रन्थेषु नदनदीनामुल्लेखो विफुलतया दृश्यते । ताण्ड्ये ब्राह्मणे सरस्वतिनद्योरुल्लेखः तत्र तत्र समुपलभ्यते । यमुनानद्याः गमनमार्गः, सरस्वतिदृशद्वतिनद्योः संगमः कुरुक्षेत्रस्य नामोल्लेखः, कुरुपाञ्चालवर्णनं वर्तते । सरस्वतिनद्याः तीरप्रदेशे एव प्रथमतया ब्राह्मणग्रन्थरचना समारब्दा स्यादिति पण्डिता केचन सन्यन्ते । पाश्चात्यपण्डिताः एवम् अभ्युपगच्छन्ति ब्राह्मणग्रन्थानामुदयः क्रिस्तपूर्व १२०० तः क्रिस्तपूर्व २०० पर्यन्तमिति । भारतीयपुराविदः समामन्ति क्रिस्तपूर्व ३००० तः क्रिस्तपूर्व २००० पर्यन्तमिति । विषये अस्मिन् एतावत्पर्यन्तं न साधितम् । कालः एव निर्णेतव्यो वर्तते । ब्राह्मणसाहित्यस्य तथा उपनिषत्साहित्यस्य मध्ये सहस्रवर्षान्तरम् अन्तरं भवेत् इति पुराकल्पविदः वदन्ति । ब्राह्मणेषु कर्मकाण्डस्य प्राधान्यम् उपनिषत्सु ज्ञानकाण्डस्य प्रावधानं समालक्ष्यते । उभयत्रापि ग्रहनक्षत्राणां विष्ये, नक्षत्रोदयसमाचारे च महदवधानं दत्तमति भाति । वेदाङ्गज्योतिषस्य नैके विषयाः ब्राह्मणमूला एवेति सम्प्रति निर्णीयते विद्वल्लोके । ब्राह्मणग्रन्थे समुपलभ्यमानवस्तुविषयाणामाधारेण अस्माभिरेवं निर्धारयितुं शक्यते ।

पाश्चत्यानामनुसन्धानं भारतीयानामनुचिन्तनं ब्राह्मणग्रन्थकालनिर्णये परस्परं विरोधाभासं जनयति । यतोहि पाश्चत्या केवलम् ऐतिह्यचिन्तनेषु कटिबद्धास्सन्तः तदा तदा किमपि लिखिन्ति । भारतीयास्तु परम्परासमागतवस्तुचिन्तने महदवधानं प्रयच्छन्ति इति अनेन ज्ञायते ।

अन्येचकेचनविपश्चिदपश्चिमाकथयन्तिक्रिस्तोःपूर्वम् ८०० तः ५०० पर्यन्तम् ब्राह्मणानामुद्भवकालः इति । तेषामाशयम्संग्रहेणविलिख्यते ।

ब्राह्मणभागेषु विध्यर्थवादोपनिषत् इति आख्यानत्रयोभागाः सङ्घटिताः सन्ति इति । तत्र विधिशब्देन कर्मविधायकानि, अर्थवादशब्देन प्ररोचनापराणि, उपनिषत्शब्देन विवरणपराणिविषयाः समुपलभ्यन्ते इति । इतिहासात्मकानि, तत्वविचारपराणि च प्रकरणानि विवक्षितानि । ते चैते ग्रन्थः यद्यप्यद्यत्वे बहुसंख्यः समुपलभ्यन्ते तथापि केचित् पुरैवोत्पन्नविनष्टास्तर्क्यन्ते । यतो हि अस्माभिः अदृष्टाश्रुतानां ब्राह्मणानां नामग्रहणं तदीयवाक्यानुसंधानं च तत्र तत्रेपलभ्यते बहुषु ग्रन्थेषु । यस्मिन् काले भारतीयैः कर्मानुष्ठानैकनिरतैरभूयत तस्मिन् समये एते ग्रन्थाः प्रादुर्भूताः इति । यतो हि इमे ग्रन्थाः कर्ममार्गानेव निर्दिशन्तःकर्मणामेव महिमानमुदीरयन्तः कर्मणामेवोत्पत्तिप्रयोजने निरूपयन्तश्च कर्ममात्रं परामृशन्ति । एवं जातीयकान् अभिन्नरूपान् अयं ब्राह्मणरङ्गः दीर्घकलव्यापी बभूव । यतो हि समेषां ब्राह्मणग्रन्थानां सजातीयत्वेपि तेषु केषाञ्चित् कालभेदः समुद्भासते । तथा हि यजुर्वेदस्य गद्यभागोत्पत्तेः परं पञ्चविंशं तैत्तिरीयं चेति ब्राह्मणद्वयम् इतरब्राह्मणापेक्षया प्रागुत्पन्नमिति तदीयशब्देषु वाक्यरचनारीत्यौचप्राचीनताप्रतिभासादनुमीयते । तत्र तैतिरीये ब्राह्मणे अनुभूयमानः पञ्चविंशब्राह्मणे भूतपूर्वत्वेन ज्ञायमानश्च स्वरविन्याससम्प्रदायो अपि अत्र अनुमेयार्थं स्थिरयति । जैमिनीयब्राह्मणं कौषीतकिब्राह्मणम् ऐतरेयब्राह्मणं च ततः पश्चादुत्पन्नानि इति अनुमेतुं शक्यते । यतो हि भाषा सौष्टवं वर्णविन्यासशैलीरचनाक्रमः भाषास्वारस्यानुसन्धाने तु एतेषां त्रयाणामपि क्रमिको कालभेदो व्यक्तीभवति । शतपथब्राह्मणमभिनवार्थगर्भितत्वात्वात् ततः अर्वाचीनम् इति ऊहितुम् शक्यम् । तथा तत्र नवनवीनपदपुञ्जानां सम्मेलनम् बहुत्र दृष्टिपथमायाति । अर्वाचीनवस्तुविषयाः बहुत्र दृश्यते । नवीनव्याकरणपद्धतिरपि अत्र तत्र तत्र समालक्ष्यते इति नवीनितिहासतत्वविदः अपि ब्रुवन्ति । यतो हि इदं प्रथमतया अत्र लिटः प्रयोगारम्भो अस्य ऐतरेयब्राह्मणादर्वाचीनतरत्वं बोधयति । एतदीयाभाषागतिरपि पूर्वोक्तब्राह्मणभाषापेक्षया लब्धाधिकस्स्कारा समनुभूयते इति । केचन पुरातत्वविदः आमनन्ति एवं ब्राह्मणग्रन्थाः प्रायेण ऋग्वेदापेक्षया शब्ददरिद्रतां भजन्ति इति । यतो हि लेडाखोलकारः प्राक्तनाः सर्वे तुमुन्नर्थका प्रत्ययाश्च प्रामुर्येण प्रयुक्ताः इति । तदीयावाक्यशैली ऋग्वेदमतिक्रम्य भारतवर्षीयवाक्यरचनायाः प्रथमारम्भरीतिमुदाहरति । यद्यपि ऋग्वेदः अत्यन्तं प्राचीनसाहित्यविशेषः इति जेगीयते तत्र नास्ति विप्रतिपत्तिः परंतु तत्र तत्र पदविन्याससौष्ठवं पद्यबन्धानुगुणम् वाक्यरचनाकौशलं तु नवनवीनवस्तुविषयानुसन्धानपरमिति अवगम्यते । ब्राह्मणभागेषु गद्यानां मध्ये पद्यानां स्रोतः अेतप्रोततया समुपलभ्यन्ते ते स्वगतैरेव स्वभावविशेषैः स्वेषां स्वच्छन्धतां प्रकटयन्ति इदमपि तेषां प्राचीनत्वे प्रमाणमिति संशोधकानाम् आशयः ।

**ब्राह्मणग्रन्थानाम् भाषातथाशैलीस्वरविन्यासः**

ब्राह्मणग्रन्थाः समान्यतः गद्यमयाः एव । संस्कृतसाहित्यस्य अत्यन्तं प्राचीनगद्यभागाः इमे ग्रन्थाः । तेषां शैली प्रसन्ना हृदयङ्गमाः इति ज्ञायते । ब्राह्मणग्रन्थाः एते उदात्तवस्तुविषयनिरूपणे प्रवृत्तास्सन्ति । दीर्घसमासानां प्रयोगो न दृश्यते अत्र । क्लिष्टयुक्तपदयोजना नास्ति । वस्तुविषयनिरूपणे ब्राह्मणेषु स्पष्टता समुद्भाति । सरलया शैल्यावस्तुविषयनिरूपणं गङ्गाप्रवाहवद् प्रसन्नगम्भीरतया सर्वत्र प्रवहति इति तु समादृश्यते, नाति कठिना नातिसुलभा च विद्यते पदप्रयोगः । आरण्यकानामुपनिषदां च भाषागतिः प्रायेण लौकिकसंस्कृतभाषायाः तुल्यरूया एवेति अस्य समावलोकनेन अवगम्यते । तत्र प्राचीनतरा उपनिषदः परं सूत्रब्राह्मणयोः अन्तरालवर्तिनीं किञ्चिद्विलक्षणां रीतिमनुधावन्ति ।

**ऐतरेयब्राह्मणम् ।**

ऋग्वेदसंबन्धिनोः द्वयोः ब्राह्मणयोः ऐतरेयं प्रधानतमम् । अद्योपलभ्यमानमैतरेयब्राह्मणं चत्वारिंशदध्यायात्मकम् ते च पञ्चिकाष्टकत्वेन संविभक्ताः सन्ति । तत्रान्तिमादशाध्यायीपश्चत्काले संयोजितेति केषाञ्चन पण्डितानामाशयः । विषये अस्मन् तेषामभिप्रायो विद्यते तदभिव्यज्यमानैरेव लिङ्गैरेवम् अवधार्यते इति शाङ्कायनब्राह्मणे उक्तदशाध्यायीप्रतिपाद्यानां विषयाणामनुपादानां प्रत्युतशाङ्कायनसूत्रे तदुपादानच असमदुक्तिमुपष्टम्भयतीति । अपि च अत्र अन्तमे पञ्चिकात्रये लिटः परोक्षार्थे प्रयोगो दृश्यते । आदिमे पञ्चिकापञ्चके तु प्राचीनब्राह्मणग्रन्थेषु इव तत्र वर्तमानवाचकताशक्तिरेवानुभूयते । एतेन ह्यन्तिमं पञ्चिकात्रयम् इतरापेक्षया अर्वाचीनतरमिति व्यक्तमेव इति । वस्तुतः ब्राह्मणस्य अस्य प्रधानभूतो भागः सोमयागविषयकः एवेति अभ्युपगन्तव्यम् इति केचन विद्वद्वराः कथयन्ति । तथाहिआदिमेअद्यायषोडशके अग्निष्टोमाख्य एकाहसाध्यःसोमयागःतदन्तरेअपि अध्यायद्वये षष्ठ्युत्तरत्रिशताहसाध्यंगवामयनं, तदन्तरे अध्यायषट्के द्वादशाहश्च प्रतिपाद्यते इति । तदन्तरेषु अष्टसु अध्यायेषु आनुषङ्गिका अग्निहोत्रादयो वर्णिताः । तस्मात् तेषां परिशिष्टरूपत्वं निर्श्चयते इति । अवशिष्टायामष्टाध्याय्यां रजकीयपट्टाभीषेकमहोत्सवः उपवर्णितो वर्तते । तथा च तत्र राजपुरोहितानामधिकारश्च प्रतिपाद्यते । तेन तेषामर्वाचीनत्वम् च व्यज्यते इति । ऐतरेयब्राह्मणस्य रचयिता महीदासैतरेयः इति केचन कथयन्ति । अस्य महीदासस्योल्लेखः सामवेदीये छान्दोग्ये उपनिषदि दृश्यते । परं तु इदं प्राचीनतरमिति ज्ञायते । वेदभाष्यकाराः सायणाचार्याः अस्य नामोल्लेखनम् स्वीये भाष्ये करिष्यन्ति । स्वभाष्ये कथामेकाम् अस्य विषये प्रदर्शयामासुः । सा च कथा एवं वर्तते ।

अयम् महीदासः मन्दधीरासीत् । अस्य पिता एनं नाङ्गीकृतवान् अस्य विषये तूष्णीमास । परं अस्य जननी इतरायाः श्रद्धां भक्तिम् अनन्यतपः प्रभावं च समवीक्ष्य वरं प्रायच्छत् विश्वंबरा । ततः समहीदासः महान् पण्डितो अभूत् । अनतिकाले एव ब्राह्मणदृष्टा अपि अभवदिति अवगम्यते । सा इतरा तु चतुर्थवर्णास्त्री आसीदिति ऊहयितुं शक्यते इति कर्णाकर्णिकया उदन्त श्रूयते इति वेदभाष्यात् ज्ञायते इति । अद्य समुपलभ्यमाने ऐतरेयब्राह्मणे ।

**उपसंहारः**

स्वपरहितान्वेषणेयः मानव सदा अत्मानं प्रवर्तयति स एव अभ्युदय–निः श्रेयसप्राप्तये योग्याधिकारी भवति इति मन्तव्यम् । तर्हि के के विषया मानवजीवनोन्नतिविषये साधुतमा भवन्ति इति जिज्ञासायाम् श्रीशङ्करभगवत्पादा एवं कथयन्ति– प्रश्नोत्तररत्नमालिकाख्ये प्रकरणग्रन्थे ।

उदाहरणार्थम्– को गुरुः इति प्रश्ने अधगततत्वः इत्युत्तरम् । प्रत्यक्षदेवताका इति प्रश्नः माता इति तदुत्तरम् । यतो हि वेद एव बोधयति “मातृदेवो भव, अतिथिदेवो भव इत्यादिः । कः पथ्यतरो धर्म । कः शुचिरिहयस्यमानसशुद्धम् । कः पण्डितो विवेकी । किम् मनुजेषु इष्टतमम् स्वपरहिताय उद्यतं जन्म । किम् जीवितम् अनवद्यम् । का मूढता जन्तोः निद्रा । को नरकः परवशता । किम् सत्यम् भूतहितम् । प्रिय च किम् प्राणिनामसवः । का दुःखदा सादुजनमैत्री । एवम् बहूनाम् वचनानाम् मूलोल्लेखो यत्र ऋगवेदादिषु सूक्तिषु समुपलभ्यते तेषां वचनानाम् संग्रहो अनेन कार्यः । मनुजैः अवश्यं सम्पाद्यम् किम् इति जिज्ञासायाम्—विद्या वित्तं बलं यशः पुण्यम् इति उत्तरम् । इत्यतः एतादृशानां बहूनाम् मानवजीवनमौल्य–युक्तानाहितबोधपदवाक्यानाम् तत् संग्रहणे एवं प्रवृत्तिः समजनि इति । वेदे तावत् समस्तजीवजन्तूनाम् अभ्यदयनिः श्रेयस हेतत्वे च अप्रमेयसक्तिनां ऊपणसंति।

अनेन ज्ञायते यत् न केवलं जीवसंकुलस्य रक्षणम् अपि तु पृथिव्यादीनां भूतपञ्चकानां संरक्षणे च वेदेषु महानादरः प्रदर्शितः इति ज्ञायते । सम्प्रति जगतीतले अस्मन् मानवः सर्वविषयेषु राक्षसीप्रवृत्तिं प्रदर्शयति, तस्य आशा बलवती अस्ति । अनेन किं भवति इति ज्ञातपूर्वमेव । एतदर्थं मानवः कर्तव्यसक्रियाकर्म, कर्मनान्यदपेक्ष्यते इत्युक्तरीत्या भवेदिति शम् ।

समानीव आकूति : समाना ह्रुदयानि वः । समानमस्तु वो मनो यथावः सुसहा सति ॥ (ऋ, सं, १०–१९१–४) ॥

**ग्रन्थसूचीविवरणम्**

१. वैदिकसाहित्यचरितम् । वि.एन्.एस्. अनन्तरङ्गाचार् । निवृत्तप्राचार्यः, महाराजसंस्कृतकालेज्मैसुसु । प्रसारङ्ग–मानसगङ्गोत्रि । मैसूरु । १९६८..।

२. सर्वदर्शनसंग्रह–श्रीमत्सायणमाधवप्रणीतः । प्राच्यविद्यासंशोधनामन्दिरम् । पुन्यपत्तनम् । १९५१ ।

३. शाङ्करदर्शनमर्मप्रकाशः । पण्डितप्रवरकृष्णजोयस्प्रईतः । राष्टियसंस्कृतविद्यापीठम् तिरुपतिः । १९९६।

४. वेदभाष्यभूमिकासंग्रहः । सायणाचार्यविरचितः । संपादनम्बलदेवोपाध्यायः । चौखाम्बासंस्कृतसीरिज्आफिस्वाराणसि ।

५. ऋग्वेदसंहितोपनिषत्शतकम् । श्रीस्वामिमहेशानन्दिगिरिमहाराजः, महामण्डलेश्वरः । उमरेट्गुजरात् । १९४४ ।

६. ब्रह्मसूत्रशाङ्करभाष्यम् । कामकोटिकोशस्थानम्, ४. फ्रान्सिस्जोसेप्स्ट्रीट्मद्रास् । १९५४..।

७. भारतार्यधार्मिकसंस्कृतिः । आस्थानमहाविद्वान् एडतोरेचन्द्रशेखरशास्त्री । मैसूरुमहासंस्थानम् । १९५८..।

८. आपस्तम्भपरिभाषासूत्रम् । कपर्दिस्वामिभाष्यसहितम् । महदेवशास्त्री । मैसूरुमहासंस्थानम् । १८९३..।

९. कल्याण, जीवनचर्याअङ्क । जनवरि २०१० गीताप्रेस्गोरखपुर । २०१०..

१०. वेदान्तशात्रप्रस्नोत्तरमालिका । डा। रा। कृषणमूर्तिशास्री । २/१. संस्क्रुतकलाशालावीथी । मैलापुर् । मद्रास् ००४.

११. वेदान्तार्थसारसंग्रहः । श्री श्री सच्चिदानन्देन्द्रसरस्वतीस्वामिगलवरु । अध्यात्मप्रकाशनकार्यालम्होलेनरसीपुर । १९८९..।

१२. आत्मवादानुचिन्तनम् । डा. किशोरनाथझा । नागप्रकाशक्, जवाहरनगर दिल्ली००७ । १९९०..।

१३. सर्वेषांदर्शनानाम् अद्वैते तात्पर्यम् । वि, एस. रामचन्द्रशास्त्रिगल् । भारतीयविद्याभवन् । मुम्बै, ००७ । १९७७..।

१४. ईशाद्यष्टोत्तरशतोपनिषदः । पणशीकरोपाह्वःवासुदेवशर्मा । चौखाम्बाविद्याभवन्वाराणासी ॥ २००२..।

१५. ईशादिदशोपनिषदः । मोतिलाल्बनारसीदास् । नवदेहली । १९८७.. ।

१६. अद्वैतकोशः । वेदान्तभारती, कृ.रा, नगरम्मैसूरु । २०१४..।

१७. भगवद्गीताशाङ्करभाष्यम् । मोतिलाल्बनारसीदास् । वाराणसी । १९६४..।

१८. शाङ्करवेदान्तकोशः । डा. मुरलीधरपाडेयः । सम्पूर्णान्दविश्वविद्यालयःवाराणसी । १९९८..।

***********

**Volume XXI : January to June – 2023, ISSN 2250-1711**

**Journal of Veda Samskrita Academy [Recognised in the UGC-CARE List]**

# तत्त्वचिन्तामणेर्व्याप्तिसप्तकस्य तृतीयलक्षणे गदाधरमतविमर्शः

**Riya Pal**

State Aided College Teacher, Dept. of Sanskrit

Chatna Chandidas Mahavidyalaya

P.O. – Chatna – 722132

Dist – Bankura, West Bengal

Contact No. : 7031707927 / 7362994749

Email: riyapalsanskrit10@gmail.com

## उपोद्घातः –

प्राचां तथार्वाचां नैयायिकानां नयानुसारमनुमितिं प्रति व्याप्तेरुपयोगित्वं स्वीकृत्य नैयायिककुलचूडामणिना गङ्गेशोपाध्यायेन व्याप्तेर्निर्दुष्टं लक्षणं कृतम्। तत्रापि पूर्वपक्षिणां मतसम्मतानि व्याप्तिलक्षणानि नव्यन्यायदिशा निरूप्य दोषान् च प्रदर्श्य सिद्धान्तलक्षणं निरूपितम्। गङ्गेशोपाध्यायेन तत्त्वचिन्तामणौ प्रप्रथमं व्याप्तेः सप्तलक्षणानि पूर्वपक्षलक्षणत्वेन उपस्थापितानि। तत्र **साध्याभाववदवृत्तित्वम्, साध्यवद्भिन्नसाध्याभाववदवृत्तित्वम्, साध्यवत्प्रतियोगिकान्योन्याभावासामानाधिकरण्यम्, सकलसाध्याभाववन्निष्ठाभावप्रतियोगित्वम्, साध्यवदन्यावृत्तित्वम्**[1] इत्येतानि प्राचां नैयायिकानां लक्षणानि इति तत्त्वचिन्तामणौ निगदितानि। ततश्च **साध्यासामानाधिकरण्यानधिकरणत्वं**[2] **साध्यवैयधिकरण्यानधिकरणत्वं**[3] चेति सिंहव्याघ्रलक्षणे निरूपिते गङ्गेशोपाध्यायैः तत्त्वचिन्तामणौ।प्रकृते प्रबन्धे तत्त्वचिन्तामण्युक्तं व्याप्तेस्तृतीयलक्षणमाश्रित्य रघुनाथशिरोमणिरचिताया दीधितिटीकायाः गादाधरीटीका पर्यालोच्यते -

## गदाधरदिशा तृतीयलक्षणस्य सद्धेतौ सङ्गतेस्तथा असद्धेतावसङ्गतेर्विचारः –

**साध्यवत्प्रतियोगिकान्योन्याभावासामानाधिकरण्यं व्याप्तिरि**[4]ति तृतीयलक्षणम्। साध्यवत्प्रतियोगिकान्योन्यभावाधिकरण निरूपितवृत्तित्वाभावो व्याप्तिरिति पर्यवसितार्थः। तथा च वह्निमान् धूमाद् इत्यत्र साध्यो वह्निः, साध्यवान् वह्निमान् – पर्वतादिः, साध्यवत्प्रतियोगिकान्योन्याभावः – वह्निमान् न इति भेदः, साध्यवत्प्रतियोगिकान्योन्याभावाधिकरणम् – जलह्रदादिकम्, साध्यवत्प्रतियोगिकान्योन्याभावाधिकरणनिरूपितवृत्तित्वाभावरूपस्य साध्यवत्प्रतियोगिकान्योन्याभावासामानाधिकरण्यस्य धूमरूपहेतौ सत्त्वाल्लक्षणसमन्वयः।

एवं च धूमवान् वह्नेः इत्यत्र साध्यः – धूमः, साध्यवान् – धूमवान् – पर्वतादिः, साध्यवत्प्रतियोगिकान्योन्याभावः – धूमवान् न इति भेदः, साध्यवत्प्रतियोगिकान्योन्याभावाधिकरणम् – अयोगोलकम्, साध्यवत्प्रतियोगिकान्योन्याभावाधिकरणनिरूपितवृत्तित्वस्यैव वह्निरूपहेतौ सत्त्वात् साध्यवत्प्रतियोगिकान्योन्याभावाधिकरणनिरूपिवृत्तित्वाभावरूपस्य साध्यवत्प्रतियोगिकान्योन्याभावासमानाधिकरण्यस्य व्याप्तिलक्षणस्य असङ्गमनात् न अतिव्याप्तिः।

## गदाधरदिशा तृतीयलक्षणपरित्यागबीजविचारः–

हेतोः साध्यवत्पक्षभिन्नदृष्टान्तवृत्तित्वेन अव्याप्तेराह – सकलेति इति तृतीयलक्षणपरित्यागबीजमूलिका दीधितिः गदाधरेण स्वीयवैदुष्येण व्याख्याता। तथा च, गदाधरनये यस्य हेतोः अधिकरणं नाना भवति तादृशसद्धेतौ तृतीयलक्षणस्य अव्याप्तिः भवति। अतः तृतीयलक्षणं परित्यज्य चतुर्थलक्षणपर्यन्तानुधावनम्। तथाहि वह्निमान् धूमाद् इत्यत्र हेतुः धूमः। धूमस्य अधिकरणं नाना भवति पर्वतमहानसादिभेदात्। अतः वह्निमान् धूमाद् इत्यत्र अव्याप्तिः अस्य लक्षणस्य भवति। यथा वह्निमान् धूमाद् इत्यत्र साध्यो वह्निः,

साध्यवान् वह्निमान् – पर्वतः, साध्यवत्प्रतियोगिकान्योन्याभावः – वह्निमान् पर्वतः न इत्याकारकभेदः, साध्यवत्प्रति-योगिकान्योन्याभावस्याधिकरणम् - वह्निमान् पर्वतः न इत्याकारकभेदस्य अधिकरणम् – महानसादिकम्, साध्यवत्प्रति-योगिकान्योन्याभावाधिकरण-महानसादि-निरूपितवृत्तित्वस्य एव धूमे हेतौ वर्तते इति साध्यवत्प्रतियोगिकान्योन्याभावा-धिकरणनिरूपितवृत्तित्वाभावरूपस्य साध्यवत्प्रतियोगिकान्योन्याभावासमानाधिकरण्यस्य असत्त्वात् तृतीयलक्षणस्य भवति अव्याप्तिः। एवम् अव्याप्तिदोषदुष्टत्वात् तृतीयलक्षणं परित्यजनीयम् इति भावः।

अत्रेदं बोध्यं यद् गदाधरमते नानाधिकरणकहेतुस्थले एव अस्य लक्षणस्य अव्याप्तिः। यस्य हेतोः अधिकरणम् एकम् एव तादृशहेतौ तृतीयलक्षणस्य न अव्याप्तिः। यथा पर्वतो वह्निमान् धूमाद् इत्यादिस्थले तृतीयलक्षणस्य न अव्याप्तिः। तथाहि पर्वतो वह्निमान् धूमाद् इत्यत्र हेतोः धूमस्य अधिकरणं पर्वत एक एव। तथा च, पर्वतो वह्निमान् धूमाद् इत्यत्रसाध्यो वह्निः, साध्यवान् वह्निमान् – पर्वतः, साध्यवत्प्रतियोगिकान्योन्याभावः–वह्निमान् पर्वतः न इत्याकारकः, साध्यवत्प्रतियोगिकान्योन्याभावस्य अधिकरणम् – वह्निमान् पर्वतः न इत्याकारकस्य भेदस्य अधिकरणम् – महानसः, साध्यवत्प्रतियोगिकान्योन्याभावाधिकरण-महानसनिरूपितवृत्तित्वाभाव एव हेतौ पर्वतीयधूमे वर्तते। यतो हि पर्वतो वह्निमान् धूमाद् इत्यत्र हेतुः पर्वतीयधूमः वह्निमत्पक्षभिन्ने दृष्टान्ते महानसे नास्ति। तेन साध्यवत्प्रतियोगिकान्योन्याभावाधिकरणनिरूपित-वृत्तित्वाभावरूपस्य साध्यवत्प्रतियोगिकान्योन्याभावासमानाधिकरण्यस्य अत्र पर्वतीयधूमे हेतौ सत्त्वात् तृतीयलक्षणस्य सङ्गतिः भवति। एवं नानाधिकरणकहेतुस्थले एव तृतीयलक्षणस्य अव्याप्तिरिति गदाधरमतिः। अतस्तेन उक्तम् – **"हेतोरिति। नानधिकरणकस्येत्यादिः। अव्याप्तेरिति।"**[5] इति।

__तृतीयलक्षणस्यअसम्भवदोषाशङ्कातत्समाधिश्च–__

भट्टाचार्यैः स्वीयवैदुष्येण तृतीयलक्षणस्य असम्भवदोषम् आशङ्क्य तन्निराकरणमपि कृतम्। ननु तृतीयलक्षणस्य सर्वत्र सद्धेतौ असम्भव एव इत्याक्षेपः। तत्रोच्यते यत् यत्र साध्यम् एकव्यक्तिः तत्र अस्य लक्षणस्य समन्वयात् असम्भव इति वक्तुं न शक्यते। तथाहि एतत्फलम् एतद्रूपवत् एतद्रसात् इत्यत्र साध्यम् एतद्रूपम्, साध्यवत् एतद्रूपवत् - एतत्फलम्, साध्यवत्प्रतियोगिकान्योन्याभावः – एतद्रूपवत्प्रतियोगिकान्योन्याभावः – एतद्रूपवद्भेदः, साध्यवत्प्रतियोगिकान्योन्याभावस्य अधिकरणम् – एतद्रूपवद्भेदस्य अधिकरणम् – तत्फलम्, साध्यवत्प्रतियोगिकान्योन्याभावाधिकरण-तत्फलनिरूपितवृत्तित्वाभावः हेतौ एतद्रसे वर्तते। तेन साध्यवत्प्रति योगिकान्योन्याभावादिकरण-तत्फलनिरूपितवृत्तित्वाभावस्य हेतौ एतद्रसे सत्त्वात् साध्यवत्प्रतियोगिकान्योन्याभावाधिकरण निरूपितवृत्तित्वाभावरूपस्य साध्यवत्प्रतियोगिकान्योन्याभावासामानाधिकरण्यस्य सत्त्वात् एतत्फलम् एतद्रूपवत् एतद्रसात् इति एकव्यक्तिसाध्यकस्थले लक्षणसमन्वयः। अतः तृतीयलक्षणस्य असम्भवदोषो नास्ति।

ननु साध्यवत्प्रतियोगिकान्योन्याभावासामानाधिकरण्यं व्याप्तिरिति तृतीयलक्षणे साध्यवत्प्रतियोगिकान्योन्याभावस्य ग्राह्यतया एतत्फलम् एतद्रूपवत् एतद्रसात् इत्यत्र साध्यवत्प्रतियोगिकान्योभावपदेन यथा एतद्रूपवान् न प्रतीतिसिद्धः भेदो धर्तुं शक्यते तथा एतद्रूपवत्-तद्रूपवदुभयभेदः अपि धर्तुं शक्यते। तेन एतत्फलम् एतद्रूपवत् एतद्रसात् इति एकव्यक्तिसाध्यकस्थले अपि तृतीयलक्षणस्य असमन्वयात् असम्भवदोषः सुतरां भवति। तथाहि एतत्फलम् एतद्रूपवत् एतद्रसात् इत्यत्र साध्यम् – एतद्रूपम्, साध्यवत् – एतद्रूपवत् – एतत्फम्, साध्यवत्प्रतियोगिकान्योन्याभावः – एतद्रूपवत्-तद्रूपवदुभयं न इति प्रतीतिसिद्धः भेदः, साध्यवत्प्रतियोगिकान्योन्याभावस्य अधिकरणम् – एतद्रूपवद् एतत्फलम्, यतो हि **एकं नोभयम्** इति नियमात् एतत्फलं यद्यपि एतद्रूपवत् तथापि एतद्रूपवत्-तद्रूपवदुभयं न इति भेदः अपि एतत्फले वर्तते, तस्मिन् तद्रूपाभावात्। एवं च, साध्यवत्प्रतियोगिकान्योभावाधिकरण-एतत्फल-निरूपितवृत्तित्वम् एतद्रसे

हेतौ वर्तत इति साध्यवत्प्रतियोगिकान्याभावाधिकरणनिरूपितवृत्तित्वाभावरूपस्य साध्यवत्प्रतियोगि-कान्योन्याभावासामानाधिकरण्यस्य तृतीयव्याप्तिलक्षणस्य हेतौ एतद्रसे असत्त्वाद् एकव्यक्तिसाध्यकस्थले अपि अस्य लक्षणस्य असमन्वयात् असम्भवदोषः सुस्पष्ट एव।

**अतः दीधितिकृता अस्य लक्षणस्य अव्याप्तिकथनं न युक्तम् इति शङ्का।**

**गदाधरदिशा समाधानम् –**

अस्याः शङ्कायाः समाधानरूपेण भट्टाचार्यैः उक्तं यत् लक्षणघटकस्य साध्यवन्निष्ठप्रतियोगितानिरूपकान्योन्याभावस्य साध्यवन्निष्ठप्रतियोगिता व्यासज्यवृत्ति-धर्मानवच्छिन्नत्वेन ग्राह्या। तेन एकव्यक्तिसाध्यकस्थले एतत्फलम् एतद्रूपवत् एतद्रसात् इति स्थले अपि लक्षणसमन्वयात् न असम्भवदोषापत्तिः। तथाहि साध्यवन्निष्ठप्रतियोगितानिरूपकान्योन्याभावस्य साध्यवन्निष्ठप्रतियोगिता व्यासज्यवृत्ति-धर्मानवच्छिन्नत्वेन ग्राह्यतया तृतीयलक्षणस्य परिष्कृतं रूपं स्यात् – **व्यासज्यवृत्तिधर्मानवच्छिन्ना या साध्यवन्निष्ठा प्रतियोगिता तन्निरूपको यो भेदः तद्वदवृत्तित्वं व्याप्तिः।** एतद्रूपवत्-तद्रूपवत्-उभयभेदः यद्यपि साध्यवन्निष्ठप्रतियोगिताकः तथापि व्यासज्यवृत्तिधर्मानवच्छिन्नसाध्यवन्निष्ठप्रतियोगिताकः न भवति, तस्या प्रतियोगितायाः व्यासज्यवृत्ति-उभयत्वरूपधर्मावच्छिन्नत्वात्। अपि तु एतद्रूपभेद एव व्यासज्यवृत्ति-धर्मानवच्छिन्न-साध्यवन्निष्ठप्रतियोगिताकाभावः इति स एव लक्षणघटकः। तादृशभेदाधिकणं न एतत्फल, किन्तु फलान्तरं तत्फलम्। तादृशभेदाधिकरण-तत्फल-निरूपितवृत्तित्वाभावस्य एतद्रसे हेतौ सत्त्वात् लक्षणसमन्वयः भवति। अतः तृतीयलक्षणस्य असम्भवदोषावकाशः नास्ति इति गदाधरसिद्धान्तः।

**गदाधरदिशा समाधानानन्तरम् –**

गदाधरमते यदि लक्षणघटके साध्यवन्निष्ठप्रतियोगितानिरूपकान्योन्याभावे प्रतियोग्यवृत्तित्वरूपं विशेषणं निवेश्यते तदापि एकव्यक्तिसाध्यकस्थले एतत्फलम् एतद्रूपवत् एतद्रसात् इत्यत्र तृतीयलक्षणस्य समन्वयः स्यात्। तेन च न अस्य लक्षणस्य असम्भवदोषापत्तिः।लक्षणघटके साध्यवन्निष्ठप्रतियोगितानिरूपकान्योन्याभावे प्रतियोग्यवृत्तित्वस्य विशेषणतया ग्रहणे तृतीयव्याप्तिलक्षणस्य परिष्कृतं रूपं स्यात् – **प्रतियोग्यवृत्तिः साध्यवन्निष्ठप्रतियोगिताको भेदः तद्वदवृत्तित्वं व्याप्तिः।** तथा च, एतद्रूपवत्-तद्रूपवत्-उभयभेदः तस्य प्रतियोगिनि एतद्रूपवति एतत्फले तथा तद्रूपवति तत्फले च वर्तते। तादृशभेदः न प्रतियोग्यवृत्तिः भवति। तेन एतादृशः एतद्रूपवत्-तद्रूपवत्-उभयभेदः न लक्षणघटकः, किन्तु एतद्रूपवद्भेद एव लक्षणघटको भवति। यतो हि एतद्रूपवद्भेदः तस्य प्रतियोगिनि एतद्रूपवति न वर्तते। तादृशस्य लक्षणघटकस्य भेदस्य नाम एतद्रूवद्भेदस्य अधिकरणं तत्फलम्। तत्र अधिकरणे तत्फले एतद्रसः हेतुर्नास्ति इति साध्यवद्भेद-एतद्रूपवद्भेदाधिकरण-तत्फल-निरूपितवृत्तित्वाभावस्य हेतौ एतद्रसे सत्त्वात् तृतीयलक्षणस्य समन्वयात् लक्षणस्य न असम्भवदोषापत्तिः। अनुक्त्वा दीधितिकृता अव्याप्तिरुक्ता इति गदाधरवादः। तथाहि उक्तम् –**एतद्रूपवान् एतद्रसात् इत्यादौ एतद्रसाधिकरणे एतद्रूपाधिकरणस्य द्वित्वादिना भेदसत्त्वे अपि व्यासज्यवृत्तिधर्मानवच्छिन्नत्वेन साध्यवन्निष्ठप्रतियोगित्वे प्रतियोग्यवृत्तित्वेन वा भेदे विशेषिते लक्षणगमनसम्भवात् न असम्भवो दर्शितः।**[6]इति।

**उपसंहारः** -एतावता गदाधरदिशा तत्त्वचिन्तामणिस्थेषु व्याप्तेः सप्तलक्षणेषु तृतीयलक्षणस्य विचार उपस्थापितः। तत्र च गदाधरदिशा लक्षणं निरूप्य रघुनाथशिरोमणिमनुसृत्य लक्षणस्याव्याप्तिदोषो दर्शितः। तत्रातिरिक्ततया गदाधरभट्टाचार्यैः स्वीयवैदुष्येण लक्षणे असम्भवप्रदर्शनेन रघुनाथशिरोमणेरव्याप्तिदोषप्रदर्शनस्य वैयर्थ्यमाशङ्कितम्।

ततश्च भट्टाचार्यैः अनुपमयुक्त्या लक्षणे विशेषणसन्निवेशेनअसम्भवदोषोऽयंदूरीकृतः। तथाहि लक्षणस्यासम्भवदोषाशङ्कायां लक्षणे **व्यासज्यवृत्तिधर्मानवच्छिन्नत्वस्य** लक्षणस्थाभावविशेषणरूपेण सन्निवेशेन दोषो निराकरणीय इति प्रथमं समाधानं गदाधरस्य। किञ्च, **प्रतियोग्यवृत्तित्वस्य**लक्षणस्थाभावविशेषणरूपेण सन्निवेशेन दोषो दूरीकरणीय इति द्वितीयं समाधानं गदाधरस्येति **गदाधरवैदुष्यमनन्यमित्यलमतिपल्लवितेनेति दिक्।**

**पादटिप्पणी**

1. वीरनारायणपाण्डुरङ्गिसम्पादितायाः पञ्चलक्षण्याः 1-संख्याके पृष्ठे
2. वीरनारायणपाण्डुरङ्गिसम्पादितायाः पञ्चलक्षण्याः 40-संख्याके पृष्ठे
3. तत्रैव
4. वीरनारायणपाण्डुरङ्गिसम्पादितायाः पञ्चलक्षण्याः 17-संख्याके पृष्ठे
5. वीरनारायणपाण्डुरङ्गिसम्पादितायां पञ्चलक्षण्यां 17-संख्याके पृष्ठे
6. वीरनारायणपाण्डुरङ्गिसम्पादितायाः पञ्चलक्षण्याः 17-संख्याके पृष्ठे

**सहायका ग्रन्थाः**

1. गङ्गेशोपाध्यायः। पञ्चलक्षणी। सम्पादकःवीरनारायणपाण्डुरङ्गी। देहली : न्यू भारतीय वुक् कर्पोरेशन्, 2020 प्रथमप्रकाशः।
2. गङ्गेशोपाध्यायः। पञ्चलक्षणी सिंहव्याघ्रलक्षणे च। सम्पादकः एन् एस् रामानुजताताचार्यः। तिरुपतिः: केन्द्रियसंस्कृतविद्यापीठम्, 2000।
3. गङ्गेशोपाध्यायः।तत्त्वचिन्तामणिः। सम्पादकः कामाख्यानाथतर्कवागीशः। कलिकाता:दि एशियाटिक् सोसाइटि, 1990।
4. कुरुगण्टिरामशास्त्री। पञ्चलक्षणीसर्वस्वम्। सम्पादकः वीरनारायणपाण्डुरङ्गी। वेङ्गलुरुः : पूर्णप्रज्ञसंशोधनमन्दिरम्, 2010।

**************

**Volume XXI : January to June – 2023, ISSN 2250-1711**
**Journal of Veda Samskrita Academy [Recognised in the UGC-CARE List]**

# जगदीशदिशा तर्कलक्षणभेदविचारः

**Subrata Gayen**
Assistant Professor, Dept. of Sanskrit
Chandernagore College, Chandan Nagar
Hooghly, West Bengal- 712136
Contact No. : 6289677633 / 9088915491
E-mail : subratasans05 @gmail.com

**उपोद्घातः–**

गङ्गेशोपाध्यायविरचिततत्त्वचिन्तामणिग्रन्थस्थतर्कप्रकरणस्य स्वल्पाक्षरग्रथितदुर्बोधविरुद्धपूर्वपक्षखण्डनपूर्वकस्वसिद्धान्तान्सुकुमारमतीनां समक्षं सरलतया सविशदं प्रकाशयितुं रघुनाथशिरोमणिः तार्किकशिरोमणिश्चिन्तामणिदीधितिं प्रणिनायेति विदितमेव विदुषाम्। वस्तुतोजटिलतत्त्वेन दुर्बोध्यो दुरूहग्रन्थग्रन्थिसमन्वितोऽपि मणिग्रन्थस्थतर्कविमर्शोदीधितिव्याख्यानसहायेनानायासग्राह्यः अधीतिनामिति मतिर्मतिमताम्। पुनस्तद्ग्रन्थस्थानामपि जटिलतत्त्वजातोपनिबद्धत्वात्तत्तत्त्वानां सरलतया समुपस्थापनार्थं जागदीशी व्याख्या विनिर्मिता तार्किककुलालङ्कारभूतेनाचार्येण श्रीजगदीशतर्कालङ्कारेण।

जगदीशतर्कालङ्कारेण या तत्त्वचिन्तामणेर्दीधितिपङ्क्तिव्याख्यानमूला टीका प्रणीता प्राधान्यतया दीधितिपङ्क्तिप्रयोजननिरूपणपरा सा। तत्र क्वचित् क्वचिदेव कतिपयस्थलेषु दीधितिपङ्क्तिमतिरिच्याधिकतया स्वीयं मतमुपस्थापितं तर्कालङ्कारेणेत्येतेषां जगदीशाचार्याणां टीका लघुशरीरैव। तथा च, तर्कालङ्कारप्रणीतटीकायामस्यामुपस्थापिताः दीधित्याश्रिता ये स्वतन्त्रविचारास्ते हि हुताशनेत्यादेदीधिति-प्रणयनप्रयोजननिरूपणम्, तर्कलक्षणनिरूपणम्, तर्कभेदनिरूपणम्, तर्कस्य कारणविचारो फलविचारश्च। अधस्ताद् तेषु विचारेषु तर्कलक्षणभेदविमर्शः जगदीशसम्मतः अस्मिन् प्रबन्धे निबध्यते।

**तर्कलक्षणनिरूपणम्–**

न हि मणिग्रन्थे मणिकारेण, न च मणेः साक्षाट्टीकाग्रन्थेषु न वा पारम्परिकाकरटीकाग्रन्थेषु कुत्रचिदपि तर्कलक्षणं निरूपितम्। केवलं जगदीशतर्कालङ्कारेणैव दीधितिव्याख्यानावसरे तर्कलक्षणं लक्षितमित्ययं तर्कालङ्काराणां विशेषः इति अयं विषयः अत्र विचार्यते। तथाहि तन्मतानुसारं तर्कत्वम् आपादयामीति प्रतीतिसाक्षिको जातिविशेषः। तथाहि जागदीशी गीः – **"आपत्तित्वं पुनरत्रेदमापादयामीति प्रतीतिसाक्षिको जातिविशेषः।"**[1] इति। अत्रेदं बोध्यं यद् ऊहत्व-तर्कत्वे घटत्व-कलसत्वयोरिव मानसत्वव्याप्या एकैव जातिः। न तावद् ऊहत्व-तर्कत्वे घटत्व-पृथिवीत्वयोरिव भिन्ने भिन्ने जाती।

अत्रेयं शङ्का समुपजायते यच्चाक्षुषत्वादिना साङ्कर्यवशाद् ऊहत्वं तर्कत्वं च न जातिविशेषः। साङ्कर्यं तु जातिबाधकत्वेन ग्रन्थेषु परिगणितम् –

**व्यक्तेरभेदस्तुल्यत्वं सङ्करोऽथानवस्थितिः। रूपहानिरसम्बन्धः जातिबाधकसंग्रहः।।**[2] इति।

अस्याःशङ्काया समाधानत्वेनोच्यते यद् ऊहत्वस्य बहिरिन्द्रियनिरपेक्षमनोजन्यतावच्छेदकत्वात् चाक्षुषत्वादिना साङ्कर्यदोषगन्धोऽपि असम्भव इति।

**तर्कभेदविचारः–**

जगदीशतर्कालङ्कारमते तर्को हि पञ्चविध आत्माश्रयान्योन्याश्रयचक्रकानवस्था-प्रमाणबाधितार्थकप्रसङ्गभेदाद्। तथाहि ग्रन्थकारो जगाद जागदीश्याम् – **"स चायं तर्कः पञ्चविधः।आत्माश्रयान्योन्याश्रयचक्रकानवस्थाप्रमाणबाधितार्थकप्रसङ्गभेदाद्।"**[3]

इति। वस्तुत प्रसिद्धम् इदं मतमुदयनाचार्याणाम्। अधस्तात् पञ्चविधानां तर्काणां स्वरूपं निरूप्यते –

<u>आत्माश्रयः</u> –

आत्माश्रयलक्षणविषये उक्तम् – **'स्वापेक्षापादककप्रसङ्ग आत्माश्रयः।'**इति। कस्यचन पदार्थस्य उत्पत्तौ, ज्ञप्तौ स्थितौ वा ज्ञाने वा अव्यवहिततया स्वापेक्षायां तत्प्रयोज्यानिष्टापत्तिरात्माश्रयः। तथाहि जगदीशतर्कालङ्कारैरुक्तम् – **"तत्र स्वापेक्षापादाककप्रसङ्ग आत्माश्रयः। अपेक्षा च ज्ञप्तौ उत्पत्तौ स्थितौ च ग्राह्या। तत्राद्या यथा एतद्घटज्ञानं यद्येतत्द्घटज्ञानजन्यं स्यादेतद्घटज्ञानभिन्नं स्यादिति। द्वितीया तु घटः अयं यद्येतद्घटजन्यः स्यादेतद्घटभिन्नः स्यादिति। तृतीया च अयं घटो यद्येतद्घटवृत्तिः स्यात्तथात्वेनोपलभ्येतेति।"**[4] इति।

<u>अन्योन्याश्रयः</u> –

स्वापेक्षापेक्षित्वनिबन्धनः प्रसङ्गः अन्योन्याश्रयः। कस्यचन पदार्थस्य पदार्थान्तरमपेक्ष्य पुनः स्वापेक्षायां यानिष्टापत्तिः सः अन्योन्याश्रयः। तथाहि जागदीश्यामुक्तम् – **"स्वापेक्षापेक्षित्वनिबन्धनः प्रसङ्गः अन्योन्याश्रयः। यथायं घटो यद्येतद्घटजन्यजन्यः स्यादेतद्घटभिन्नः स्यादित्युत्पत्तौ। एवं ज्ञप्तौ स्थितौ च स्वयमुदा-हार्यम्।"**[5] इति।

<u>चक्रकः</u> –

द्वौ पदार्थौ ततः अधिकान् वा पदार्थान् अपेक्ष्य पुनः स्वापेक्षायां तत्प्रयोज्यानिष्टापत्तिर्या स चक्रकः। तथाहि जागदीश्यामुक्तम् – **"स्वापेक्षणीयापेक्षितसापेक्षत्वनिबन्धनः प्रसङ्गः चक्रकः। अपेक्षा साक्षात्परम्परासाधारणी ग्राह्या।"**[6] इति।

<u>अनवस्था</u> –

यादृश्या आपत्तेर्नास्ति कुत्रापि विश्राम एतादृशी धारावाहिनी आपत्तिर्ह्यनवस्था। अनन्तापत्तिमूलिका अनिष्टापत्तिरनवस्थेति बोध्यम्। परं कुत्रचित्तादृशी आपत्तिरपि प्रमाणसिद्धा चेन्नानवस्थारूपस्तर्कः। सा त्विष्टापत्तिरिति बोध्यम्। तथाहि जगदीशतर्कालङ्कारैरगादि – **"अनवस्था पुनरप्रामाणिकानन्तप्रवाहमूलप्रसङ्गः। यथा घटत्वं यदि यावद्घटहेतुवृत्ति स्याद् घटाजन्यवृत्ति न स्यादिति।"**[7] इति।

<u>प्रमाणबाधितार्थकप्रसङ्गः</u> –

उक्तेभ्यश्चतुर्विधेभ्यस्तर्केभ्यो भिन्नस्तर्को ह्यप्रमाण-बाधितार्थकप्रसङ्गः पञ्चमस्तर्कः। पञ्चमश्चायं तर्कः द्विविधः व्याप्तिग्राहक-विषयपरिशोधकभेदात्। तत्राद्यो हि धूमो यदि वह्निव्यभिचारी स्याद्वह्निजन्यो न स्यादिति। द्वितीयश्च पर्वतो यदि निर्वह्निः स्यादन्निर्धूमः स्यादिति। तथाहि तर्कालङ्कारेण जागदीश्यामुक्तम् – **"उक्तचतुष्कान्यप्रसङ्गः प्रमाणबाधितार्थकः प्रसङ्गः। सोऽपि द्विविधः व्याप्तिग्राहको विषयपरिशोधकश्च। तत्राद्यो यथा धूमो यदि वह्निव्यभिचारी स्याद्वह्निजन्यो न स्यात्, द्वितीयस्तु पर्वतो यदि निर्वह्निः स्यान्निर्धूमस्यादित्यादिः, विषयस्य वह्न्यादिः शङ्कानिवृत्तिद्वारा निश्चायकत्वेन परिशोधकत्वादित्यलं विस्तरेण।"**[8] इति।

<u>उपसंहारः</u>–

अत्रेदं वक्तव्यं यज्जगदीशोक्ततर्कलक्षणं न सम्यगिति मे भाति। तथाहि जगदीशैस्तर्कलक्षणं लक्षितम् –**"आपत्तित्वं पुनरत्रेदमापादयामीति प्रतीतिसाक्षिको मानसत्वव्याप्यजातिविशेषः"**[9] इति। अत्रापत्तित्वं नाम तर्कत्वम्। परं तर्कत्वं जातिरेव न भवतीति मे मतिः। तथा च, यद्यपि चाक्षुषत्वादिना साङ्कर्यादूहत्वं तर्कत्वं च न जातिरिति नवक्तुं शक्यते ऊहत्वस्य बहिरिन्द्रियनिरपेक्षमनोजन्यतावच्छेदकत्वेन चाक्षुषत्वादिना साङ्कर्यासम्भवात्, तथापि सर्वत्र तर्के निर्णयादिभ्यो विषयवैलक्षण्यस्य सिद्धतया विषयवैलक्ष्यमादायैव सर्वत्र तर्के अनुगततर्कपदव्यवहारस्य सिद्धौ तर्कत्वजातिकल्पने प्रमाणाभावः। यदि च विषयवैलक्षण्येन अनुगतव्यवहारोपपत्तौ जातिस्वीकारः नूनं कर्तव्य इति उच्यते तर्हि घटज्ञानत्वादेरपि जातित्वापत्तिर्दुर्वारा। तेन तर्कयामीति आपादयामीति प्रतीतिरसाक्षिणी मानसत्वव्याप्या जातिः (आपत्तित्वं तर्कत्व वा) अप्रसिद्धेति तर्कत्वम् आपत्तित्वं

तर्कलक्षणमित्यपि अयुक्तम् इति ब्रुम इति शम्।

<u>**पादटिप्पणी**</u> –

1. तत्त्वचिन्तामणौ, सोमनाथ-उपाध्यायसम्पादिते, पृ 396
2. भाषापरिच्छेदे, पञ्चाननशास्त्रिभट्टाचार्य्यसम्पादिते, पृ 54
3. तत्त्वचिन्तामणौ, सोमनाथ-उपाध्यायसम्पादिते, पृ 397
4. तत्रैव
5. तत्रैव
6. तत्रैव
7. तत्रैव
8. तत्रैव
9. तत्त्वचिन्तामणौ, कालीपदतर्काचार्यसम्पादिते, पृ 396

<u>**सहायकग्रन्थाः**</u>–

1. गङ्गेशोपाध्यायः। तत्त्वचिन्तामणिः (दीधिति-प्रकाशोपेतः)। सम्पादकः महामहोपाध्यायः कालीपद-तर्काचार्यः। कलिकाता : द्य-एशियाटिक्-सोसाइटिः। अमुद्रितम् (pdf)।
2. गङ्गेशोपाध्यायः। तत्त्वचिन्तामणिः (दीधिति-जागदीशीसहितः)। सम्पादकः सोमनाथ-नेने-उपाध्यायः। वाराणसी : चौखम्बा-संस्कृत-वुक्-डिपो, १९०८। अमुद्रितम् (pdf)।
3. विश्वनाथन्यायपञ्चाननः।भाषापरिच्छेदः (न्यायसिद्धान्तमुक्तावली-मुक्तावलीसंग्रह-सहितः)।सम्पादकःपञ्चाननभट्टाचार्य्य-शास्त्री।कलिकाता : संस्कृत-पुस्तक-भाण्डारः, १३७७-वङ्गाब्दः (प्रथमसंस्करणम्)। मुद्रितम्।

************

**Volume XXI : January to June – 2023, ISSN 2250-1711**
**Journal of Veda Samskrita Academy [Recognised in the UGC-CARE List]**

# पञ्चाननतर्करत्नविरचिते अमरमङ्गले करुणरसस्य प्रयोगवैचित्र्यम्

**Shyamsundar Sardar,**
Ph.D. Research Scholar
Visva-Bharati University,
Santiniketan - 731235, West Bengal
Contact No.- 7586877189,
E-mail : shyamsundarsardar785@gmail.com

**संक्षिप्तसारः'**

न हि रसादृते कश्चिदर्थः प्रवर्तते'[1] । शृङ्गारादिरसेषु करुणरसोऽन्यतमः। पञ्चाननतर्करत्नभट्टाचार्यविरचिते अष्टाङ्कविशिष्टे अमरमङ्गलनाटके अङ्गीरसो वीरः । नाटकेऽस्मिन् वीररसं विहाय करुणक्रोधादयः अङ्गरसाः अपि सन्ति । नाटके स्थितः करुणरसः शोधप्रबन्धेऽस्मिन् आलोच्यते ।

**सूचकशब्दाः** रसः,विभावः, अनुभावः, व्यभिचारिभावः, सात्त्विकभावः, स्थायिभावः, करुणरसः, करुणरसप्रयोगः

**भूमिका**

रस्-धातोः अच्प्रत्ययेन रसशब्दो निष्पद्यते । धातुपाठेऽस्ति 'रस आस्वादन-स्नेहनयोः' इति । साहित्ये रस्-धातोरर्थ आस्वादनम् । य आस्वाद्यते स एव परमानन्दस्वरूपो रसः । कथम् आस्वाद्यते ? विविधव्यञ्जनयुक्तान्नं भुज्यमाना जना भोज्यरसास्वादानं कुर्वन्ति तथैव सहृदयाः सामाजिकाः वा वाचिकादिसमन्विताभिनयं दृष्ट्वा रसम् आस्वादयन्ति। रसहीनकाव्येन कश्चिदर्थो न प्रकाश्यते । रसनिष्पत्तिविषये भरतेन उक्तं–"विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः"[2] इति। अर्थादभिनय-दर्शनकाले काव्यपाठकाले वा विभावानुभावव्यभिचारिभावसंयोगात् सहृदयचित्ते सुप्तरत्यादिस्थायिभावः साधारणीकरणेन चर्वणाव्यापारद्वारा च सहृदयेन रस आस्वाद्यते ।

भावहीनो रसो यथा न स्यात् रसहीनो भावो तथा न तिष्ठेत् । भावयन्तीति भावाः। आङ्गिकवाचिकाद्यभिनयेन काव्यविषयस्य चिन्तनत्वाद्भाव इत्यभिधीयते । भावैः सहृदयाः सामाजिका वा रसमास्वादयन्ति । भावोऽयं त्रिविधा विभावः, अनुभावो व्यभिचारिभावश्चेति ।

विभावाः अस्माकं चित्तवृत्तौ रसोद्रेकं प्रति कारणानि । 'कारणम्','निमित्तम्','हेतुः' इत्येते शब्दाः विभावस्य पर्यायवाचकाः। अनेन वाचिकाङ्गिकाद्यभिनयेन विभावितत्वाद्विज्ञातत्वाद्वा अस्य नाम विभावः । भरताचार्येण कथितं- "विभाव्यन्तेऽनेन वागङ्गसत्त्वाभिनया इत्यतो विभावः"[3] इति । विभावो द्विविध आलम्बनविभावोद्दीपनविभावभेदात् ।नायक-नायिका-प्रतिनायकादीनि यानि चरित्राणि अवलम्ब्य सहृदयचित्ते रससञ्चारो घटते तदेव आलम्बनविभावः । तथाहि विश्वनाथेन प्रतिपादितम्-"आलम्बनं नायिकादिस्तमालम्ब्य रसोद्गमात्"[4] इति । शाकुन्तले दुष्यन्तः, शकुन्तलादय आलम्बनविभावाः । ये विभावा आलम्बनविभावादिना उत्थितस्य रसस्य परिपुष्टिं कुर्वन्ति, रससृष्टौ अनुकूला भवन्ति ते एव उद्दीपनविभावाः ।अर्थात् येन विभावेन रस उद्दीप्तो भवति स एव उद्दीपनविभावः । तदुक्तं दर्पणकारेण - "उद्दीपनविभावास्ते रसमुद्दीपयन्ति ये"[5] इति । शाकुन्तले शान्ततपोवनाद्युद्दीपनविभावः ।

अनुभावो हि चित्तवृत्तिजन्यबाह्यशारीरविक्रियासमूहः। वाचिकाङ्गिकाद्यभिनयेन ये भावाः अनुभाविताः ते एव अनुभावाः। अनुभावाः कार्याणि । शाकुन्तले शकुन्तलादर्शनेन दुष्यन्तस्य रतिनामकस्थायिभावस्य उत्पत्तिर्भवति । तस्यानुभावा मृगयात्यागः, कृशता प्रभृतयः ।

सत्त्वगुणजन्यविकारसमूहः सात्त्विकभावः। सत्त्वस्यार्थोमनसोजातः। तदुक्तं भरतमुनिना -'इहहिसत्त्वंनाममनःप्रभवम्'[6] इति।

सत्त्वादुत्पन्नत्वात्सात्त्विकभावइत्यभिधीयते।नाट्यशास्त्रेऽस्यअष्टभेदा: स्वीकृताभरतेन।स्तम्भस्वेदादयः। भरतदृष्टौ अनुभावात् सात्त्विकभावा भिन्नाः, किन्तु परवर्तिनाम् आलंकारिकाणां नये सात्त्विकभावा: अनुभावाश्च अभिन्ना: गोबलीवर्दन्यायेन । विश्वनाथेन गदितं- "सत्त्वम्अत्रोद्भवत्वात्तेभिन्नाअप्यनुभावत:"[7] इति । अत्र अपिशब्देन अभिन्ना द्योत्यते।

विविधमुखेनरसेषुचरन्तीतिव्यभिचारिण: ।विद्युत्प्रकाशतुल्याःक्षणिकाव्यभिचारिणोरसोद्रेकस्यसहकारिकारणानि । श्रृङ्गारादिरसेपरिपूष्ट्यर्थंस्थायिभावानांसाहाय्यमेवव्यभिचारिभावस्यकार्यम्। नाट्यशास्त्रकारमते निर्वेदग्लानिशङ्कादिभेदात् व्यभिचारिभावा: त्रयस्त्रिंशत्प्रकाराः ।

मानवचित्ते ये भावा: स्थायिरूपेण विद्यमाना: ते एव स्थायिभावा:। विभावानुभावव्यभिचारिभावैःयो भाव: तिरोहितो न भवति सः स्थायिभाव:। भावेषु स्थायिभावो रसोत्पत्तेर्मूलम् । समुद्रः यथा लवणादिजलं आत्मभावं करोति तथैवविरुद्धाविद्धभावौस्थायिभावे विलीनंभवतः ।एते स्थायिभावा रत्यादिभेदेन अष्टौ । करुणरसस्य शोकस्थायिभावविषये विश्वनाथेन उच्यते -'इष्टनाशादिभिश्चेतोवैक्लव्यं शोकशब्दभाक्'[8]इति । अर्थादिष्टजनवियोगः, विभवनाशः, वधादिभिर्मनसो विह्लत्वं शोकः ।

**करुणरसः**

श्रृङ्गारहास्यकरुणरौद्रवीरभयानकबीभत्साद्भुतभेदाद्रसः अष्टौ । रसभेदविषये आलकारिकाणां वैमत्यं दृश्यते ।करुणरसस्य स्थायिभावः शोकः। प्रियजनस्य मृत्युः प्रभृतय आलम्बनविभावाः। मृतस्य पारलौकिकं कार्यम्, धनाद्यपहरणादय उद्दीपन विभावाः । भूमिपतनम्, क्रन्दनम्, प्रलापः, दीर्घनिःश्वासः, स्वस्य भाग्यनिन्दा, शरीरकम्पनम्, स्वरभङ्गः, स्मृतिलोपादिभि-रनुभावैःअभिनयः प्रयोक्तव्यः । उन्मादः, चिन्ता, ग्लानिः, स्मृतिः, मोहः, अपस्मारः, औत्सुक्यम्, विषाद इत्यादयो व्यभिचारिभावाः। नाट्यशास्त्रे अस्ति -

"इष्टवधदर्शनाद्वा विप्रियवचनस्य संश्रवाद्वापि । एभिर्भावविशेषैः करुणरसो नाम संभवति ।।"[9]इति ।

विश्वनाथेन कथितं –'इष्टनाशादनिष्टाप्तेः करुण्याख्यो रसो भवेत्'[10] इति । रसानां स्पष्टरूपेण प्रकाशार्थं वेदे देवानां गुणकर्मानुसारेण रसानां देवता वर्णाश्च भरतेन वर्णिताः । करुणस्य देवताविषये भरतेन उक्तं – '...करुणो यमदैवतः'[11] इति । रौद्ररसात् करुणरस उत्पद्यते । रुद्रदेवः त्रिलोकसंहारकर्ता । रुद्रस्य प्रेरणया यमेन वधादिकार्येण करुणरसस्य सृष्टिर्भवति । करुणस्य प्रकाशार्थं नटादयो गृहकपोतवर्णवद् धूसरमुखरागेण अभिनेतव्याः । तथाहि भरतेन उच्यते – 'कपोतः करुणश्चैव...'[12] इति । करुणरसस्य स्थायिभावः शोकः तर्हि कथं करुणरसेण आनन्दो प्राप्यते?रसो मोक्षजनितानन्दस्वरूपः अलौकिकानन्दस्वरूपो वा। रसाभिव्यक्तिकालेकिञ्चन दुःखम् न प्राप्तम् । स्थायिभावात्मकशोकोन लौकिकशोको व्यक्तिगतशोको वा ।यथा वाल्मीकेः निहतसहचरीविरहकातरक्रौञ्चाक्रन्दजनितः शोको न तु व्यक्तिगतशोकः । तथाहि लोचने -"न तु मुनेः शोक इति मन्तव्यम् । एवं हि सति तद्दुःखेन सोऽपि दुःखित इति कृत्वा रसस्यात्मतेति निरवकाशं भवेत्"[13] इति ।

**अमरमङ्गले करुणरसः**

अर्वाचीनकाले प्रख्यातेषु कविषु पञ्चाननतर्करत्नभट्टाचार्योऽन्यतमः । ऊनविंशशतके तेन विरचितेषु ग्रन्थेषु अमरमङ्गलमिति नाटकम् अन्यतमम् । अष्टाङ्कविशिष्टं नाटकमिदम्। प्रतापसिंहस्य पुत्रस्य उदयपुरस्य राज्ञः अमरसिंहस्य चितोरराज्यसमुद्धारवृत्तान्तम् आधारीकृत्य नाटकमिदं विरचितम् । अमरमङ्गलस्य अङ्गीरसो वीरः, किन्तु करुणरसोऽपि प्राप्यते । यथा द्वितीयेऽङ्के अमरसिंहेन तस्य पितुः प्रतापसिंहस्य वर्णितान्मृत्युवृत्तान्तात्परंसामन्तानां वचनेषु करुणरसो दृश्यते । यथा -

**"(सास्त्रम्) महाराज ! स्मरामः?**

**आताम्रदीर्घनयनद्वयमुक्तमुक्तास्थूलाश्रुसन्ततिमपाङ्गतटाद्गलन्तीम् ।**

**हा हा चितोर ! न तवोद्धरणं मयाभूदित्थं विलापबहुलां सततं स्मरामः ।।"**[14] **इति ।**

प्रतापसिंहेन जीवनस्य अन्तिमे काले कथं मृत्युः प्राप्तः, सा मरणावस्था श्लोकेऽस्मिन् आलोचिता । प्रतापसिंहस्य मृत्युः अत्र आलम्बनविभावः। उद्दीपनविभावः प्रतापसिंहस्य मृत्युसमये स्थितिः । व्यभिचारिभावा आवेगः, चिन्तादयः। प्रतापसिंहस्य वृत्तान्तं विचिन्त्य सामन्तानां नेत्रानि अश्रुपूर्णानि भवन्ति । तेषां क्षरिताः नेत्रजलधाराः अत्र अनुभावाः । एवं विभावानुभावव्यभिचारिभावसंयोगेन, ततःपरं साधारणीकरणेन चर्वणाव्यापारेण च शोकस्थायिभावः सहृदयचित्ते करुणरसरूपेण निष्पत्तिर्भवति ।

किञ्च द्वितीयाङ्के राज्ञः अमरसिंहस्य वचनेषु अस्य रसस्य प्रयोगः परिलक्ष्यते । यथा - **"...भग्नो मे मनोरथः, भारायते जीवनम्, अवसीदन्त्यङ्गानि, भ्रमतीव दृष्टिः, शुष्यति मुखम्, तन्मन्ये-चितोरोद्धारसङ्कल्पादेवमेव निवर्तितः । तातो मे दुःखदावाग्निदग्धोऽमृतपदं गतः ।।"**[15] इति ।

पूर्वे सामन्तैः प्रतापस्य मृत्युवृत्तान्तो वर्णितः । अमरसिंहस्य पितुः प्रतापसिंहस्य चितोरोद्धारसंकल्पः अमरसिंहेन न वास्तवितः । अर्थादमरसिंहेन चितोरजनपदो न अधिकृतः । तस्य चितोरजन्यशोकः अत्र प्रतिपादितः । मृतः प्रतापसिंहः अत्र आलम्बनविभावः। उद्दीपनविभावः सामन्तानां क्रन्दनम् इत्यादयः । मोहः, आवेगः, चिन्तादयो व्यभिचारिभावः । मुखवैवर्ण्यम्, दृष्टिभ्रमादयोऽत्र अनुभावाः ।

षष्ठाङ्के अमरसिंहस्य पत्न्याः उक्तौ अस्य रसस्य प्रयोगः परिलक्ष्यते । तया प्राकृतेन कथितानि । तस्याः वचनानि संस्कृते यथा –

**"( सास्रम्) आर्यपुत्र ! न निर्निमित्तमेतन्मे जडत्वम् । सा हि मम द्वितीयं हृदयम् आसीत् । तस्याः अतर्कितेन अदर्शनेन परिभूतमिव आत्मानं पश्यामि । शरणं गताया एवम् अदर्शनं रक्षकस्य कलङ्कम् उद्घोषयति, एतन्मे द्वितीयं हृदयशल्यम्"**[16] इति । अत्र देव्याः अर्थात् राज्ञः सहधर्मिण्याः वचनानि वीरायाः अदर्शनजन्यशोकपूर्णानि ।अत्र आलम्बनविभावः पलायिता वीरा । उद्दीपनविभावो लोकनिन्दा । जडता, चिन्तादयो व्यभिचारिभावाः । अनुभावौ क्रन्दनम्, 'तस्याः अतर्कितेन अदर्शनेन परिभूतमिव आत्मानं पश्यामि' इति दुःखात्मवोधकं वाक्यञ्च ।

अपि च षष्ठाङ्के राज्ञः अमरसिंहस्य चितोरानुद्धारजन्यशोकात्मके वचने करुणरसः अस्ति । यथा - **"मम तु दैवबिडम्बितस्य यथाशक्ति यतमानस्यापि श्रेष्ठाभीष्टे चितोराधिकारे महान् कालातिपातो जातो जायते च साम्प्रतमपि जवनबलाभियाननिरोधव्यापृतस्य परस्तात् तदधिकारासम्भवाशङ्का चेत्यधिकतरदुःखहेतुः"**[17]इति । अत्र मोघलाभ्यः अनधिकृतं चितोरराज्यम् आलम्वनविभावः । उद्दीपनविभावौ सैन्यसामन्तानां मृत्युः, जीवितसामन्तेषु विरोधश्च । व्यभिचारिभावाः ग्लानिः, औत्सुक्यादयः । अनुभावः प्रलापः ।

भरतनये करुणोऽयं धर्मघातजार्थापचयोद्भवशोककृतभेदेन त्रिविधः। अग्निष्टोमादीनाम् उपघातेन विनाशेन वा धर्मोपघातजः करुण उत्पद्यते । अयं करुण उत्तमप्रकृतिजनानां मध्ये दृश्यते । द्वितीयप्रकारः करुणः अर्थहानिजन्यः । स्वजनादिनाशजन्यकरुणः शोककृतकरुणः । एतेषु त्रिविधकरुणेषु अमरमङ्गले प्राप्तः करुणः शोककृतः करुणः ।

**उपसंहृतिः**

नाटके अङ्गीरसः अवश्यमेव तिष्ठेत् । किञ्च नाटकम् अङ्गीरसन्वितमपि भवेत् । नाटकमिदं वीरक्रोधादिरससमन्वितम्। नाटकेऽस्मिन् चतुर्विधेषु स्थलेषु करुणरसोऽयं प्राप्यते । पञ्चाननतर्करत्नभट्टाचार्येण आलंकारिकनिर्दिष्टरसयोजनाविषयकं नियमम् आश्रित्य नाटकेऽस्मिन् रसः प्रयुज्यते ।

**पादटिप्पणी**

1. नाट्यशास्त्रम्, पृष्ठाङ्कः २७१ 2.तत्रैव 3.नाट्यशास्त्रम्, पृ.- ३४१ 4.साहित्यदर्पणः, ३/२९ 5.साहित्यदर्पणः, पृ.-१५५ 6.नाट्यशास्त्रम्,पृ.-३६२ 7.साहित्यदर्पणः,पृ.-१५७ 8.साहित्यदर्पणः,३/१७७ 9.नाट्यशास्त्रम्,६/६२ 10.साहित्यदर्पणः,३/२२२ 11.नाट्यशास्त्रम्,६/४४ 12.नाट्यशास्त्रम्,६/४२ 13.ध्वन्यालोकः,पृ.-२७ 14.अमरमङ्गलम्, पृ.- ३९२ 15.अमरमङ्गलम्, पृ.- ४५८ 16. अमरमङ्गलम्, पृ.- ८६५ 17.अमरमङ्गलम्, पृ.-८६५

**सहायकग्रन्थाः**

आनन्दवर्धनः । *ध्वन्यालोकः* । सम्पा.- सुबोधचन्द्र सेनगुप्त, कालीपद भट्टाचार्य। कोलकाता : संस्कृत वुक् डिपो; २०१३।

धनञ्जयः। *दशरूपकम्* । सम्पा.- डा. भोलाशङ्कर व्यास । वाराणसी: चौखाम्बा विद्याभवन; २०१३ ।

विश्वनाथः। *साहित्यदर्पणः*। सम्पा.- आचार्यकृष्णमोहनशास्त्री।वाराणसी: चौखम्बा संस्कृत संस्थान; २०१८ ।

पञ्चाननतर्करत्नः । *अमरमङ्गलम्* । सम्पा.- डः अन्नदाशङ्करपाहाडी । कोलकाता : संस्कृत वुक् डिपो; २०१७ ।

भरतः। *नाट्यशास्त्रम्* (प्रथमो भागः)। सम्पा.-रविशंकरः नागरः। दिल्ली : परिमल पब्लिकेशन्स; २०१२।

*******

**Volume XXI : January to June – 2023, ISSN 2250-1711**
**Journal of Veda Samskrita Academy [Recognised in the UGC-CARE List]**

# कातन्त्रीय-पाणिनीयव्याकरणयोःसन्धिप्रकरणस्थसंज्ञासूत्राणां समीक्षात्मकमध्ययनम्

**Dr. Madhusudan Das**
Assistant Professor, Dept. of Sanskrit
Sidho Kanho Birsha University
Purulia, West Bengal- 723104
Contact No. : 9477136874
E-mail : madhusudanrkm@gmail.com

साधुशब्दानां व्युत्पादनसाधनरूपव्याकरणमेवसूत्रात्मकम् । वैयाकरणनये तादृशसूत्रं संज्ञापरिभाषाविधि-नियमातिदेशाधिकारादिषड्विधात्मकम् । लघुकरणार्थमेव संज्ञासूत्राणां मुख्यप्रयोजनम् । अतः संज्ञासूत्रमादौ उल्लिख्यते व्याकरणेषु । अथेदानीं पाणिनिकातन्त्रव्याकरणयोः सन्धिप्रकरणस्थसंज्ञासूत्राणि आलोच्यन्ते । यद्यपि पाणिनिकृते अष्टाध्यायीग्रन्थे कापि प्रकरणव्यवस्था नास्ति तथापि वैयाकरणसिद्धान्तकौमुद्यादिग्रन्थेषु प्रकरणव्यवस्थामाश्रित्य प्रसङ्गानुसारं संज्ञासूत्राणां विमर्शनं क्रियते । प्रकरणग्रन्थानां संज्ञासूत्राणि प्रायशः संज्ञाप्रकरणे उल्लिखितानि, तथापि अन्यत्र कानिचित् संज्ञासूत्राणि प्रसङ्गानुसारेण तत्तत्प्रकरणे उपस्थापितानि क्वचिच्च अन्यतः प्रयोजनार्थं गृहीतानि । कातन्त्रव्याकरणस्य सन्धिप्रकरणस्य नाम सन्ध्यध्याय इति । तत्र किमपि संज्ञासूत्रं नोल्लिखितं शर्ववर्मणा तत्र प्रयोजनाभावात् । अतः पाणिनीयव्याकरणस्य संन्धिप्रकरणस्थसंज्ञासूत्रैः सन्धिसम्बन्धिसंज्ञासूत्रैः च साकं कातन्त्रीयवैयाकरणस्य कीदृशमतमुपन्यस्तं तदत्र निर्दिश्यते । यद्यपि दीक्षितपादेन सन्धिप्रकरणे गुणवृद्धिसंज्ञाविषये किमपि सूत्रं न पठितं तथापि तत्संज्ञाद्वयाश्रितसंहिताव्यवहारात् तद्वयमिह निर्दिश्यते ।

**अथ गुणसंज्ञा** । तत्र आचार्यपाणिनिना अष्टाध्यायीनामकग्रन्थे गुणसंज्ञाविषये "अदेङ्गुणः[1] " इति सूत्रमुल्लिखितम् । भट्टोजिदीक्षितेन अकारस्य एकारस्यओकारस्य च तादृशसंज्ञा भवतीत्युक्तम् । कलापकारेण शर्ववर्मणा " अर् पूर्वे द्वे सन्ध्यक्षरे च गुणः[2]" इति सूत्रेण तत्संज्ञा उल्लिखिता । कातन्त्रवृत्तौ दुर्गसिंहेनापि अर् पूर्व द्वे सन्ध्यक्षरे च गुणः इति संज्ञिते[3] इत्युक्तम् । एतत्संज्ञायाः प्रयोजनमस्ति "आद्गुणः[4]" इति सूत्रे । अवर्णात् स्वरे परे उभयोर्गुणैकादेशः स्यात् । यथा कृष्णर्द्धिरित्यादि ।

यद्यपि तत्संज्ञानामकरणे साम्यमुभयत्र वर्तते तथापि गुणसंज्ञकवर्णविषयेऽस्ति वैसादृश्यम् । पाणिनिना तु आदौ अ- ए - ओ चेति वर्णा गुणसंज्ञकवर्णत्वेन अङ्गीकृताः । ततो गुणविहितसंन्धौ यत्र ऋकारो विद्यते तत्स्थाने योऽण् भवति तस्मात्परं रकारस्यागमो भवेद् " उरण्रपरः[5] " इति सूत्रेण इति तस्य विशेषः । परं शर्ववर्मणा लाघवार्थं गुणसंज्ञकवर्णानां मध्ये अकारं व्यतिरिच्य तत्र साक्षाद् अर् इत्युक्तम् इति उभयोः वैसादृश्यम् । अत्रेदमधिकं वक्तव्यं यत् प्राचीनार्वाचीनैरपि संज्ञेयं समादृता । तथाहि निरुक्तकारेण यास्केन निगदितम्

"शेव इति सुखनाम । शिष्यतेर्वकारो नामकरणोऽन्तस्थारोपलिङ्गीविभाषितगुणः । शिवमित्यप्यस्य भवति[6]" इति

**अथ वृद्धिसंज्ञा** । तत्र पाणिनिना अष्टाध्यायीग्रन्थे " वृद्धिरादैच्[7]" इति सूत्रेण वृद्धिसंज्ञा उल्लिखिता । आकारस्य एकारस्य ऐकारस्य च वृद्धिः स्यादिति वृत्तिः ।कातन्त्रकारेण शर्ववर्मणापि " आरुत्तरे च वृद्धिः[8]" इत्यनेन सूत्रेण वृद्धिसंज्ञा कृता । कातन्त्रवृत्तौ दुर्गसिंहेन आर् परे द्वे सन्ध्यक्षरे वृद्धिरिति संज्ञिते[9] इत्युक्तम् । अत्रापि वृद्धिरिति संज्ञाविधाने उभयत्र साम्यं वर्तते, तथापि वृद्धिसंज्ञकवर्णविषयेऽस्ति वैसादृश्यम् । "वृद्धिरेचि [10] " इति विधिसूत्रे एतत्संज्ञायाः प्रयोगोऽस्ति । अवर्णादेचि परे उभयोः स्थाने वृद्धिरेकादेशो भवेत् । यथा कृष्णैकत्वमित्यादि ।

**अथ टिसंज्ञा** । अष्टाध्यायीकारेण " अचोऽन्त्यादि टि[11]" इत्यनेन स्वरवर्णानां मध्ये योऽन्त्यस्वरः, स एव यस्य आदिस्थितः तस्य समुदायस्य तादृशसंज्ञा भवेदिति अभिप्रेतम् । तेन मनीषेत्यत्र मनस् ईषा इत्यवस्थायां मनस्शब्दस्य अस् इत्यस्य प्रस्तुतसूत्रेण टिसंज्ञायां

"शकन्ध्वादिषु पररूपं वाच्यम्[12]" इति वार्तिकेन पररूपैकादेशो तद्रूपं सिद्धम् । अत्र कलापकारेण लाघवाय तद्विषये किमपि संज्ञासूत्रं न कृतम् । परं तस्य टीकाकृद्भिः " अवर्ण इवर्णे ए[13]"इति सूत्रस्य व्याख्यानकाले मनीषादिपदानां संहिता साधिता । उक्तसूत्रेण ज्ञायते यत् अकार एकारमापद्यते इकारे परे सति । पुनः तस्यैव परस्थितस्य इकारस्य लुक् स्यात् । यथा तवेहा इति । किञ्च पूर्वसूत्रादत्र चकारग्रहणात् क्वचित् प्राग्वर्णस्यापि लोपो जायते । तेन इत्यत्र नकारोत्तरवर्तिनोऽकारस्य लोपे संयोगान्तलोपेन सकारस्यापि लोपकार्ये मनीषेति सिद्ध्यति । एवं हलीषालाङ्गलीषाकुलटादीनि उदाहरणानि ज्ञातव्यानि । किञ्च कातन्त्रवृत्तिपञ्जिकाकारेण त्रिलोचनदासेन लोके प्रयोगार्हवशात् तानि पदानि साधितानि[14] । अपि च कातन्त्रपरिशिष्टकृता आचार्येण श्रीपतिदत्तेन" शकन्ध्वादिषु च[15] " इति नियमेन मनीषादिशब्दानां पूर्ववर्णस्य लोपद्वारा सन्धिकार्यं साधितम् । वस्तुतो यथार्थरूपेणात्र सूत्ररचनाभावात्तद्विषये अनेके नियमा दृश्यन्ते । पाणिनीयैस्तु तन्न कृतमिति तस्य दाक्ष्यम् ।

इदानीं स्वरसन्धौ **प्रकृतिभावविषये** निगद्यते । कलापकारमते" ओदन्ता अइउआ निपाताः स्वरे प्रकृत्या[16]" इति सूत्रेण ओदन्ता निपाता अइउआश्च केवलाः स्वरे परे निपात प्रकृत्या[17] तिष्ठन्ति । अष्टाध्यायीग्रन्थकृता तु विषयेऽस्मिन् " औत्[18]"" एकाजनाङ्[19]" चेति सूत्रद्वयं प्रणीतम् । अत्रेदमवधेयं यदुपर्युक्तेन पाणिनीयसूत्रद्वयेन साक्षात् प्रकृतिभावो न स्यात् । उक्तसूत्रद्वयेनादौ प्रगृह्यसंज्ञा भवेत्, ततो येषां प्रगृह्यत्वं विद्यते तेषामेव प्रकृतिभावो भवति " प्लुतप्रगृह्या अचि नित्यम् [20] " इति सूत्रेण । कलापकारेण विना प्रगृह्यसंज्ञां निपातानां प्रकृतिभावः कृतः । एतेन ज्ञायते यत् पाणिनीयसूत्रद्वारा प्रकृतिभावज्ञानं कष्टसाध्यम् । तदपेक्षया कलापीयसूत्रद्वारा स्पष्टतया प्रतीयते यत् अतःनिपातानां प्रकृतिभावकरणमतीवसरलम् ।अतः स्पष्टतया प्रतीयते यत् पाणिनीयप्रक्रियायां गौरव तथा कलापीयप्रक्रियायां लाघवं च दरीदृश्यते । अत्र ध्यातव्यं यत् कलापकारेण ओदन्तानां निपातानामेव प्रकृतिभावः स्वीकृतः । पाणिनिना न केवलम् ओदन्तानां निपातानामपि तु सम्बुद्धिनिमित्तकस्य ओकारस्य प्रकृतिभावः प्रदर्शितः "सम्बुद्धौ शाकलस्येतावनार्षे[21]" इति सूत्रेण इति उभयोर्वैलक्षण्यम् । मन्येऽत्र लाघवार्थं सरलार्थं च कलापकारेणतूष्णीम्भावोऽवलम्बित इति ।

**इदानीं प्रकृतिभावविषये** अन्ये नियमा एवमुच्यन्ते यत् कलापकारेण शर्ववर्मणा " द्विवचनमनौ[22]" इति सूत्रद्वारा द्विवचनं यदनौभूतं तत् स्वरे परे प्रकृत्या तिष्ठति इत्युक्तम् । तेन द्विवचने प्रायशः ईकार ऊकार एकारश्च विद्यन्ते । अतः ईकारान्तामूकारान्तामेकारान्तानां च शब्दानां प्रकृतिभावो भवति । किन्तु केचन शब्दाः सन्ति येषां द्विवचने ई ऊ ए चेति वर्णा न सन्ति । यथा आवां युवां चेति शब्दद्वयम् । यत एतच्छब्दद्वयस्यापि प्रकृतिभावः सम्भवति कलापमते । अत्र कलापनये अनौ इत्यत्र नञ् पर्युदासार्थे । स च पर्युदासोऽस्ति सादृश्यग्राहकः । सादृश्यं द्विविधं रूपकृतमर्थकृतञ्च । तत्राद्यमसम्भवि औकाररूपस्याकारस्यान्यत्र अविद्यमानात् । अर्थकृतसादृश्यं सम्भवत्येव द्विवचनान्तरस्यापि द्वित्वार्थप्रतिपादन-सामर्थ्यात् । तेन तत्र प्रकृतिः न स्यात् । पाणिनिना तु एषा रीतिर्नानुसृता । तेन उक्तविषये सूक्ष्मातिसूक्ष्मविचारद्वारा "ईदूदेद्विवचनं प्रगृह्यम्[24]" इति एकमेव सूत्रं प्रणीतम् । ईदूदेदन्तस्य द्विवचनस्यैव प्रगृह्यत्वं स्यादिति स्पष्टतो निदगितम् । तेन आवां युवाम् इत्यनयोरीकारान्तत्वाभावाद् ऊकारान्तत्वाभावाद् एकारान्तत्वाभावाच्च प्रकृतिभावो न भवति । मन्ये लोके प्रयोजनाभावात् कलापकारेण एवं सूक्ष्मातिसूक्ष्मविचारो न कृतः । ततो " बहुवचनममी[25]" इति सूत्रं शर्ववर्माचार्येण प्रणीतम् । बहुवचनं यदमीति रूपं तत् स्वरे परे प्रकृत्या तिष्ठतीति तत्सूत्र वृत्तिः [26] । अमी अश्वा इत्युदाहरणमत्र । पाणिनिनाष्टाध्याय्यामेतद्विषये " अदसो मात्[27]" इति सूत्रं प्रणीतम् । अत्रेतदपि वक्तव्यं यदादौ " अदसो मात्[28]" इति सूत्रेण प्रगृह्यत्वं, ततः " प्लुतप्रगृह्या अचि नित्यम्[29]" इति सूत्रेण तस्य प्रकृति भावः । अतोऽन वक्तुं शक्यते यत्प्रक्रियादृष्ट्या कलापकारस्य लाघवं प्रसिद्धम् । ततः "अनुपदिष्टाश्च[30] " इति कलापीयसूत्रेण अपि प्लुतस्यापि प्रकृतिभावो भवति । महावैयाकरण- पाणिनिनापि "प्लुतप्रगृह्या अचि नित्यम्[31]" इति सूत्रेण प्लुतस्य प्रकृतिभावः कृतः इति उभयोः साम्यम् । अनेदं वक्तव्यं यत् शर्ववर्मणा लोकोपचाराद् वर्णसमाम्नायाः संगृहीताः । अतो वर्णसमाम्नायेषु

प्लुतवर्णा न सन्ति लोकेऽप्रयोजनीयत्वात् । परं तदीयशास्त्रे प्रयोजनीयत्वात् प्लुतवर्णाः अङ्गीकृताः व्याख्याकारैः परवर्तिनि काले । आदावेव प्लुता यदि वर्णसमाम्नायेषु स्वीकृताः स्युः तर्हि तत्कार्यं सुकरं भवेत् । पाणिनिना अणुदित्सूत्रप्रयोगद्वारा एते वर्णा अङ्गीकृताः । एतेन कलापकारस्य । अत्राधिकं वक्तव्यं तत् पाणिनिना प्लुतस्य वर्णस्यत्रिमात्रिकत्वं स्वीकृतम् । एतद्विषये श्रुतबोधवचनमनुसन्धेयम

एकमात्रो भवेद् ह्रस्वो द्विमात्रो दीर्घ उच्यते । त्रिमात्रस्तु भवेत् प्लुतो व्यञ्जनञ्चार्धमात्रकम् ॥ इति

परन्तु कलापचन्द्रकारसुषेणविद्याभूषणेन नास्ति कोऽपि भेदः प्लुतस्य दीर्घे तस्य अन्तर्भावात् इति अभिमतम् । तन्मते प्लुतो हि वर्णत्वेन ज्ञायते न तु धर्मत्वेन । त्रिमात्रिकस्य प्लुतस्य क्वचिदपि स्वरूपेण अनुपदिष्टत्वात् तस्य तिमात्रिकत्वं न सिद्धम् । तथाहि तेन निगदितं "ननु उदात्तादिभेदा अपि व्यक्त्या अनुपदिष्टा इति तेषामपि प्रकृतिभावः ? सत्यम्, ते हि तेषां वर्णानां धर्मा इति । प्लुतस्तु वर्ण एव न तु धर्मः । त्रिमात्रो हि प्लुत इति हेमकरः । तन्न । प्लुत एव उदात्तादिविशिष्टानामपि वर्णानां स्वरूपेण उपदेशाभावात् केवलत्वादिनैव तदुपदेशः । न हि वर्णसमाम्नाये या व्यक्तय उपदिष्टास्तासामुदात्तादयो धर्मा युगपत् सम्भवन्ति, एकस्य विरुद्धानेक-धर्मासम्भवात् । तस्मात् त्रयानुपदिष्टस्यैवात्र ग्रहणमिष्टम् । त्रिमात्रस्तु न क्वचिदपि स्वरूपेणोपदिष्ट इति न दोषः[33]" इति

पाणिनिना तु उक्तमतं नाङ्गीकृतम् । तेन सर्वत्रैव प्लुतस्य त्रिमात्रिकत्वमुक्तमिति तयोः विसदृशत्वम् । कलापचन्द्रकारेण सुषेणविद्याभूषणेनस्वरूपेणानुपदेश इत्युक्त्वा प्लुतो नाङ्गीकृतः । किन्तु प्रातिशाख्यादिग्रन्थेषु प्लुतः त्रिमात्रिकरूपेण पठितः । तथाहि सूत्रितं

मात्रा ह्रस्वस्तावदवग्रहान्तरं द्वे दीर्घस्तिस्त्रः प्लुत उच्यते स्वरः ।

अधः स्विदासी३दुपरिस्विदासी३दर्थे प्लुतिर्भीरिव विन्दती३ त्रिः ॥[३४] इति

एतेन कलापचन्द्रकारवचनं विपश्चिद्भिर्भाव्यम् । मन्ये तच्छास्त्रे प्रयोजनात्तेनेवं कृतम् ।

**अन्त्यटीका**

1. **अष्टाध्यायी (सूत्रम् – १.१.२)**
2. **कातन्त्रव्याकरणम् (सूत्रम् – ३.८.३४ )**
3. **तदेव (३.८.३४ इति सूत्रस्य कातन्त्रवृत्तिः, पृष्ठाङ्कः – ४८५)**
4. **अष्टाध्यायी (सूत्रम् – ६.१.८७)**
5. **तदेव (सूत्रम् – १.१.५१ )**
6. **निरुक्तम् (१०.७.२)**
7. **अष्टाध्यायी (सूत्रम् – १.१.१ )**
8. **कातन्त्रव्याकरणम् (सूत्रम् – ३.८.३५)**
9. **तदेव (३.८.३५ इति सूत्रस्य कातन्त्रवृत्तिः, पृष्ठाङ्कः – ४८७)**
10. **अष्टाध्यायी (सूत्रम् – ६.१.८८ )**
11. **तदेव (सूत्रम् – १.१.६४)**
12. **वार्तिकम् (३६३२)**
13. **कातन्त्रव्याकरणम् (सूत्रम् – १.२.२)**
14. **" अतएव चकारस्यानुक्तसमुच्चयार्थत्वात् लोकोपचाराद्वा सकारस्यापि लोप इति कातन्त्रव्याकरणम् (कातन्त्रवृत्तिपञ्जिकाटीका, पृष्ठाङ्कः – १२९)**
15. **कातन्त्रपरिशिष्टम् (१९)**
16. **कातन्त्रव्याकरणम् (सूत्रम् – १.३.१)**
17. **तदेव (१.३.१ इति सूत्रस्य कातन्त्रवृत्तिः, पृष्ठाङ्कः- १७६)**
18. **अष्टाध्यायी (सूत्रम् –**
19. **तदेव (सूत्रम् – १.१.१४)**
20. **तदेव (सूत्रम् – ६.१.१२५)**
21. **तदेव (सूत्रम् – १.१.१६)**
22. **कातन्त्रव्याकरणम् (सूत्रम् – १.३.२)**
23. **तदेव (१.३.२ इति सूत्रस्य कातन्त्रवृत्तिः, पृष्ठाङ्कः-१८२)**
24. **अष्टाध्यायी (सूत्रम् – १.१.११.)**
25. **कातन्त्रव्याकरणम् (सूत्रम् – १.३.३)**

26. **तदेव (१.३.३ इति सूत्रस्य कातन्त्रवृत्तिः, पृष्ठाङ्कः- १८८)**
27. **अष्टाध्यायी (सूत्रम् – १.१.१२)**
28. **तदेव**
29. **तदेव (सूत्रम् – ६.१.१२५)**
30. **कातन्त्रव्याकरणम् (सूत्रम् – १.३.४)**
31. **अष्टाध्यायी (सूत्रम् ६.१.१२५) –**
32. **श्रुतबोध: (श्लोकः -३)**
33. **कातन्त्रव्याकरणम् (१.३.४ इति सूत्रस्य कलापचन्द्रटीका, पृष्ठाङ्कः-१९१)**
34. **ऋग्वेदप्रातिशाख्यम् (सूत्रम् – १.१६)**

## सहायकग्रन्थसूची

१.कालिदासः, *श्रुतबोधः*, पण्डितकुलपतिना वि.ए. उपाधिधारिणा श्रीमजीवानन्दविद्यासागर-भट्टाचार्येण विरचितया व्याख्यया समलङ्कृतः, तदात्मजाभ्यां पण्डितश्री-आशुबोधविद्याभूषण पण्डितश्रीनित्यबोधविद्यारत्नाभ्यां परिवर्द्धीटीकया प्रकाशितः,कलिकाता, वाचस्पत्ययन्त्रे मुद्रितः, १९१३ पञ्चमसंस्करणम् ।

२.यास्कः, निरुक्तम्, खण्डः१-४, वङ्गानुवादसहितम्, अमरेश्वरठाकुरेण प्रकाशितम्, कलिकाताविश्वविद्यालयः.१०५५-१९७०

३.जिज्ञासुः, पण्डितब्रह्मदत्तः, *अष्टाध्यायीसूत्रपाठः*, हरियाणा सौनीपत, रामकापुस्ट-मुद्रणालयः, १९७ प्रथमप्रकाशः ।

४.यास्कः,*निरुक्तम्*, खण्ड:१-४, वङ्गानुवादसहितम्,अमरेश्वरटाकुरेण प्रकाशितम्,- कलिकाताविश्वविद्यालयः, १०५५-१९७० ।

५.शर्ववर्मा, *कातन्त्रव्याकरणम्*, उग्रभूति भट्टभाष्यसहितम्, रामशङ्करमिश्रेण प्रकाशितम्, नवदेहली,वैदिकप्रेस्, १९८९ ।

६.शर्ववर्मा,*कातन्त्रव्याकरणम्*,चतुष्टयवृत्तिसहितम्,गुरुनाथविद्यानिधिना प्रकाशितम्,कलिकाता,प्याट्रियट- प्रेस्,१३१९ बङ्गाब्दः ।

७.शर्ववर्मा,*कातन्त्रव्याकरणम्*,वृत्तिटीकापञ्जिकाकलापचन्द्रसमीक्षाटीकाचतुष्टयसहितम्,जानकीद्विवेदिनाप्रकाशितम्, वाराणसी,सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, १९९७ ।

८.शौनकः, *ऋक्प्रातिशाख्यम्*, उवटभाष्यसहितम्, युगलकिशोरव्यासेन प्रभुदत्तशर्मणा च प्रकाशितम्, वाराणसी, मोतिलालवाराणसीदासः, १९६५ द्वितीयप्रकाशः ।

**********

Volume XXI : January to June – 2023, ISSN 2250-1711
Journal of Veda Samskrita Academy [Recognised in the UGC-CARE List]

# कारक-विभक्तिषु विवक्षाप्रसङ्गः

**Jayanta Mandal**
Assistant Professor, Dept. of Sanskrit
Dukhulal Nibaran Chandra College
Aurangabad, Murshidabad, West Bengal- 742201
Contact No. : 9593161262 / 8609553162
E-mail : jmandal47@gmail.com

*प्रबन्धसारः*

कार्यसाधनव्यापारे क्रियया सह यस्य प्रत्यक्षः समन्धोऽस्ति तत् कारकम्।यया प्रातिपदिकस्य संख्यायाः,कारकस्य ,सम्बन्धस्य च प्रतीतिर्भवति सा विभक्तिः।संस्कृतव्याकरणे षडविधेभ्यः कारकेभ्यः षडविधाः विभक्तयः निर्दिष्टाः वर्तन्ते ।क्रमदीश्वरविरचिते संक्षिप्तसारग्रन्थे 'विवक्षावशात् कारकाणि भवन्ती'ति सूत्रं प्राप्यते ।वक्तुरिच्छावशात् कारकाणि प्रयुक्तानि भवन्तीति सुत्रस्यार्थः ।अर्थात् व्याकरणे येषु स्थानेषु कारकाणि विहितानि सन्ति ,तद्व्तिरिक्तेषु स्थानेष्वपि वक्ताइच्छानुसारं कारकाणि प्रयोगं कर्तुं पारयति ।विवक्षायाः अपि भित्तिरस्तिः,लोकव्यवहारतः सा भित्तिः । 'विवक्षा च कुलबधूरिव न लौकिकीं प्रयोगमर्यादाम् अतिक्रामति'।व्याकरणशास्त्रे कविविवक्षायाः स्वीकृतिहेतुः नियमवहिर्भूतस्य प्रयोगस्य शुद्धता अपि स्वीकृतासीत् ।निरंकुश-कवीनां भाव-भागीरथ्याः स्वच्छन्द-प्रवाहः स्तिमितः न भवेदिति भावनातः कारक-विभक्तौ इयं विवक्षा परक्षोरूपेण भाष्यकारसमर्थिता व्याकरणसिद्धा च ।

**मुख्यशब्दाः**–कारकम् ,विभक्तिः,विवक्षा का,विवक्षायाः भित्तिः,कारक-विभक्तौ विवक्षा ।

## कारक-विभक्तिषु विवक्षाप्रसङ्गः

कर्तृ-कर्म-करण-सम्प्रदान-अपादान-अधिकरण-भेदात् षट् कारकाणि सन्ति।प्रथमा-द्वितीया-तृतीया-चतुर्थी-पञ्चमी-षष्ठी-सप्तमी भेदात् विभक्तयः तु सप्त।कार्यसाधनव्यापारे क्रियया सह यस्य प्रत्यक्षः समन्धोऽस्ति तत् कारकम् –"**क्रियान्वयि कारकम्**"।यया प्रातिपदिकस्य संख्यायाः,कारकस्य ,सम्बन्धस्य च प्रतीतिर्भवति सा विभक्तिः –**"संख्याकारकादिबोधयित्री विभक्तिः"**।संस्कृतव्याकरणे षडविधेभ्यः कारकेभ्यः षडविधाः विभक्तयः निर्दिष्टाः वर्तन्ते ।यथा-

| कारकम् | विभक्तिः | विभक्तिविधायकम् सूत्रम् |
|---|---|---|
| कर्तृकारकम् | प्रथमा | प्रातिपदिकार्थ-लिङ्ग-परिमाण-वचन-मात्रे प्रथमा (अष्टाध्यायी -2/3/46)। |
| कर्मकारकम् | द्वितीया | कर्मणि द्वितीया (अष्टाध्यायी -2/3/2)। |
| करणकारकम् | तृतीया | कर्तृकरणयोस्तृतीया (अष्टाध्यायी -2/3/18)। |
| सम्प्रदानकारकम् | चतुर्थी | चतुर्थी सम्प्रदाने (अष्टाध्यायी -2/3/13)। |
| अपादानकारकम् | पञ्चमी | अपादाने पञ्चमी (अष्टाध्यायी -2/3/28)। |
| अधिकरणकारकम् | सप्तमी | सप्तम्यधिकरणे च (अष्टाध्यायी -2/3/36)। |

सम्बन्धपदे षष्ठी बिभक्तिः स्यात् ।

### विवक्षा का भवति ?

क्रमदीश्वरविरचिते संक्षिप्तसारग्रन्थे 'विवक्षावशात् कारकाणि भवन्ती'ति सूत्रं प्राप्यते ।तादृशं सूत्रं पाणिनीय-अष्टाध्यायीग्रन्थे नोपलभ्यते

।वक्तुरिच्छावशात् कारकाणि प्रयुक्तानि भवन्तीति सुत्रस्यार्थः ।अर्थात् व्याकरणे येषु स्थानेषु कारकाणि विहितानि सन्ति ,तद्वतिरिक्तेषु स्थानेष्वपि वक्ताइच्छानुसारं कारकाणि प्रयोगं कर्तुं पारयति ।वक्तुमिच्छा=विवक्षा(स्त्री)। सनन्तवचधातोरप्रत्ययेन(वच्-सन्-भावे-अ,आप्) निष्पन्नमिदं पदम् । यथा - विवक्षावशात् कारकाणि भवन्ति । इति व्याकरणटीका ॥ शक्तिः । यथा, --

प्रकृत्यर्थोऽपि खल्वेतदुद्दिश्यस्य विशेषणम् । संख्यया तुल्यनीतित्वादविवक्षां प्रपद्यते ॥[1]

अत्र 'विवक्षा' पदेन न तु या कापि इच्छा अपितु प्रसिद्धकवेः शिष्टजनानां वा इच्छा वोधव्या ।व्याकरणशास्त्रे यत्र यत्कारकं निर्दिष्ठमस्ति तत्र विवक्षावशतः अन्यकारकं भवितुं शक्यते ।

**विवक्षायाः भित्तिः**

विवक्षावशात् कारकाणि भवन्ति इत्युक्ते यत्र तत्र कारकान्तरस्य प्राप्तिर्भवति।तर्हि कारकविधायकसूत्रस्य निर्माणविषये प्रश्नाः उदिताः भविष्यन्ति।अस्य प्रश्नस्य उत्तरं दीयते -विवक्षायाः अपि भित्तिरस्तिः,लोकव्यवहारतः सा भित्तिः । 'विवक्षा च कुलबधूरिव न लौकिकीं प्रयोगमर्यादाम् अतिक्रामति'।[2]

शक्तिः कारकम् ।शक्तयश्च वस्तुनः विविधाः भवन्ति ।यत्र या शक्तिः लक्ष्यते तत्र तादृशकारकव्यवहारोऽपि दृश्यते ।यथा - स्थाली पचति ,स्थाल्या पचति,स्थाल्यां पचति।स्थाली पाकक्रियायाः आधारः भूत्वापि वक्तुर्मनसि यदि स्थाल्याः कर्तृत्वरूपं अथवा करणत्वरूपं प्रस्फुटितं भवति तर्हि तत्र 'स्थाली'(कर्ता) अथवा 'स्थाल्या'(करणम्) पदस्य प्रयोगः भवितुं शक्यते ।अतोच्यते – ''स्थाली पचति,स्थाल्यां पचति ।.....विवक्षायाश्च नियतत्वात् सत्यप्यपाये धनुषा विध्यति इत्येव,न धनुषो विध्यति इति ।कंसपात्र्यां भुङ्क्ते इत्येव ,न कंसपात्र्या भुङ्क्ते इति''।[3] धनुषा विध्यति इत्यत्र अपादानत्वस्य व्यापारोऽस्ति ।तत्सत्त्वेऽपि करणत्वविवक्षायां तस्य प्रयोगः क्रियते।तादृशैव'कंसपात्र्या भुङ्क्ते' न भवेत् ।

व्याकरणशास्त्रे कविविवक्षायाः स्वीकृतिहेतुः नियमवहिर्भूतस्य प्रयोगस्य शुद्धता अपि स्वीकृतासीत् । अर्थावबोधे बाधाहीनत्वात् बक्तुः एतादृशे प्रयोगे स्वाधीनता स्वीक्रियते।वक्ता विवक्षावशतः'स्थाली' पदं कर्मणि ,सम्प्रदाने अथवा अपादाने प्रयोगं कर्तुमिच्छति चेत् अर्थासङ्गतिहेतोः अस्य प्रयोगः अशुद्धः भवति।अतएव विभक्तिप्रयोगेषु वक्तुः स्वाधीनता तावत्पर्यन्तं सहनीया समर्थनीया च यावत्पर्यन्तं स्वेच्छाचारितायां न पर्यावसिता भवति ।

वैयाकरणशिरोमणिना भट्टोजीदीक्षितमहोदयेन वैयाकरणसिद्धान्तकौमुदीग्रन्थे कारकप्रकरणे प्रथमा-द्वितीयादि तथा च कर्तृ-कर्मादि क्रममनुसृत्य कारक-विभक्तेरुपस्थापनं क्रियते ।अस्माभिरपि अस्मिन् शोधपत्रे तादृशान् क्रमान् अनुसृत्य विवक्षाप्रसङ्गस्य व्याख्यानं दास्यते।

**"अकथितञ्च"**(1/4/51) इति सूत्रेण कर्मकारकम् भवति ।अस्य सूत्रस्य व्याख्यायां आचार्येण दीक्षितेन उच्यते – 'अपादानादिविषेशैः अविवक्षितं कारकं कर्मसंज्ञं स्यात्'।अनेन सूत्रेण वक्तुरपादानादिरविवक्षातः अपादानादिकारकं कर्मसंज्ञां प्राप्नोति । प्रकृतकारकस्य अकथनत्वात् अकथितकर्मसंज्ञा ।यथा -गोपः गां **दुग्धं** दोग्धि -अत्र 'दोग्धि' क्रियायाः कर्ता 'गोपः'।तस्य ईप्सितमं 'दुग्धं'=कर्म । गोभ्यः दुग्धमायति । अतः गवि अपादानत्वम् अभिप्रेतमासीत् ।किन्तु वक्तुरपादानादिरविवक्षात्गोःकर्मसंज्ञा स्यात् ।

अत्र प्रश्नः समुदेति -अन्यकारकेण उपेक्षितं चेत् सर्वत्रापि कर्मसंज्ञा भवेद्वा?नैव तत् ।अत्र एका तालिका दीयते –

दुह्याच्-पच्-दण्ड्-रुधि-प्रच्छि-चि-ब्रू-शासु-जि-मन्थ्-मुषाम् । कर्मयुक् स्यादकथितं तथा स्यान्नी-हृ-कृष्-वहाम् ।।[4]

अर्थात् दुहादीनां द्वादशानां,नीप्रभृतीनां चतुर्णां कर्मणा यद् युज्यते तदेव अकथितं कर्म इति परिगणनं कर्तव्यम् इत्यर्थः ।[5] एतेषां धातूनां प्रयोगे अपादानत्वादेरविवक्षा न तु वैकल्पिकी अपितु आवश्यिकी कर्तव्या।सम्प्रति निम्ने उदाहरणानां पर्यालोचनं क्रियते –

| धातवः | धातुयोगे उदाहरणम् | अकथितकर्म | अप्रधानकर्मणि अविवक्षितकारकम् |
|---|---|---|---|
| दुह् | गोपः **गां**दुग्धं दोग्धि | गाम् | अपादानस्य अविवक्षायां कर्मणः च विवक्षायां कर्मत्वम् |
| याच् | वामनः **बलिं** वसुधां याचते। | बलिम् | अपादानस्य अविवक्षायांकर्मणः च विवक्षायां कर्मत्वम् |
| पच् | सीता **तण्डूलान्** ओदनं पचति। | तण्डूलान् | करणस्य अपादानस्य वा अविवक्षायां कर्मणः च विवक्षायां कर्मत्वम् |
| दण्ड् | नृपः **तस्करान्** शतं दण्डयति। | तस्करान् | अपादानस्य अविवक्षायां कर्मणः च विवक्षायां कर्मत्वम् |
| रुध् | गोपः **व्रजम्** अवरुणद्धि गाम् | व्रजम् | अधिकरणस्य अविवक्षायां कर्मणः च विवक्षायां कर्मत्वम् |
| प्रच्छ् | पथिकः **बालकं** मार्गं पृच्छति। | बालकम् | अपादानस्य अविवक्षायां कर्मणः च विवक्षायां कर्मत्वम् |
| चि | कृष्णा **वृक्षं** फलानि अवचिनोति | वृक्षम् | अपादानस्य अविवक्षायां कर्मणः च विवक्षायां कर्मत्वम् |
| ब्रू | गुरूः **शिष्यं** धर्मं ब्रूते। | शिष्यम् | सम्प्रदानस्य अविवक्षायां कर्मणः च विवक्षायां कर्मत्वम् |
| शास् | उपाध्यायः **वालकं** पाठं शास्ति | बालकम् | सम्प्रदानस्य अविवक्षायां कर्मणः च विवक्षायां कर्मत्वम् |
| जि | रमेशः **महेशं** शतं जयति। | महेशम् | अपादानस्य अविवक्षायां कर्मणः च विवक्षायां कर्मत्वम् |
| मन्थ् | इन्द्रः **सुधां** क्षीरनिधीं मथ्नाति। | सुधाम् | अपादानस्य अविवक्षायां कर्मणः च विवक्षायां कर्मत्वम् |
| मुष् | चौरः **देवदत्तं** शतं मृष्णाति। | देवदत्तम् | अपादानस्य अविवक्षायां कर्मणः च विवक्षायां कर्मत्वम् |
| नी | गोपालः **अजां** नगरं नयति। | अजाम् | अधिकरणस्य अविवक्षायां कर्मणः च विवक्षायां कर्मत्वम् |
| हृ | वालकः **छागं** ग्रामं हरति | छागम् | अधिकरणस्य अविवक्षायां कर्मणः च विवक्षायां कर्मत्वम् |
| कृष् | कर्षकः **भूमिं** शस्यं कर्षति | भूमिम् | अपादानस्य अधिकरणस्य वा अविवक्षायां कर्मणः च विवक्षायां कर्मत्वम् |
| वह् | यज्ञदत्तः **ग्रामं** भारं वहति | ग्रामम् | अधिकरणस्य अविवक्षायां कर्मणः च विवक्षायां कर्मत्वम् |

'अकथितं कर्म' इति संज्ञा अर्थमाश्रित्य भवेत् –'**अर्थनिबन्धनेयं संज्ञा**'।दुहादीनां समार्थकानां धातूनां प्रयोगे अपि अकथितकर्म भवति ।यथा-**बलिं**भिक्षते वसुधाम्-इत्यत्र भिक्ष्-धातुः याञ्चार्थकः ।अतएव भिक्ष्-धातोर्योगे अकथितकर्मत्वं स्वीकृतमस्ति ।

मतमिदं न भाष्यकारसम्मतम् ।भाष्ये 'दुह्याच्'इत्यादि तालिकास्थाने निम्नोक्त पाठः क्रियते भाष्यकारैः –

दुहियाचिरुधिप्रच्छिभिक्षिचिञामुपयोगनिमित्तमपूर्वविधौ । ब्रूविशासिगुणेन च यत् सचते तदकीर्तितमाचरितं कविना ।।

अत्र दृश्यते याच् भिक्ष् चेति धातुद्वयस्य ग्रहणमभवत् ।'**अर्थनिबन्धनेयं संज्ञा**'इति सूत्रंमान्यं चेत् भाष्यकारेण समार्थकधातुद्वयस्य अर्थं न गृहीतम् ।अतः **अर्थनिबन्धनेयं संज्ञा**'न तु भाष्यकारेण आदृयते ।

**"स्वतन्त्रः कर्ता"**(1/4/54)अस्य सूत्रस्य व्याख्याप्रसङ्गे भट्टोजीदीक्षितमहोदयस्याभिमतम्-'क्रियायां स्वातन्त्र्येण विवक्षितः अर्थः कर्ता स्यात्'[6] इति ।क्रियायाः आश्रयः कर्ता ,अन्य कारकाणामपि नियन्ता ,अतएव कर्ता स्वतन्त्रः । 'अमात्यानां राज्ञा सह समवाये पारतन्त्र्यम्,व्यवये स्वातन्त्र्यम्'।[7] केवलं चेतनपदार्थाः कर्मणि सक्रियाः ,नियामकाः,स्वतन्त्राः भवितुं शक्नुवन्ति ।न तु अचेतनाः ।

यद्येवं भवेत्तर्हि 'स्थाली पचात','काष्ठानि पचन्ति' इत्यादिस्थले अचेतन 'स्थाली' अथवा 'काष्ठानि' पदस्य कर्तृत्वं कथं मान्यम् ? एतौ पदौ पाकक्रियायाः आधारौ उपकरणे वा ।अतः एतयोः पदयोः कर्तृत्वस्य असम्भवात् अधिकरणत्वम् करणत्वंवा ग्रहणीयम् ।अर्थात् चेतनं भवेत् अचेतनम् वा,प्रधानस्य योग्यता तिष्ठेत् न वा,प्रधानरूपेण ईप्सितपदार्थः 'कर्ता' भवेदिति भावः।यत्र पदार्थः अचेतनः भूत्वापि कर्तृरूपेण व्यवह्रियते तत्र वक्त्रा कर्तुः आरोपः भवति ।एतादृशेषु क्षेत्रेषु विवक्षा अर्थात् वक्तुरिच्छा हि प्रमापका ।

**"कर्मादीनामपि सम्बन्धमात्रविवक्षया षष्ठ्येव"** इति दीक्षितवचनानुसारं कर्मादिषु कारकेष्वपि यदिसाधारणसम्बन्धमात्रस्य विवक्षा कल्प्यते तर्हि तत्र षष्ठी विभक्तिः भवति ।क्षेत्रेऽस्मिन् कारकसम्बन्धस्य अभिप्रेतत्वात् कर्मादिकारके द्वितीयाविभक्तिः,कारकम् उपेक्षितं चेत् क्रियया सह साधारण-संयोगहेतोः '**कारक-शेषे षष्ठी**' भवति ।'कारक-शेषे षष्ठी' अस्याः संज्ञायाः'शेष-विवक्षया षष्ठी' इतिनामान्तरमस्ति ।वक्तुः शेष-सम्बन्धस्य साधारण-सम्बन्धस्य वा अभिप्रेतत्वात् '**शेष-विवक्षा**' इति कथ्यते।वक्तुरिच्छावशतःप्रत्येकेषु कारकेषु खलु 'शेषः' भवितुं शक्यते।यथा-

- **कर्तरि शेषः** - **सतां** गतम् ।कर्तृकारके विवक्षिते '**सद्भिः** गतम्' अर्थात् 'अनुक्ते कर्तरि' तृतीया भवेत् । कर्तृकारकस्य अविवक्षायां**कर्तृशेषो**ऽभवत् ।अत्र गमनक्रियया सह सज्जनस्य न तु कर्तृत्वसम्बन्धः अपितु साधारणसम्बन्धमात्रस्य द्योतनं वर्तते ।अतएव 'सतां' **कर्तरि शेषे षष्ठी**।

  **प्रासङ्गिकं सूत्रम्** –*अधिकरणवाचिनश्च(2/3/68)*

- **कर्मणि शेषः** - **मातुः** स्मरति । भजे शम्भोः**चरणयोः**।एधो **दकस्य**उपस्कुरुते।आलोच्योदाहरणत्रये 'माता' ,'चरणौ','दकम्' कर्मकारकम्। अनभिप्रेते कर्मकारके **'मातुः','चरणयोः','दकस्य'** पदत्रये **'कर्मशेषे'** षष्ठी अभवत् । कर्मणः अभिप्रेतत्वात् 'मातरम्' ,'चरणौ','दकम्' इत्थं पदत्रये कर्मणि द्वितीया स्यात् ।

  **प्रासङ्गिकं सूत्रम्** –*अधिगर्थदयेशां कर्मणि(2/3/52),रुजार्थानां भाववचनानामज्वरेः(2/3/54), आशिषि नाथः(2/3/55), जासि-निप्रहण-नाट-क्राथ-पिषां-हिंसायाम्(2/3/56), व्यव-हृ-पणोः समर्थयोः(2/3/57), दिवस्तदर्थस्य(2/3/58), कृञः प्रतियत्ने(6/4/34)*

- **करणे शेषः** -**फ़लानां** तृप्तः ।**सर्पिषो** जानीते । अत्र **फ़लम् ,सर्पिश्च** करणकारकम्।किन्तु करणत्वस्य अविवक्षायां **फ़लानां, सर्पिषो**चेतिपदद्वये **'करणशेषे'** षष्ठी अभवत् ।अभिप्रेते करणे 'फ़लैः','सर्पिषा' इत्थं करणे तृतीया स्यादिति ।

  **प्रासङ्गिकं सूत्रम्** -*ज्ञोऽविदर्थस्य करणे(2/3/51)*

- ❖ **सम्प्रदाने शेषः -अज्ञातकुलशीलस्य** वासो देयो न कस्यचित् ।अस्मिन् उदाहरणे 'अज्ञातकुलशीलः' दानक्रियायाः सम्प्रदानम् ,किन्तु सम्प्रदानस्य अविवक्षावशतः**'सम्पदान-शेषे'** षष्ठी अभवत् ।सम्प्रदानस्य विवक्षावशात् 'अज्ञातकुलशीलाय' सम्प्रदाने चतुर्थी स्यात् ।
- ❖ **अपादाने शेषः - तावद्भयस्य** भेतव्यम् यावद्भयमनागतम् ।'भयम्' अत्र अपादानकारकम् ।परन्तु वक्तुरपादानत्वस्य अनभिप्रेतत्वात् 'भयस्य' **'अपादान-शेषे'** षष्ठी अभवत् ।अपादानत्वे 'भयात्' पञ्चमी भविष्यति ।
- ❖ **अधिकरणे शेषः -द्विर्दिवसस्य** न भुङ्क्ते ब्राह्मणः ।दिवसोऽस्ति कालाधिकरणम्,अतएव तत्र 'अधिकरणे सप्तमी' अर्थात् 'दिवसे' भवेत्।किन्तु अत्र अधिकरणत्वं वक्तुरनभिप्रेतम् ।तस्मात् दिवसस्य **'अधिकरण-शेषे'**षष्ठी स्यात् ।

**प्रासङ्गिकं सूत्रम्** –*कृत्वोऽर्थप्रयोगे कालेऽधिकरणे(2/3/64)*

अतएव पदद्वयोर्मध्ये वक्तुरिच्छावशात् यत्र साधारण-सम्बन्धस्य संयोगमात्रस्य वा प्राबल्यम् अनुभूयते तत्र कारकस्य उपेक्षाहेतुः**'कारक-शेषे'** षष्ठी भवतीति दीक्षितोक्तस्य वचनस्य अभिप्रायः ।

**षष्ठ्यतसर्थप्रत्ययेन(2/3/30)**इति सुत्रेण अतसर्थकप्रत्यययोगे[8] दिक्-शब्देभ्यः षष्ठी स्यात् ।किन्तु कस्मिन्नपि स्थाने अतसर्थ-प्रत्ययान्तशब्दयोगे पञ्चम्यपि दृष्टिपथे आयाति ।यथा -**कूर्परादधः** कफोनि ।सुभाषितं हारि विशत्यधो **गलान्न** दुर्जनस्य ।अतसर्थे 'असि' प्रत्ययान्तः(अधर+असि=अधः) 'अधः' शब्दः । अस्य शब्दस्य योगे 'कुर्परस्य' 'गलस्य' चेति पदद्वये षष्ठी समिचीना आसीत् ।किन्तु उदाहरणद्वये पञ्चमी विभक्तेर्प्रयोगोऽस्ति ।अतएव 'अतसर्थकप्रत्यययोगे' सूत्रनियमे अशुद्धं चेदपि वैयाकरणसम्मते परिभाषानुसारेपञ्चमीसिद्धा।मतान्तरे 'कुर्परात्' इत्यत्र **अपादान-विवक्षया पञ्चमी** ।वस्तुतः एते अपादानमभूत्वापि वक्तुरिच्छावशात् अपादानम्,तस्मात् पञ्चमी । किन्तु यत्र तत्र अस्याः परिभाषायाः विवक्षायाः वा प्रयोगः न समर्थनीयः ।

**न लोकाव्यय-निष्ठा-खलर्थ-तृणाम्(2/3/69)**-इति सूत्रेण एषां प्रयोगे कर्तरि कर्मणि च षष्ठी न स्यात् ।अस्य निषेधसूत्रस्य प्रभावः केवलं कारक-षष्ठ्यां प्रयुक्तव्यः,न तु सम्बन्ध-विवक्षायाम् ।अतः दीक्षितेनोच्यते-'सर्वोऽयं कारक-षष्ठ्याः प्रतिषेधः ।शेषे षष्ठी तु स्यादेव'[9]।यथा- **ब्राह्मणस्य** कुर्वन् ,**नरकस्य** जिष्णुः।कुर्वन् शब्दः भृत्यार्थकः,शतृप्रत्ययनिष्पन्नश्च ।शतृयोगे षष्ठीनिषिद्धत्वेऽपि 'ब्राह्मणस्य' पदे षष्ठी स्यात् ।तद्वत् 'जिष्णुः' उकारान्तकृदन्तशब्दत्वेऽपि तद्योगे 'नरकस्य' पदे षष्ठीअभवत् ।अन्योदाहरणम् -**किमेषाम**स्ति दुष्करम् ?,**तस्याहं** सुलभः, पार्थ यो मां स्मरति नित्यशः ।एतस्मिन् स्थले कारकस्य विवक्षायां षष्ठी न भवति,उपेक्षितं चेत् भवति ।'नवीनास्तु कारकषष्ठीनिषेधविषये शेषे षष्ठी न भवतीति वदन्ति ।एतच्च शेखरतः अवगन्तव्यम्'।[10]

अष्टाध्यायीग्रन्थे विवक्षाविषयकं किमपि सूत्रं नोपलभ्यते । '**निरंकुशा हि कवयः'**। साहित्यसृजने कवीन् असीमा स्वाधीनता दीयते ।व्याकरणस्य कठोरनियमाः तेषां बन्धनाय असमर्थाः भवन्त्येव ।निरंकुश-कवीनां भाव-भागीरथ्याः स्वच्छन्द-प्रवाहः स्तिमितः न भवेदिति भावनातः कारक-विभक्तौ इयं विवक्षापरक्षोरूपेण भाष्यकारसमर्थिता व्याकरणसिद्धा च ।विवक्षाप्रसङ्गस्य अङ्गीकरणं प्राचीनभारतीयवैयाकरणानां उदारदृष्टिभङ्गेः परिचयमावहति इति नास्ति सन्देहः ।

**पादटिप्पणी :**

1. एत्येकादशीतत्त्वम् ,शब्दकल्पद्रुमः/विमलः – पृष्ठा -4/426
2. सरस्वती-कण्ठाभरणम् -1/2/63
3. नारायणदण्डनाथरचिताहृदयहारिणी व्याख्या ,साम्बशिवशास्त्री सम्पादितः ,1935.पृ-79
4. सच्चिदानन्द मुखोपाध्यायसम्पादितः वैयाकरणसिद्धान्तकौमुदी,कारकप्रकरणम् -पृ-21

5. तदेव

6. सच्चिदानन्द मुखोपाध्यायसम्पादितः वैयाकरणसिद्धान्तकौमुदी,कारकप्रकरणम् -पृ-54

7. महाभाष्यम्

8. अस्ताति ,अतसुच् ,आति,रिल्,रिष्टातिल्,असि-एतेः अतसर्थकाः प्रत्ययाः

9. सच्चिदानन्द मुखोपाध्यायसम्पादितः वैयाकरणसिद्धान्तकौमुदी,कारकप्रकरणम् -पृ-166

10. लाहिडी ,शास्त्री सम्पादितं पाणिनीयम् -पृ-121

## ग्रन्थसूची


1. वैयाकरणसिद्धान्तकौमुदी,कारकप्रकरणम्,डा0सच्चिदानन्द मुखोपाध्यायसम्पादितः -साहित्य-निकेतनम्,प्रथम संस्करणम्-1971.
2. वैयाकरणसिद्धान्तकौमुदी,कारकप्रकरणम्,डा0 सुलेखा देबी ,चौखाम्बा संस्कृत-प्रतिष्ठानम् ,प्रथम संस्करणम्-2010.
3. पाणिनीय शब्दशास्त्र,डा0 सत्यनारायण चक्रवर्ती ,संस्कृत-पुस्तक- भाण्डारः,प्रथम संस्करणम्-2003.
4. पाणिनीयम्,डा0 प्रबोधचन्द्र लाहिडी,पण्डित हृषीकेश शास्त्री,दि ढाका स्टुडेन्टस् लाइब्रेरी-पञ्चम संस्करणम्-2006.
5. लघुसिद्धान्तकौमुदी,गीता प्रेस,गोरक्षपुरम्,प्रथम संस्करणम्-2074 बिक्रमाब्दः ।
6. Vaiyākaraṇa siddhānta kaumudī , Tukarama Javaji, Motīlāla Banārasīdāsa,1997.
7. Ashtadhyayi Pravesha,Dr.Tilaka Rao, Siddhanta Knowledge Foundation,2022.
8. Shabdakalpadruma, By Rādhākāntadeva, Varadāprasāda Vasu, Haricaraṇa Vasu, Nāga Pabliśarsa,1967


************

**Volume XXI : January to June – 2023, ISSN 2250-1711**
**Journal of Veda Samskrita Academy [Recognised in the UGC-CARE List]**

# भामनी छन्दसि 'महात्मनः' कृतिः मोहनायनम्

**विद्वान् राजशेखरः के. के.**
योजना सहायकः, कर्नाटक संस्कृत विश्वविद्यालयः
पम्पमहाकवि मार्गः, चामराज पेटे, बेङ्गळूरु, कर्नाटक- 560018
Contact No. : 8550831686
E-mail : rajashekharkksanskrit@gmail.com

विद्वान् वेङ्कटरामभट्टाः गद्य-पद्य-रूपक-अनुवाद इत्यादिषु सर्वेषु काव्यप्रकारेषु साहित्यरचनायाम् सिद्धहस्ताः। भारतीय स्वातन्त्र्यसंग्रामे अहिंसामार्गेण रक्तरहितम् शान्तेः क्रान्तिदुन्दुभिम् निःस्वन्य शांतिसैन्यमेव निरमायि भारतमातुः श्रेष्टः पुत्ररत्नम् तत्रभवान् मोहनदास करमचन्द गान्धिवर्यः। तस्य महापुरुषस्योपरि तत्रभवता कविपुङ्गवेन वेङ्कटरामभट्टवर्येण विरचितम् काव्यमस्ति मोहनायनसङ्ग्रहः। 'सत्यमेव जयते' इति वेदवाक्यवत् जगत्यस्मिन् सत्यस्यैव जयः, असत्यस्य स्थितिः अत्यल्पा, सम्पूर्णविश्वमेव सत्ये स्थितम् इति तथ्यम् विश्वे प्रादर्शयत् ऋषिकल्पः मोहनदासः। तस्य नाम्नि एव गान्धिवर्यस्य व्यक्तिचित्रणम् ज्ञातुम् शक्यते। मोहनः- सः लोकान् अयस्कान्त इव सत्यमार्गाय मोहितवान्। दासः- भारताम्बायै अर्पितजीवनः सः भारतमातुः दासः। कर्मचन्दः– गीतायाः कर्मसिद्धान्तं स्वजीवने आचरितवानित्यतः कर्मसिद्धान्तसागरस्य चन्द्रमाः। गान्धिः– गन्धम् वहतीति गान्धिः देशभक्तेः सत्यस्य अहिंसायाश्च गन्धम् सम्पूर्णे देशे प्रसृतवानेषः। एतादृसस्य महापुरुषस्य जीवनचरित्रम् देववाण्याम् संरचना केवलम् वेङ्कटरामभट्टवर्यसदृशैः विद्वांसैः एव शक्या।

मोहनायनसङ्ग्रहे पञ्चदशसर्गाः मिलिताः। कविः एतेषु सर्गेषु मोहनदासवर्यस्य जीवनकथाम् तत्कालीनभारतीयपरिवेशेन सह प्रस्तौति। प्रथमसर्गे स्तुतिपूर्वकेन मङ्गलाचरणेन सह विषयप्रस्तुतिम् काव्यस्यौचित्यम् च प्रतिपादयति कविः। द्वितीये तत्कालीनभारतस्य स्थितिं वर्णयित्वा नायकजननपृष्ठभूमिम् च विवृणोति। तृतीये नायकजननप्रसङ्गः, नायककुलपरिचयः, नायकमातुः विशेषताः, जननावसरे सामाजिकी स्थितिः, मोहनस्यावतारः च वर्णितः। चतुर्थे तु बालकस्य मोहनस्य बाल्यम्, चिन्तनालहरी च प्रस्तुता। पञ्चमे सर्गे मोहनस्य विद्याभ्यासः, विवाहः, कस्तूरिबायाः वैशिष्ट्यताः चर्चिताः। षष्ठे नगरे विद्याभ्यासनिरतस्य मोहनस्य व्यक्तित्वदृढता शंसिता। सप्तमे सर्गे विदेशगमनम्, यवनसंस्कृतेः परिचयः तद्विषयकमीमांसा च चिन्तिता। अष्टमे हि मोहनस्य वैदेशिकी संस्कृतौ आकर्षणम् वेषभूषादिकानामनुसरणम, तस्य मनसः द्वन्द्वाश्च निरूपिताः। नवमे पुनः मोहनस्य देशचिन्ता जागृता, वैदेशिकाचाराणाम् विमर्शः गीतासम्बद्धाः आलोचनाः, नास्तिकास्तिकविमर्शः इत्यादयः विषयाः चार्चिताः। दशमे सर्गे मोहनस्योपरि बौद्धतत्त्वानाम् प्रभावः, चिन्तनक्रमे आहारक्रमे जीवनक्रमे परिवर्तनम् च वर्णितम्। एकादशे सत्यव्रतम् निर्वर्ण्य, आफ्रिकादेशे तेन अनुभूताः अवमानाः, गान्धी-कस्तूरबायोः विचारसङ्घर्षः, पुनः भारतागमनम् च वर्णितम्। द्वादशतमः सर्गः गान्धीमहोदयस्य देश-विदेशमीमांसाम्, तस्य फ्रेञ्च् देशगमनम् अपि वर्णयति। त्रयोदशतमः सर्गः दर्शनविचारचर्चाम् मोहनस्य धीरता, श्रद्धा धर्मप्रज्ञादिगुणान्, तस्य न्यायशास्त्राध्ययनम् च विशदयति। चतुर्दशे सर्गे तु ऋतुवर्णनम् दरीदृश्यते। पञ्चदश-षोडषतमसर्गाः नोपलब्धाः।

अन्तिमे सप्तदशे सर्गे युद्धस्य नैरर्थ्यम्, खिलापत् आन्दोलने गान्धिवर्यः, ब्रिटिष् दण्डनायकस्य शैले इत्यस्य पराजयः च वर्णितः। महायुद्धस्य सन्दर्भे गान्धिनः चिन्तनं कीदृसमासीदिति वदति। सम्पूर्णे भूमण्डले नृपाः सर्वे गणद्वयेषु विभक्ताः परस्परं युध्यन्ते। विनाशकाले विपरीतवर्तनम् इत्याभाणकवत् तेषां तु अधुना विपत्तिसमयः समायातः इति चिन्तयन् सः गान्धी खेडजनानां विजयम् आवाञ्छत्। खेडस्य जनाः गान्धिनः सुहृदः युद्धे शस्त्रसन्ततिमेवावर्षन् एतेन नभः अग्निं वर्षतीव अभासत। परमन्तिमे यवनाः एव जयमलभन्त। एवमेव ब्रिटिश् सैन्यम् जर्मनदेशमपि पराजितं चकार। एवं नृपाणां दुराशया सदाशयवतामपि विपत् युद्धात् समभवत्। परं ब्रिटिश् देशः जये भारतस्य सहायं स्वीकृत्य भारतमेव वञ्चयामास। एवं महायुद्धे भारतस्य स्वातन्त्र्याशया गान्धी ब्रिटिश् सर्वकाराय सहायमयच्छत् परं ते सहायं प्राप्य तदनन्तरं अवञ्चयन्निति कविः महायुद्धसन्दर्भस्य विवरणं करोति।

खिलाफत् आन्दोलनस्य विषये कथयति " चकर्षमान् धर्मगुरुर्महीपति" इति। तत्र तुरुष्कदेशे स्वपक्षपातिनं सेनापतिं भूपतिस्थाने स्थापितवन्तः ब्रिटिश् जनाः । तेन तुरुष्कदेशे ब्रिटिश् जनानां विरुद्धं खिलापत् आन्दोलनम् आरब्धम् यत् ब्रिटिश् जनानां कृते महतीं जटिलताम् अजनयत्। ते दुर्बलानामुपरि शैलपातः इव उग्रशासनानि आनीतवन्तः। खिलाफान्दोलनं असहकारपुरस्सरं प्रतिभटनं आरब्धम्। बुद्धिमान् गान्धीमहोदयः तदा तुरुष्कदेशीयेभ्यः सहकारमुदघोषयत्। तुरुष्काणामग्रे हूणदेशीयाः पराजयं प्राप्तवन्तः एवं गाअन्धिनः कौसल्येन ब्रिटिशानां अपजयः सञ्जातः इति कविः वदति। हूणाधिपतिः भारतं तुरुष्कदेशं च सैन्यबलेनैव शशास। परं जनानां विरोधेन तुरुश्कदेशे अपजयः सञ्जातः। भारतेऽपि विरोधसमनाय सैन्यबलेन ब्भृसं भारतदेशंम् अपीदयन् हूणाः इति कविः कथयति। भारते तदनु रौले इत्याख्यस्य दारुणं शासनमेकम् आगतम्। यथा यथा ब्रिटिश् शासनस्य दृप्तता वर्धिता तथा तथा भारते आन्दोलनमपि ववृधे । खितापत् सहकारेण तुष्टः तुरुष्कजातीयाः अपि भारतेन सह विरोधभावं त्यक्त्वा हिन्दुभिः सङ्गताः स्वतन्त्रतायै इति कविः खिलाफतस्य सहकारेण गान्धिना साधितं यशः शंसति। एवं तुरुष्क-हिन्दू सङ्घेन आन्दोलनस्य शक्तिरपि वर्धिता। भारते रौलेट् शासनविरुद्धम् विरोधः दिनं दिनमवर्धत्। ब्रिटिश् जनाः भारतीयान् निर्दयमतिक्रूरञ्च अपीडयन्।

एवं प्रमुखतया महायुद्धसन्दर्भे खिलाफतसन्दर्भे, रौलेट् शासनसन्दर्भे च गान्धिवर्यस्य योगदानं विवृणोति कविः सप्तदशतमे सर्गे। अग्रिमाध्यायानां अप्राप्तेः कारणतः मोहनायनसङ्ग्रहः अत्रैव स्थगितः भवति। एवं मोहनायनसङग्रहं नाम अस्मिन् ग्रन्थे कविः वेङ्कटरामभट्टवर्यः गान्धिनः जीवनं सुचारुरूपेण निरूपयति। कथयाः अपेक्षया ग्रन्थेऽस्मिन् नीतिबोधकाः अंशाः एव अत्यधिकं दरीदृश्यन्ते। कविः अस्मिन् ग्रन्थे शाकाहारसमर्थने एव अत्यधिकभागं उपयुङ्क्ते। तेन सह सत्यम्, अहिंसा,, मनोस्थैर्यम्, सामाजिकमौल्यानि एतानि सर्वाणि तत्त्वानि सन्दर्भानुसारं तत्र तत्र गवेशयति। मोहनस्य स्वनियन्त्रणविषये एव वदन् तदर्थं सम्पूर्णमेकम् सर्गमेव समर्पयति। न केवलं तस्मिन् सर्गे अपि तु प्रतिघटनासु गान्धिवर्यस्य श्रेष्ठस्य व्यक्तित्वस्य दर्शनं कारयति। तथैव भगवद्गीतायाः तत्त्वानां निरूपनं कुर्वन् कविः तेन सहैव विविधमतानामपि तत्त्वानुपस्थापयति एकस्मिन् सर्गे। सर्वत्रापि किमपि वा विषयः भवतु कविः तु नैतिकमौल्यानां गवेषणे कदापि जिपुनतां न प्रदर्शयति।

एषः ग्रन्थः गान्धिनः जीवनकथाबोधकतायाः अपेक्षया नीतिबोधकताम् अत्यधिकमुपस्थापयति। अतः कविनं आधुनिकभर्तृहरिरिति वक्तुं शक्यते इति शम्।

आधारग्रन्थाः

1. ಮೋ.ಕ. ಗಾಂಧೀ; **ಧರ್ಮ ನೀತಿ**; ವಾಲ್ಮೀಕಿ ಪ್ರಿಂಟರ್ಸ್, ವಾಣಿವಿಲಾಸ, ಮೊಹಲ್ಲಾ ಮೈಸೂರು; 1958

2. ಮೋ.ಕ.ಗಾಂಧೀ; **ಆತ್ಮಕಥೆ ಮತ್ತು ನನ್ನ ಸತ್ಯಾನ್ವೇಷಣೆ**; ಉಷಾ ಪ್ರೆಸ್, ಮೈಸೂರು, 1962.

3. ಮೋ.ಕ.ಗಾಂಧೀ; **ಆತ್ಮಕಥೆ ಮತ್ತು ಹಿಂದು ಸ್ವರಾಜ್ಯ**; ಚೇತನ ಮುದ್ರಣಾಲಯ, ಅಗ್ರಹಾರ, ಮೈಸೂರು, 1958.

4. ಗೋವಿಂದಮೂರ್ತಿ ದೇಸಾಯಿ; **ಬಾಪೂಜಿಯ ಬದುಕು**; ಎಂ.ಜಿ.ಪಾಲೇಕಾರ, ವಸಂತ ಮುದ್ರಣಾಲಯ, ಧಾರವಾಡ, 1958

5. ಅನುಬಂಧೋಪಾಧ್ಯಾಯ; **ಬಹುರೂಪಿ ಗಾಂಧಿ;** ಕರ್ನಾಟಕ ಸರ್ವೋದಯ ಸಾಹಿತ್ಯ ಸಮಿತಿ, ವಲ್ಲಭ ನಿಕೇತನ, ಬೆಂಗಳೂರು, 1986.

6. ಶ್ರೀ ನಿಲವತ್ತಹಳ್ಳಿ ಕಸ್ತೂರಿ;**ಗಾಂಧೀಜಿ ಮತ್ತು ಗ್ರಾಮೀಣ ಭಾರತ**; ಗಾಂಧೀಭವನ ಮೈಸೂರು ವಿಶ್ವವಿದ್ಯಾನಿಲಯ, ಮಾನಸಗಂಗೋತ್ರಿ, ಮೈಸೂರು. 2016.

7. ಶ್ರೀ. ಸಿದ್ಧವನಹಳ್ಳಿ ಕೃಷ್ಣಶರ್ಮ; **ಗಾಂಧೀ ಮತ್ತು ಕರ್ನಾಟಕ;** ಶ್ರೀ.ಬಿ.ಜಿ. ಗುತ್ತಲ ಸಂಯುಕ್ತ ಕರ್ನಾಟಕ ಪ್ರೆಸ್, ಬೆಂಗಳೂರು 25, 1969.

8. ಸಂ: ಕಾಂತಿಭಾಯಿಶಾಹ; ಅನು: ಖಾದ್ರಿಶಾಮಣ್ಣ; **ವಿನೋಬಾ ಕಂಡ ಗಾಂಧೀ;** ಕರ್ನಾಟಕ ಸರ್ವೋದಯ ಸಾಹಿತ್ಯ ಸಮಿತಿ ಕುಮಾರ ಪಾರ್ಕ್ (ಪೂರ್ವ) ಬೆಂಗಳೂರು, 1973.

9. ಪ್ರಾಣೇಶರಾವ್.ಬಿ.ಆರ್; **ಗಾಂಧೀಚಿಂತನ**; ಜನಪದ ಸೇವಾ ಟ್ರಸ್ಟ್ ಮುದ್ರಣಾಲಯ, ಮೇಲುಕೋಟೆ ಮತ್ತು ಗುಪ್ತಬುಕ್ ಬೈಂಡಿಂಗ್ ಪ್ರಿಂಟಿಂಗ್ ವರ್ಕ್, ಮೈಸೂರು, 1997.

10. ರಾಮಾ ವಿಶ್ವೇಶ್ವರ; **ನೇಕಾರಿಕೆಯ ಸುವರ್ಣ ದಿನಗಳು;** ಈಶ್ವರಿ ಪ್ರಕಾಶನ, ಮೈಸೂರು, 2007.

11. ವೆಂಕೋಬರಾವ್,ಪಿ; **ಗಾಂಧೀ ಚಿಂತನೆ ಸರ್ವೋದಯ** ಸಿದ್ಧಾಂತ; ಜನಪದ ಸೇವಾಟ್ರಸ್ಟ್, ಮುದ್ರಣಾಲಯ, ಮೇಲುಕೋಟೆ, 1996.

12. ವೆಂಕೋಬರಾವ್,ಪಿ; **ಲೋಕ ಸ್ವರಾಜ್ಯ**;ಕರ್ನಾಟಕ ಸರ್ವೋದಯ ಸಾಹಿತ್ಯ ಸಮಿತಿ, ಕುಮಾರಪಾರ್ಕ್, ಬೆಂಗಳೂರು 1984.

13. ಸದಾಶಿವ ಕೆ; **ಭಾರತದ ಸ್ವಾತಂತ್ರ್ಯ ಹೋರಾಟ;** ಪ್ರಿಯದರ್ಶಿನಿ ಪ್ರಕಾಶನ, ಮೈಸೂರು 2012.

14. ಸುಬ್ಬಣ್ಣ ಕೆ.ವಿ; **ಸ್ವರಾಜ್ಯದ ಹಾದಿ ಹೆಜ್ಜೆಗಳು**; ಕರ್ನಾಟಕ ಸಂಘ ಪುತ್ತೂರು, ದಕ್ಷಿಣ ಕನ್ನಡ, 1998.

***********

**Volume XXI : January to June – 2023, ISSN 2250-1711**
**Journal of Veda Samskrita Academy [Recognised in the UGC-CARE List]**

# नाट्यशास्त्रे चतुर्विधाभिनयः

**Pallavi Hegde**
Research Scholar
Karnataka Sanskrit University
Chamaraja Pete- 560018, Bengaluru, Karnataka
Contact No. : 9481588994
E-mail : pallavi1984hegde@gmail.com

**पीठिका :**

"साहित्यसङ्गीतकलाविहीनः साक्षात् पशुः पुच्छविषाणहीनः " इति सुभाषितकारस्य उक्तिः कलायाः महत्वं बोधयति। कलायां 'क'कारः परब्रह्म वाचकः, 'ल'कारः लय सूचकः। एवं विश्वस्य सृष्टिः-स्थितिः-संहाररूपमेव कला अन्येषाम् अभिप्रायः। तथैव ककारः व्यञ्जनेषु प्रथमव्यञ्जनं, लकारं तु अन्तिमः वर्णः। अतः कला त्रिपुरसुन्दरी ललितादेव्याः प्रतीकमिति तन्त्रशास्त्रे उक्तम्। कल् धातुना निष्पन्नः अयं कला शब्दः ऋग्वेदसूक्ते 'पशोः हृदयस्य अवयवम् ' इत्यर्थे उपयोगः कृतः। छान्दोग्योपनिषदि कला शब्दस्य 'भागः' इति उक्तम्। शैवदर्शने 'विभागः' इति अर्थे प्रयोगः कृतः।

**विषयनिरूपणम् -**

बुद्धि-भाव-प्रतिभा एव कला। आत्मविस्तरणम् -आत्मपरिष्करणम् -तद्वारा आत्मनः उद्धारमेव कलायाः परमोद्देष्यं प्रयोजनं च। विज्ञानं ललितकला, कुशलकला इति विभागेन कला आनन्दं जनयति। गानं, चित्रं, शिल्पं, नाटकं, साहित्यम् इत्यादयः ललितकलाः भवन्ति। तत्र नृत्यमपि एकः प्रकारः। समस्तभारते भरतमुनिना नाट्यशास्त्रस्य अन्वेषणं आविष्कृतम्। ऋग्वेदात् पाठ्यं यजुर्वेदात् अभिनयं सामवेदात् सङ्गीतं अथर्ववेदात् रसांशान् स्वीकृत्य इमं पञ्चमवेदं भरतमुनिः व्यरचि। अत्र आर्भटी - भारती -सात्वती -कैशिकी वृत्तेः संयोजनमपि कृत्वा नर्तनयोग्यं नाट्यशास्त्रं षट् त्रिंशत् अध्यायेषु षट् सहस्र श्लोकात्मकं शास्त्रीयनृत्यं क्रिस्त पूर्व द्वितीय शतके अलिखत्। नाट्यशास्त्रमवलंब्य समस्तभारते मणिपुरप्रान्त्ये 'मणिपुरि'नृत्यं, ओडिषा राज्ये ओडिस्सि नृत्यं, मध्यभारते कथक् नृत्यं, आन्ध्रप्रदेशे कुचिपुडी, तमिलुनाडु तथैव कर्णाटके भरतानाट्यं, केरला राज्ये कथक्कलि, मोहिनी अट्टं इत्यादि शास्त्रीयप्रकारणां आविष्कारः संजातः।

स्वयं शिवः ताण्डवनृत्यं तण्डुम् उपदिशति। तण्डुः भरतमुनिं बोधयति। जटाधारी शिवः नाट्यकलायाः आदिदैवः ।

"भकारो माधवश्चैव रेफ़ो ब्रह्मोच्यते बुधैः । तकार ईश्वर प्रोक्तो भरतस्यादि देवताः "ब्रह्म -विष्णु -महेश्वर इति त्रिमूर्तयः अपि नाट्यशास्त्रस्य अधिदेवताः। एवं कालिदासोक्तरीत्या "भिन्नरुचेः जनसस्य बहुधप्येकं समाराधनम् नाट्यम्।

तादृशे नाट्यशास्त्रे नाट्योत्पत्तिः कथायाः आनन्तरं नाट्यगृहं, रङ्गदैवतपूजा, ताण्डवनृत्यं, पूर्वरङ्ग, रस-भाववर्णनम् - उपाङ्गाभिनयतः नाट्यावतरण पर्यन्तं विविध विषयस्य निरूपणं स्पष्टतया श्लोकरूपेण वर्णितमस्ति।

"आङ्गीकं भुवनं यस्य वाचिकं सर्व वाग्मयम् आहार्यं चन्द्रतारादि तं वन्दे सात्विकं शिवम् "

इत्यस्मिन् श्लोके चतुर्विध अभिनयस्य नाम सूच्यते।

नटः- "यतो हस्तः ततो दृष्टिः यतो दृष्टिः ततो मनः यतो मनः ततो भावः यतो भावः ततो रसः "

इति वचनम् अनुसृत्य "कण्ठेन आलम्बयेत्गीतम् हस्तेनार्थं प्रदर्शयेत् चक्षुभ्यां प्रदर्शयेत् भावं पादाभ्यां तालमाचरेत् "

इतिवत् अभिनयं प्रेक्षकस्य पुरतः नीत्वा तेषु अपि तादृशं तादात्म्यं जनयति। एतदेव अभिनयं भवति।

"आङ्गीको वाचिकश्चैव आहार्य सात्विकस्तथा चत्वारो अभिनया ह्येते विज्ञेया नाट्यसंश्रया "। इत्युक्तिः स्पष्टतया नाट्यशास्त्रे एव भरतमुनिना कथितम्। नाट्यशास्त्रस्य प्रारम्भतः त्रयोदश अध्यायपर्यन्तमपि चतुर्विधस्य अभिनयस्य विषये उक्तम् । तत्र प्रथमतया अङ्गीकाभिनयः -

"आङ्गिको अङ्गै निदर्शितः "शरीरस्य अङ्गाङ्गचलनं तथैव हस्त मुद्रादिभिः क्रियमाण अभिनयः एव अङ्गीकाभिनयः अत्र नन्दिकेश्वर विरचित अभिनय दर्पणरीत्या "तत्रान्गिकोङ्ग प्रत्यङ्गोपाङ्गः भेधात्रिधा मतः "इतिवत् आङ्गीकाभिनये त्रैविद्यं वर्तते। तत्र प्रथमं अङ्गम् – "अङ्गान्यत्र शिरो हस्तौ वक्षः पार्श्व कटीतटाः पादाविति षडुक्तानि ग्रीवामप्यपरे जगुः "।

शिरः, हस्तः, वक्षः, पार्श्व, कटीतटाः तथैव पादौ अपि षट् अङ्गानि वर्तन्ते।

**प्रत्यङ्गानि :**

प्रत्यङ्गानि तथा स्कन्धौ बाहूपृष्टं तथोदरम् उरु जंघे षडित्याहुरपरे मणिबन्धकौ

जानुनीकूर्परमिति त्रयमप्यधिकं जगुः

इति षट् प्रत्यङ्गानि उक्तानि तथैव द्वादश उपाङ्गभेधाः अपि एवमुक्तमस्ति।

**उपाङ्गानि :**

दृस्टि भ्रूपुटतारास्च कपोलौ नासिकाहनुः अधरो दशना जिह्वा चुबुकं वदनं तथा

उपाङ्गानि द्वादशैते अन्याङ्गानि सन्ति च पार्ष्णिजुलफ़ौ तथान्गुल्यौ करयोः पदयोस्तले।

एवं अङ्ग प्रत्यङ्ग उपाङ्गभेदेन तत्रापि त्रिविधः विभागत्वेन आङ्गीकाभनयः निरूपितः।

द्वितीयं तावत् वाचिकाभिनयः - "वाचा विरचितः काव्यनाटकादिशु वाचिकः "

विना गीतं वाद्यं नृत्यं कष्टं "गीतं वाद्यं तथा नृत्यं त्रयं सङ्गीतमुच्यते "इत्युक्तिः नृत्यार्थं वाचिकस्य महत्वं प्रस्तौति। न केवलं भरतनाट्ये अपि तु कुचिपुडी, भागवतमेल, यक्षगान इत्यादिषु नृत्य पद्धत्यां वाचिकाभिनयः परिणामकारी भवति।

तृतीयम् आहार्याभिनयः -"आहार्योहारकेयूर वेशदिभिः अलन्कृतिः "पात्रयोग्यं वेषभूषणमपि धृत्वा अभिनयः तथैव पात्रोचितं वर्ण लेपनम् अपि आहार्ये अन्तर्भवति।आहार्ये चतुर्विधम् उक्तम्। ते च पुस्ता, अलङ्कार, अङ्गरचना, संजीवमिति वर्णितमस्ति।

**नाट्यशास्त्रे चतुर्विधाभिनयः**

अन्तिमं तावत् सात्विकाभिनयः -सत् नाम मनसः सत्वम्। मनोभावस्याभिनयः सात्विकाभिनयः।भावोत्पत्तेः मूलं मनः एव। सात्विकाभिनयतः एव भावोत्पत्तिः तेन रसानुभूतिः।

**उपसंहारः :**

एवं सौन्दर्योपासनमेव रससिद्धान्तस्य मूलम्। इन्द्रियसौन्दर्यं, कल्पना सौन्दर्यं, चित्त सौन्दर्यं, आत्मनः सौन्दर्यं ब्रह्मणः सौन्दर्य चतुर्मुखानि सन्ति।एवं कलाविदः सौन्दर्य अनुभवं प्राप्य तदनुभवं स्वकलाकृत्यां दर्शयति। एवमादि चतुर्विधअभिनयत्वेन आनन्दविशेषः जायते।

***********

**Volume XXI : January to June – 2023, ISSN 2250-1711**
**Journal of Veda Samskrita Academy [Recognised in the UGC-CARE List]**

# स्वस्थसमाजनिर्माणे वेदवेदान्तानां ज्ञानस्य प्रभावः

**विद्वान् डा.के.एम्.महदेवय्यः**
निवृत्तप्रांशुपालः, प्राध्यापकश्च, शक्तिविशिष्टाद्वैतवेदान्तविभागः,
महाराज संस्कृतमहाविद्यालयः, न्यू सय्याजिराव् रोड्, मैसूरु – 570024
Contact No. : 9980057563

**पीठिका – "वेदोऽखिलो धर्ममूलकम्"** इति प्रसिद्धवाक्यं प्रचलति । निर्दिष्टप्रदेशे अन्य अन्य धर्मावलम्बिनः जनाः जीवनं निर्वहन्ति । तादृशाः प्रदेशाः राज्यं, संस्थानं, राष्ट्रं च इति नामभिः व्यवह्रियन्ते । अनेकेषां राज्यानां सम्मिलनम् एव राष्ट्रं भवति । जगति भारतराष्ट्रम् एव प्राचीनतमम्, अनेके धर्मीयाः च अत्र निवसन्ति । विश्वस्य अभ्युदयापेक्षितकार्याणि भारतराष्ट्रपरतः आयोजितानि । तेषु विश्वशान्तिः, भयोत्पादननिवारणम्, असमानतायाः निवारणम्, वित्तसुधारणम्, औद्योगिकादीनि प्रमुखानि वर्तन्ते ।

सामान्यतया राष्ट्रस्य अभ्युदयः अग्रे निरूपितविषयान् अवलम्बते । १) जातिमतविषये भेदभावं वर्जयित्वा समानताभावं प्रापणीयम् । २) सुशिक्षणाभ्यासनद्वारा राष्ट्रप्रगतिविचारस्य चिन्तनं कृत्वा अनुष्ठानं च करणीयम् । ३) कृषिः, औद्योगिकं, सर्वकारीय योजनानुष्ठानं वाणिज्यादि कार्येषु प्रवृत्तः विचारः अवश्यमपेक्षणीयः । परस्परं वैरुध्यं त्यक्त्वा स्वस्य स्वस्य मतानुसारेण आचर्यमाणानां धार्मिकादि सम्प्रदायानाम् अध्ययनं च इत्यादि विषयाणां चिन्तनम् आवश्यकम् ।

उपरि उक्तानां कर्मणाम् आचरणसामर्थ्यं भारतदेशे संस्कृतेः रक्षणार्थम्, अभ्युदयार्थं च निधिरूपेण प्राप्तेन संस्कृतसाहित्येन प्रतिपादितानां विषयाणाम् अध्ययनेन प्राप्यते । सर्वेषां मानवानाम् अभ्युदयः, धर्मार्थकाममोक्षाणां साधनं च कृषिः, शिक्षणम्, वाणिज्यम्, आरोग्यं च इत्यादि विषयाणाम् अध्ययनं मानवैः अवश्यम् अनुष्ठेयम् ।

वेदागमोपनिषदादयः भारतदेशे संस्कृतसाहित्यक्षेत्रे अत्यन्तं प्राचीनाः वर्तन्ते । तेषु संस्कृतेः परिपालनं, धर्मस्याचरणम्, इत्यादयः अनेके विषयाः सन्ति । एते भारतदेशस्य धर्मस्य मूलाधारा इति दार्शनिकाः आमनन्ति । अनादिकालादारभ्य वेदेषु प्रतिपादितेषु विषयेषु विज्ञानं, कर्म, उपासना, ज्ञानं चेति चत्वारः विषयाः अवगन्तुं शक्यन्ते ।

**वेदोक्तविषयेषु स्थूलपरिचयः** – वेदोक्त विज्ञान-कर्म-उपासना-ज्ञानविषयाणां स्थूलपरिचयः एवं निरूपितम् –

**१. विज्ञानम् –** विज्ञानस्य सकाशात् जगति वर्तमानानां सर्वेषां पदार्थानां वस्तुस्थितिं ज्ञात्वा जगत् कल्याणार्थं तद् ज्ञानं योजनीयम् । विज्ञानेऽपि द्वैविध्यं वर्तते । प्रथमम् इदं जगतः कारणीभूतं परमात्मनः स्वरूपं सत्यमार्गेण ज्ञात्वा तदा परमात्मनः आज्ञानुसारं जीवनं यापनीयम् । द्वितीयन्तु परमात्मना सृष्टिभूतानां सर्वेषामपि पदार्थानां कल्याणार्थं च विनियुज्य तन्मूलकेन सुखसौभाग्यादीन् प्रापणीयम् ।

जगत्सृष्टिरहस्यमधिकृत्य ऋग्वेदीयं नासदीयं सूक्तं महोन्नतमाशयं व्यनक्ति । यजुर्वेदीये च पुरुषसूक्ते विश्वपुरुषस्य स्वरूपमप्रमेयम् । पृथिवी-सूर्य-चन्द्रादिग्रहाणां , "गौ"रिति संज्ञा (यजुर्वेद.अध्यायः, ३) तद्ग्रहचक्रं स्वस्वपरिधौ अन्तरिक्षे सूर्यं परितः सदा भ्रमतीति वर्णयत्ययं मन्त्रः – **आयं गौः पृश्निरक्रमीत् आसनन् मातरं पुनः । पितरं च प्रयंत्स्वः"** इत्यादिषु मन्त्रेषु ग्रहाणामाकर्षण-प्रकाशनशक्तीनां वर्णनं च दृश्यते । केषुचिन्मन्त्रेषु नौर्विमानादिविद्या, तारविद्या, वैद्यशास्त्रं, नक्षत्रविद्या, प्राणिविद्या, वृक्षशास्त्रं, सङ्गीतं, कला, चित्रादिसमस्तानां शास्त्राणां च मूलं संसूच्यते । पुनर्जन्म, विवाहः, नियोगः, राज-प्रजाधर्मः, वर्णाश्रमव्यवस्थादिकमधिकृत्य विपुलान्यवतराणि वेदे प्रतिपादितानीति निरूपितम् । राष्ट्रघटनायाः समाजसंवर्धनस्य च उपर्युक्तानि सूक्तानि तत्र दर्शनीयान्यनुष्ठेयपराणि च । यथा – **सङ्गच्छद्वं संवदध्वं सं वो मनांसि जानताम् ।** .............. **समानमस्तु वो मनो यथा वस्सुसहासति ॥** (ऋग्वेदः, ८.७.४९.२-४)

**पश्येम शरदः शतं नन्दाम शरदः शतम् । प्रब्रवाम शरदः शतमजीतास्याम शरदश्शतम् ॥** (यजुर्वेदः, ६०.८)

**"भद्रं कर्णेभिः श्रृणुयाम, अक्षभिः भद्रं पश्येम, स्थिरैरङ्गैः तनूभिः तुष्टुवाम, यावदायुः तावत्पर्यन्तं देवहितं व्यशेम" "ऋतं तपः, सत्यं तपः, श्रुतं तपः, शान्तं तपो दमस्तपः, शमस्तपो दानं तपो यज्ञस्तपो भूर्भुवस्सुवर्ब्रह्मैतदुपास्त्वेतत्तपः"** (यजुर्वेदः,१०.८) इत्यादि मन्त्राः सामाजिकस्य नीतिशास्त्रस्य आदर्शभूताः । (श्रीकरभाष्यम्. सम्पुट.१.भाष्यभूमिकायां पृष्टसङ्ख्या ९.१० उल्लिखितम्)

**२. कर्म –** वेदोक्तः द्वितीयः विषयः । एतत् कर्म क्रियाप्राधान्यं, परमात्मनः स्वस्वरूपज्ञानं ज्ञात्वा अनन्तरं मानवैः स्वाभ्युदयसाधनार्थं धर्ममार्गेण अर्थकामौ साधयितुं कर्मणः प्रधानः आशयः । तादृशार्थकामसाधनं कर्मकाण्डस्य लक्ष्यम् । कर्म तावत् सकामं कर्म, निष्कामं कर्म च इति द्विविधं वर्तते । ईश्वरार्पणधिया, फलाभिसन्धिराहित्येन च यानि कर्माणि क्रियमाणानि सर्वाणि कर्माणि निष्कामकर्माणि । तानि एव कर्माणि शिवशरणैः कायकपदेन अभिधीयन्ते । मानवजीवितस्य सुखसौलभ्यलाभाय वायुमण्डलमेघमण्डलयोः शुद्धिः आवश्यकी । तदर्थम् अग्निहोत्रादिकर्माणि क्रियमाणानि, तादृशकर्माणि सकामकर्माणि । अस्य कर्मणः अपरं प्रयोजनं मेघशुद्धिः । तेन लोके सुवृष्टिः सुभिक्षं च सम्भवति । उक्तं च मीमांसाकर्तृणा जैमिनिना – **द्रव्यसंस्कारकर्मसु परार्थत्वात्फलश्रुतिरर्थवादः स्यात् । द्रव्याणां तु, क्रियार्थानां संस्कारः क्रतुधर्मः स्यात् ॥ (पूर्वमीमांसा.४.३.१.८)**

**उक्तं च भगवद्गीतायाम् – अन्नाद्भवन्ति भूतानि पर्जन्यादन्नसम्भवः ।यज्ञाद्भवन्ति पर्जन्यः यज्ञः कर्मसमुद्भवः ॥**

**रघुवंशे च – "दुदोह गां स यज्ञाय सस्याय मघवा दिवम् । सम्पद्विनिमयेनोभौ दधतुर्भुवनद्वयम् ॥ "यज्ञोऽपि तस्मै जनतायै कल्पते । यत्रैवं विद्वान् होता भवति" "अग्निर्वै धूमो जायते । धूमादभ्रमभ्राद्वृष्टिरग्नेर्वा एता जायन्ते । तस्मादाह तपोजा इति"**

एवं भूतेषु मन्त्रेषु अहिंसात्मकस्य यज्ञस्य परमप्रयोजनं सुस्पष्टं ज्ञायते । आगमोक्तपूजाविधौ धूप-दीपाराधनादिकं वेदोक्तकर्मोपासनाफलं दास्यतीति विदुषामाशयः । (श्रीकरभाष्यम्. सम्पुट.२.भाष्यभूमिकायां. पृष्टसङ्ख्या १०.११ उल्लिखितम्)

**३. उपासना –** वेदोक्ततृतीयः विषयः उपासना । भगवन्तं प्रति उपासनद्वारा मनः भगवतः साक्षात्कारं प्राप्नोति । परमात्मनि मनोलयः योगशास्त्रविधानेन भाव्यः । योगस्तु यम-नियम-आसन-प्राणायाम-प्रत्याहार-धारणा-ध्यान-समाधिरूपेणाष्टधा विभक्तः ।

**"तस्याभिध्यानात् योजनात्, तत्त्वभावात् भूयाश्चन्ते विश्वमायानिवृत्तिः"** । (श्वेताश्वतरोपनिषद्, ३.१०) **"तेजोऽसि तेजो मयि देहि । वीर्यमसि वीर्यं मयि देहि** ................. (यजुर्वेदः, १९.९) (श्रीकरभाष्यम्.सम्पुट.१.भाष्यभूमिकायां पृष्टसङ्ख्या. १२ उल्लिखितम्) इत्यादिषु मन्त्रेषु ध्यानमूलोपासनायाः परमं प्रयोजनं सम्यक् निरूपितम् ।

**४. ज्ञानम् –** वेदोक्तः चतुर्थः विषयः ज्ञानम् । यः मानवः समरसमोक्षापेक्षी वर्तते, तादृशं मोक्षप्रदं ज्ञानम् अवश्यं सम्पादनीयम् । एतदेव परमात्मनः ज्ञानमिति वयं कथयामः । अन्ये शिल्पादयः विषयाः अपि विज्ञानपदेन कथ्यन्ते । **"मोक्षे धीः ज्ञानम् अन्यत्र विज्ञानशिल्पशास्त्रयोः"** अमरकोशः, **"या विद्या सा विमुक्तये"** इत्यादिषु वाक्येषु लक्ष्यं मोक्षः इति निर्दिष्टम् । (श्रीकरभाष्यम्.सम्पुटम्, २,कन्नड भाष्यभूमिकायां पृष्टसङ्ख्या १५ उल्लिखितः) वेदानाम् अन्तिमभागः वेदान्तः इति कथ्यते । मोक्षः सालूक्यः, सामीप्यः, सारूप्यः, सायुज्यः, सामरस्यः इति पञ्चविधः । तत्प्रतिपादकानि अद्वैत-विशिष्टाद्वैत-विशेषाद्वैत (शक्तिविशिष्टाद्वैत)-द्वैत दर्शनानि आचार्यपादैः निरूपितानि प्रस्तानत्रयमधिकृत्य । तत्रादौ वेदप्रकारघटितां वेदान्ताख्यानाम् उपनिषदां स्वरूपं निरूप्यते ।

**शक्तिविशिष्टाद्वैतसिद्धान्तम् –**

वेदान्तदर्शनेषु द्वैत-अद्वैत-विशिष्टाद्वैत-शक्तिविशिष्टाद्वैत इति प्रमुखभेदाः सन्ति । शक्तिविशिष्टाद्वैतपदस्य व्युत्पत्तिः एवं पूर्वाचार्यैः निरूपितम् – शक्तिश्च शक्तिश्च शक्ती, ताभ्यां विशिष्टौ जीवेशौ, तयोः अद्वैतं शक्तिविशिष्टाद्वैतम् इति ।अस्य शक्तिविशिष्टाद्वैतसिद्धान्तस्य प्रवर्तकः श्रीपतिपण्डिताराध्यः । विशेषाद्वैतम्, भेदाभेदसिद्धान्तः इत्यादि पर्यायपदैः सिद्धान्तम् इमं प्रतिपादितवान् । श्रीपतिपण्डिताराध्यः

ब्रह्मसूत्राणां कृते सविस्तरं भाष्यं विलिख्य, सामरस्यं मुक्तिं स्थापितवान् । अयमेव सिद्धान्तः लिङ्गालिङ्गसामरस्यरूपा मुक्तिरिति वीरशैवदार्शनिकैः व्यवह्रियते । अस्मिन् सिद्धान्ते पतिः, पशुः, पाशः इति पदार्थत्रयं कथयति ।

**परमात्मस्वरूपम् –** शक्तिविशिष्टाद्वैतसिद्धान्ते परमात्मा, पतिः, परशिवब्रह्मा लिङ्ग इत्यादिरूपैः व्यवह्रियते । सः नाशरहितः (अक्षरः) । यत्सर्वं वस्तु यस्मिन् परमात्मनि निगूढं वर्तते तदेव परं ब्रह्मा । तादृशं परशिवब्रह्मा नश्वरम्, अगोचरम्, सत्यम्, परिपूर्णं च वर्तते । स्थलशब्दवाच्यस्य परशिवब्रह्मणः स्वरूपं सिद्धान्तशिखामणौ एवं निरूपितम् –

**परं ब्रह्म महालिङ्गं प्रपञ्चातीतमव्ययम् ।** ....................... **बृहत्वाद्ब्रह्मणत्वाच्च ब्रह्मशब्दाभिधेयकम् ॥** (सिद्धान्तशिखामणिः, ६.३३-३७)

महालिङ्गनामकं परं ब्रह्म प्रपञ्चातीतम् अव्ययं च वर्तते । तदेव ब्रह्म सर्वभूतानाम् अन्तः त्रिस्थाने गोचरं भवति । तत् स्थानत्रयं तु मूलाधारं, हृदयं, भ्रूमध्यमिति आगमाः तावत् ज्योतिर्लिङ्गरूपेण यत् भासते, तदेव ब्रह्म इति कथयन्ति । एतत् लिङ्गात्मकं ब्रह्म अपरिच्छिन्नम् अव्यक्तं सनातनं वर्तते । एतदेव लिङ्गं स्वमायया परिच्छिन्नं सत् उपासनार्थं हृदि तिष्ठति । लिङ्गम् इति पदस्य निर्वचनं यत्र एतत् चराचरजगत् लयं गच्छति, पुनः समुत्पत्तिं प्राप्नोति, तदेव लिङ्गं, तदेव शाश्वतं ब्रह्म । एतत् लिङ्गं तावत् सच्चिदानन्दात्मकत्वात् लिङ्गम् इति व्यपदिश्यते । एतएव बृहत्त्वात् ब्रह्मणत्त्वात् च ब्रह्मशब्देन अभिधीयते ।

**पशुस्वरूपनिरूपणम् –** अस्मिन् सिद्धान्ते अयं जीवः शिवांशभूतः इति निश्चीयते । उक्तं च रेणुकभगवत्पादाचार्यैः –

**अनाद्यविद्यासम्बन्धात्तदंशो जीवनामकः ।** .......... **मायी माहेश्वरस्तेषां प्रेरको हृदि संस्थितः ॥** (सिद्धान्तशिखामणिः, ५.३४)

अङ्गीकृतं च बादरायणश्रीचरणैरपि **"अंशो नानाव्यपदेशात्"** इति । अस्मिन् सूत्रभाष्ये श्रीपतिपण्डितभगवत्पादैरपि जीवात्मनः शिवांशत्वं सोपपत्तिकं समर्थितं च । (श्रीकरभाष्यम्, सम्पुट.१.भाष्यभूमिकायां पृष्टसङ्ख्या १५८ उल्लिखितम् )

**मलस्वरूपनिरूपणम् –** पाशापरपर्यायो मलः त्रिविधः । अणवः, मायीयः, कार्मणश्चेति । अनाद्यविद्यासम्बन्धात् जीवे पाशत्रयं स्वाभाविकेन विद्यते । यथा ताम्रे कालिमा । रसवेधात् ताम्रम् अनादिसिद्धया कालिमया विमुक्तं सत् सुवर्णत्वं लब्ध्वा यथा न पुनः ताम्रत्वं प्राप्नोति, तद्वत् दीक्षया भक्तः गुरुकारुण्यं लब्ध्वा तत्कृतलिङ्गधारणात्मिकया शिवदीक्षया शिवो भवति, न तस्य पुनर्भवः । (श्रीकरभाष्यम्, सम्पुट.१.भाष्यभूमिकायां पृष्टसङ्ख्या १६६ उल्लिखितम्)

**आचारः परमो धर्मः –** आचारः परमो धर्मः इति अभिप्रायः लोके वर्तते । वीरशैवसिद्धान्ते शिवांशरूपः जीवात्मा पुनः शिवेन सह

**जले जलमिव न्यस्तं वह्नौ वह्निरिवार्पितः । परब्रह्मणि लीनात्मा विभागेन न दृश्यते ॥** (सिद्धान्तशिखामणिः, २०.६१)

**यथा नद्यः स्यन्दमानाः समुद्रे अस्तं गच्छन्ति नामरूपे विहाय । तथा विद्वान् नामरूपाद्विमुक्तः** ......... (मुण्डकोपनिषत्, ३.२.८)

जले जलमिव, वह्नौ वह्निरिव सामरस्यं प्राप्तुं यं साधनमार्गम् अनुसर्तुम् इच्छति स एव मार्गः आचारः । तदर्थं गुरुसमीपं साधकः गत्वा एवम् अग्रे निरूपितरीत्या प्रार्थयति ।

**भोः कल्याण महाभाग शिवज्ञानमहोदधे । आचार्यवर्य सम्प्राप्तं रक्ष मां भवरोगिणम् ॥** (सिद्धान्तशिखामणिः, ६.९)

**इति शुद्धेन शिष्येण प्रार्थितः परमो गुरुः। शक्तिपातं समालोक्य दीक्षया योजयेदमुम् ॥** (सिद्धान्तशिखामणिः, ६.१०)

शुद्धमनस्केन शिष्येण प्रार्थितः गुरुः तस्य शक्तिपातं समालोच्य तं दीक्षया संयोजयति । भक्तस्य प्रार्थनाम् अङ्गीकृत्य गुरुः तस्मिन् शक्तिपातं समालोक्य दीक्षां कर्तुम् इच्छति ।

**शक्तिपातस्वरूपनिरूपणम् – येषां शरीरिणां शक्तिः पतत्यविनिर्वृत्तये । तेषां तल्लिङ्गमौत्सुक्यं** .......... (शिद्धान्तशिखामणिः, पृष्टसङ्ख्या ६६)

**दीक्षास्वरूपं फलञ्च – एवम् उक्तम् सिद्धान्तशिखामणौ – दीयते च शिवज्ञानं क्षीयते पाशबन्धनम् । यस्मादतः समाख्याता दीक्षेतीयं विचक्षणैः ॥** ..... **तस्य दक्षिणकर्णे तु निगूढमपि कीर्तयेत् । छन्दो रूपमृषिं चास्य देवतां न्यासपद्धतिम् ॥** (सिद्धान्तशिखामणिः, ६.११-२०)

दीक्षापदस्य निर्वचनं यत शिवज्ञानं प्रयच्छति, यत् च पाशबन्धनं नाशयति । तत् कर्म तावत् "दीक्षा" इति व्यपदिश्यते । एषा दीक्षा वेधारूपा, मन्त्ररूपा, क्रियारूपा च इति त्रिविधा वर्तते । गुरुशिष्ययोः हस्तमस्तकसंयोगात् गुरोः आलोकमात्रात् च शिष्ये यः शिवत्त्वसमावेशः सम्पद्यते स वेधादीक्षा इति व्यपदिश्यते । **"ओं नमः शिवाय"** इति मन्त्रस्य उपदेशरूपा दीक्षा तावत् मन्त्रदीक्षा इति व्यपदिश्यते । कुण्डमण्डलादिद्वारा या दीक्षा क्रियते, सा क्रियादीक्षा इति व्यपदिश्यते । शुभमासे, शुभतिथौ, शुभकाले, शुभेऽहनि शिवभक्तेभ्यः ताम्बूलपूर्वकं विभूतिं दत्वा देशिकः शिष्यम् आनीय स्नातं शुक्लाम्बरधरं भस्मविभूषितं च कारयित्वा मण्डले प्राङ्मुखं स्थापयेत् । शिवनामसङ्कीर्तनपूर्वकं, शिवचिन्तापूर्वकं च विभूतिपट्टां कृत्वा कलशोदकैः, ऋत्विग्भिः स त्रिवारम् अभिषिच्य शिष्यस्य दक्षिणकर्णे संशारभयतारिणीं पञ्चाक्षरीमहामन्त्रं निगूढरूपेण कीर्तयेत् । मन्त्रस्य छन्दः, ऋषिः, देवता इत्यादिकम् अपि न्यासपूर्वकम् उपदिशेत् ।

**लिङ्गधारणस्य द्वैविध्यनिरूपणम् –**

**लिङ्गधारणमाख्यातं द्विधा सर्वार्थसाधकम् ।..................स धारयेत् सर्वमलापहत्यै भस्मामलं चारु यथाप्रयोगम् ॥**

(सिद्धान्तशिखामणिः,६.२९,३०,३८,४१,४४,४५,४७-४९,५८-६२)

अथ एवं लिङ्गधारणं मोक्षकाङ्क्षिभिः मुनिभिः द्विधा अङ्गीकृतमित्याह – सर्वार्थसाधकं भोगमोक्षप्रदमिति शिष्टं स्पष्टम् । किमिदमान्तरम्? इत्यत्राह – चिद्रूपं सच्चिदानन्दात्मकं परमम् इति । अत एव देशकालोत्तीर्णं देशकालकारणलक्षणं (तद्रूपम्) विश्वकारणम्, (हृत्कमले द्रव्यरूपेण धारणात्) शाङ्करं शिवसम्बन्धि यत् लिङ्गमस्ति तस्य महालिङ्गस्य चित्ते स्वहृत्कमले यद्धारणं ध्यानरूपेण धारणं तत् आन्तरम् अन्तर्लिङ्गधारणमित्युदाहृतमित्यर्थः । अथ उक्तस्थानेषु एकत्र ज्योतिर्लिङ्गानुसन्धानं आन्तरम् । परममुक्तिर्वेत्यर्थः अत्र **"ब्रह्मविष्णुरुद्रेन्द्रास्ते सम्प्रसूयन्ते"** इति श्रुतेः कार्यकोटिप्रविशिष्टरुद्रो विवक्षितः । न तु त्रिमूर्तिकारणीभूत महालिङ्गरुद्रः इति अनुसन्धेयम् । तस्मात् सांसारिकदुःखनिवृत्त्यर्थम् अन्तर्लिङ्गानुसन्धानमेव कुर्यादित्याह ।

नन्वेवं चेत् बाह्यलिङ्गधारणं किमर्थमित्याकाङ्क्षायामाह – अन्तर्लिङ्गधारणे यद्यशक्तः शक्त एव वा स्फटिकशिलादि निर्मितबाह्यलिङ्गतद्रूपमिति हृदयकमलश्रितचिन्मयमहालिङ्गस्वरूपवदिति निश्चयात् सन्देहराहित्येन धारयेत् ।

**"बिन्दुस्वरूपामलमूलपीठं नादस्वरूपं स्फुरदूर्ध्वपीठम् । कलात्मतिर्यग्गतगोमुखाढ्यं चिद्रूपलिङ्गं हृदयाब्जसंस्थम् ॥"**

इति शिवालोकवचनात् तद्रूपबाह्यलिङ्गं अन्तर्लिङ्गस्मरणार्थं वीरशैवः धारयेत् इत्यर्थः । (सिद्धान्तशिखामणौ व्याख्याकारः श्री मरितोण्टदार्येण उल्लिखितः) । अथ महालिङ्गभेदं निरूपयति – लिङ्गं तु महालिङ्गमित्यर्थः । तत् स्थूलं सूक्ष्मं परात्परम् इति त्रिविधम् । तत्र यत् बाह्ये तनौ धार्यते तदिदमिष्टलिङ्गं स्थूलम् । यत् यल्लिङ्गं अन्तः हृदयकमले भावनामयं सन्मात्रभावनारूपं तत् प्राणलिङ्गं सूक्ष्मं, यत् यल्लिङ्गं परात्परमिति प्रोक्तं तत् तृप्तिलिङ्गमित्युच्यते ।

**नन्विदं स्थूललिङ्गं किमर्थं धारणीयम्? इत्यत्राह –** अव्यक्तं रूपाद्यभावात् अबाह्येन्द्रियगोचरम्, समलमानसप्रवृत्त्यगम्यत्वात् भावनातीतं शिवाभिधं परं ब्रह्म निगमागमप्रसिद्धशिवाख्यपरब्रह्मैव, अनिष्टपरिहारतः संसारपाशलक्षणानिष्टपरिहारतः इष्टप्राणपरात्परमुक्तिप्रदानतः साक्षात् प्रत्यक्षीभूतेष्टलिङ्गम् इदम् । **"इष्टमूर्जं तपसाऽनुयच्छत"**इत्यथर्वशिरस्सिद्धं बुधः निगमागमनिपुणः शरीरे सावधानेन सदा धारयेदित्यर्थः । अथ श्रुतौ कुत्र प्रसिद्धम्? इत्यत्राह – **"पवित्रं ते विततं ब्रह्मणस्पते"** इति ऋग्वेदः आह । भो ब्रह्मणस्पते! ते तव लिङ्गमिति शेषः । विततं शिवादिभूम्यन्तं विस्तृतं पावनम् । तस्मात् अनामयं दोषरहितं शैवं तल्लिङ्गं धारयेदित्यर्थः ।

ननु किमस्य धारणेनेत्यत्राह – **"तत् पवित्रमिति तत्सम्पर्कात् तनुः शरीरं पवित्रं भवतीत्यर्थः । अथ एतादृशं लिङ्गं दीक्षया रहितः न धारये"दित्याह –** अतप्ततनुः तपोरहितदेहः आमः अपरिपक्वः अवैराग्यशीलः इत्यर्थः । संस्कारवर्जितः शिवसंस्काररहितः अज्ञः नित्यानित्यवस्तुविवेकशून्यः दीक्षया रहितः गुरुकारुण्यरहितः साक्षात् प्रत्यक्षम् उत्तमं श्रेष्ठलिङ्गं न आप्नुयात् न धारयेत् । अस्मिन्नर्थे –

**"अतप्ततनूर्न तदामो अश्नुते"** इति श्रुतिः । तत् आमः इति विच्छेदः । तल्लिङ्गमित्यर्थः । अनेन सुप्रसन्नेन गुरुणा दत्तं लिङ्गमेव भोगमोक्षप्रदम्, स्वेच्छया धृतं तु विफलमिति सूचितम् ।

अथ लिङ्गधारणे याजुषीश्रुतिरप्यस्ति इत्याह –**"या ते रुद्रशिवातनू अगोराऽपापकाशिनी"** इति श्रीरुद्रश्रुतिः । अस्याः श्रुतेः अयमर्थः – भो रुद्र! तव शिवा मङ्गलस्वरूपा या तनूः अघोरा अपापकाशिनी – **"लिङ्गं तु शिवयोर्देहः"** इत्यागमोक्तिः शिवशक्त्यात्मिका लिङ्गमूर्तिः, सा अघोरा, शान्ता, अपापकाशी (अपापेषु भक्तेषु काशते इत्यपापकाशी) इष्टलिङ्गरूपेण तत्र स्थिता इति यजुषा यजुर्वेदेन यस्मात् गीयते तस्मात् शैवः शिवलिङ्गसम्बन्धी अघवर्जितः पापरहितः इत्यर्थः ।

अथ लिङ्गधारणस्थलं समाप्य तत्सम्पन्नस्य भस्मधारणस्थलं सूचयति – यः पुरुषः लिङ्गधारी लिङ्गधारणसम्पन्नः नियतान्तरात्मा निर्मलान्तःकरणः, नित्यं शिवपूजाबद्धचित्तः सः लिङ्गधारकः सर्वमलापहृत्यै सर्वदोषनिवृत्त्यै भस्म यथाप्रयोगं शास्त्रोक्तप्रकारेण धारयेदित्यर्थः ।

**उपसंहारः –**

समापतः कथने आदर्शजीवनं, सात्विकाहारः, मानसिकनैर्मल्यम्, इन्द्रियनिग्रहः, अनासक्तिः, सदाचारः, लिङ्गपूजानुष्ठानम् इत्यादिभिः साधकः सर्वत्र भगवन्तम् अनुभावयन् सन् शिवानन्दम् अनुभवेत् । इत्येतदेव उपनिषदां हृदयम्। तस्मात् **"असतो मा सद्गमय तमसो मा ज्योतिर्गमय मृत्योर्माऽमृतङ्गमय"** इत्यात्मकः अमरसन्देशः सर्वेषु हृदयेषु स्फुरणं प्राप्तः सर्वत्र विस्तृतः सन् भारतीयानां संस्कृतेः ओजोऽभिवर्धयति प्रकाशयति च । एतादृशाचारेण समाजस्य स्वास्थ्यं समृद्धं भवति । सत्त्वगुणभूयिष्ठं राज्य-देश-प्रपञ्चादिकं भयोत्पादनादिकं विलीय, जनाः शान्त्या सुखेन च जीवनं यापयन्ति । अस्य च कारणं मोक्षापेक्षिणेषु मानवेषु वेदवेदान्तानां च ज्ञानस्य सम्पादनम् अवश्यम् । प्राप्यमाणेन ज्ञानबलेन परमात्मसाक्षात्काररूपस्य साधनमार्गस्य आरोहणक्रमम् अनुसरणम् एव कर्तव्यम् ।

**-इति शिवम्-**

**परामर्शनग्रन्थाः –**

१. अनुभवसूत्रम् – श्री मायिदेवविरचितं विमर्शात्मकपरिष्करणम् वि.डा.हेच्.पि.मल्लेदेवरु, प्राच्यविद्या संशोधनालयः, मैसूरु. १९८३

२. एकादशोपनिषदः ईशाद्यष्टसु श्रीमदुदासीनवर्यामरदासाख्यविदुषा विरचितयोपनिषन्मणिः प्रभया
छान्दोग्यबृहदारण्यकयोर्नित्यानन्दाश्रम विरचितया मिताक्षरः कैवल्ये च शङ्करानन्द विरचितया, दीपिकया समलङ्कृताः ।

३. क्रियासारः – श्री नीलकण्ठशिवाचार्यविरचितः भागत्रयोपेतः प्राच्यविद्यासंशोधनालयः, मैसूरु विश्वविद्यालयप्रकाशनम्. १९५४

४. कैवल्यसारः – श्री मरितोण्टादार्यः विरचितः, एडिटेद् वि.डा.हेच्.पि.मल्लेदेवरु,प्राच्यविद्या संशोधनालयः, मैसूरु. १९८८

५. मुण्डकोपनिषद् – वीरशैवभाष्यम् । श्री उमचगि शङ्करशास्त्रिकृतं संस्कृतमूलसहितम्, प्रबोधपुस्तकप्रकटना संस्थे मैसूरु.

६. लिङ्गधारणचन्द्रिका – श्री नन्दिकेश्वरशिवाचार्यः विरचितं शिवकुमारव्याख्यासहितं, काशी.१९०५

७. वीरशैवानन्दचन्द्रिका – श्री मरितोण्टादार्यः विरचितः कन्नडनुवाद श्री सिरसि ।श्री नन्दिकेश्वर एलेक्ट्रिक् प्रेस्, मैसूरु. १९६०

८. वीरशैवेन्दुशेखरः – व्याकरणतीर्थेन पं.सदाशिवशास्त्रिणा विरचितः, श्रीमहालिङ्गस्वामिना काश्याम् प्रकाशितः.१८५४

९. श्रीकरभाष्यम् – श्रीपति पण्डिताचार्यविरचितः सम्पुटः ०१-०२ प्राच्यविद्या संशोधनालयः, मैसूरु. १९७७, १९७८

१०. श्वेताश्वतरोपनिषद् – स्वामि त्यागीशानन्दविरचितः श्री रामकृष्णमठ, महिलापुरम्, मद्रास्, भारत, आङ्ग्लभाषा-५च, ३उ-७-८७.

११. श्वेताश्वतरोपनिषद् वीरशैवभाष्यम् –वि.डा.टि.जि.सिद्धप्पाराध्यः विरचितः कन्नडानुवादसहितम्, मैसूरु

*****************************

**Volume XXI : January to June – 2023, ISSN 2250-1711**
**Journal of Veda Samskrita Academy [Recognised in the UGC-CARE List]**

# जगदीशमतेन सिद्ध्यनुमित्योः प्रतिबध्यप्रतिबन्धकभावः

Dr. **Raghav K L**
Planning Assistant (Academic)
Karnataka Sanskrit University,
Chamaraja Pete-560018, Banglore, Karnataka
Contact No. : 9738278853
E-mail : raghavkl1@gmail.com

प्रमाणपटवस्तार्किकाः । प्रमाणादिपदार्थतत्त्वज्ञानादेव निश्रेयसाधिगम इति न्यायनयः । तत्रापि मानाधीना मेयसिद्धिरिति प्रमाणाधीना सर्वेषां पदार्थानां व्यवस्थितिरिति प्रमाणप्रपञ्चः सप्रमाणं समग्रं निरूपितः न्यायशास्त्रे । प्रमाता प्रमाणेनैव प्रमेयमधिगच्छतीति प्रमेयादितत्त्वज्ञानार्थं प्रमाणापेक्षायां प्रमाणस्यैव प्रथमं निरूपणीयत्वम् । प्रमाणैः खलु प्रमेयपरीक्षणं भवति । अत एव 'प्रमाणैरर्थपरीक्षणं न्याय' इत्यभियुक्तोक्तिः ।

नैयायिकैरभ्युपगतेषु चतुर्षु प्रमाणेष्वभ्यर्हिततममनुमानम् । तच्च व्याप्तिज्ञानं परामर्शो वा । तज्जन्यं ज्ञान–मनुमितिः । तत्रानुमितिकारणजिज्ञासायां व्याप्तिनिरूपणानन्तरं पक्षता निरूपिता मणिकारेण–'सिषाधयिषाविरह–सहकृतसाधकप्रमाणाभावः यत्रास्ति स पक्षः'[1] इति । साधकप्रमाणाभावश्च साध्यवत्त्वनिश्चयाभावः । सिध्द्यभावस्य अनुमितिकारणत्वात् सिद्धेः कारणीभूताभावप्रतियोगित्वरूपप्रतिबन्धकत्वम् । सिषाधयिषायाः प्रतिबन्धकसमवधानकालीन कार्यजनकत्वादुत्तेजकत्वम् । सिद्धिसिषाधयिषापरामर्शाणां क्रमेणोत्पत्तावपि पक्षतासम्पत्तये सहकृतान्तं सिद्धिविशेषणं लक्षणे । जागदीश्यामपि इदमुपलक्षणमित्यादिना अनुमितीष्टसाधनताविषयकसाध्यव्याप्यवत्पक्षप्रत्यक्षानन्तरं यत्रानुमित्सा तत्रापि पक्षतासम्पत्तये सहकृतान्तविशेषणसार्थक्यं प्रतिपादितम् । एवं अनुमित्सादशायामपि घटाद्यवच्छेदेन आत्मनि सिषाधयिषाभावसत्त्वात् पक्षताभङ्गवारणाय देशानवच्छिन्नसिषाधयिषाविरहस्य सामानाधिकरण्यरूपवैशिष्ट्यं सिद्धौ विशेषितम् ।

ततश्च 'यादृशयादृशेच्छासत्त्वे सिद्धौ सत्यां ---'[2] इत्यादिदीधितिग्रन्थव्याख्यानावसरे तल्लिङ्गकतत्पक्षक–तत्साध्यकानुमितित्वप्रकारकेच्छाभावस्य सिद्धौ विशेषणत्वमुपपाद्य अप्रामाण्यज्ञानाभावसमुदायोऽपि सिद्धौ विशेषितः । अप्रामाण्यज्ञानास्कन्दितसिद्धेरप्रतिबन्धकत्वमिति मिश्रमतमाश्रित्य सिषाधयिषाविरहविशिष्ट–अप्रामाण्यज्ञानाभावविशिष्टसिद्धेः प्रतिबन्धकत्वमुक्तं जगदीशभ ाचार्यैः ।

मणिकारेण साधकप्रमाणपदेन निर्दिष्टा सिद्धिः दीधितिकारेण 'साध्यवत्त्वनिश्चयः' इति व्याख्याता । तत्र संशयव्युदासाय निश्चयत्वकथनम् । जागदीश्यां पुनः साध्यतावच्छेदकावच्छिन्नप्रकारतान्यप्रकारत्वानिरूपितपक्षनिष्ठ–विशेष्यताकज्ञानत्वमेव साध्यनिश्चयत्वमिति प्रतिपाद्य संशयव्युदासः प्रदर्शितः । यथा पर्वतः कपिलवह्निमान्न वा इत्यादौ पर्वतनिष्ठविशेष्यता साध्यतावच्छेदकवह्नित्वावच्छिन्नप्रकाराताभिन्नकपिलवह्न्यभावत्वावच्छिन्नप्रकारत्वनिरूपिता एव वर्तते, न तु अनिरूपिता इति उक्तविशेष्यताकज्ञानत्वाभावात् तादृशसंशयव्यावृत्तिः संभवति । यतः अत्र पर्वतनिष्ठविशेष्यतायाः कपिलवह्नित्वतदभावत्वावच्छिन्नप्रकरताद्वयनिरूपितत्वात् । संशयीयविशेष्यतायाः प्रकारताद्वयनिरूपितत्वात् । पर्वतो वह्निमानित्यादौ तु पर्वतनिष्ठविशेष्यतायाः साध्यतावच्छेदक वह्नित्वावच्छिन्नप्रकारतान्यप्रकारत्वानिरूपितत्वेन तादृश–विशेष्यताकज्ञानत्वस्य संभवान्न तदसङ्ग्रहः । समुच्चयेऽपि विशेष्यस्य द्विधा भानमङ्गीकृत्य तद्व्युदासः प्रदर्शितः ।

एवं 'धर्मित्वसाध्यत्वयोरवच्छेदकावनुप्रवेशनीयौ'[3] इत्यादिदीधितिग्रन्थे धर्मित्वाद्युपलक्षणेन सम्बन्धोऽपि पक्षताशरीरे प्रवेशितः जगदीशेन । तथा च – पर्वतत्वावच्छिन्नोद्देश्यता निरूपितसंयोगसम्बन्धावच्छिन्नवह्नित्वा–वच्छिन्नविधेयताकानुमितिं प्रति तद्धर्मावच्छिन्नविशेष्यता निरूपिततत्सम्बन्धावच्छिन्नतद्धर्मावच्छिन्नप्रकारताशालिसिद्धेः सिषाधयिषाविरहविशिष्टायाः प्रतिबन्धकत्वं लभ्यते ।

किन्तु एतादृशप्रतिबन्धकताङ्गीकारे पर्वतत्वसामानाधिकरण्येन एकस्मिन् पर्वते वह्निनिश्चये सति अपरपर्वते विनानुमित्सामनुमितिर्नोदीयात् । उक्तनिश्चयस्य पर्वतत्वावच्छिन्नविशेष्यतानिरूपित संयोगसम्बन्धावच्छिन्नवह्नित्वावच्छिन्न प्रकारताशालित्वेन पर्वतत्वावच्छिन्नोद्देश्यतानिरूपित संयोगसम्बन्धावच्छिन्नवह्नित्वावच्छिन्नविधेयताकानुमितिं प्रति प्रतिबन्धकत्वात् । किन्त्वानुभविकी तादृशानुमितिः । अतः एतादृशस्थले अनुमित्युपपादनाय दीधितिकारोक्तदिशा धर्मिविशोषोऽपि निवेशितः । तथा हि – पर्वतत्वप्रकारेण तत्पर्वतधर्मिकवह्न्यनुमितिं प्रति पर्वतत्वप्रकारेण तत्पर्वत–धर्मिकवह्निनिश्चयस्य सिषाधयिषाविरहविशिष्टस्य प्रतिबन्धकत्वं इति धर्मिविशेषप्रवेशः परिष्कृतः । एतदुपलक्षेण साध्यविशेषोेऽपि निवेशनीयः । तथा हि– वह्नित्वप्रकरेण वह्निसाध्यकपर्वतधर्मिकानुमितिं प्रति सिषाधयिषाविरहविशिष्टायाः वह्नित्वप्रकरेण वह्निविषयकपर्वतधर्निकसिद्धेः प्रतिबन्धकत्वं इति जगाद जगदीशः । अत्रैव समानविशेष्यताप्रत्यासत्या सिद्धेः प्रतिबन्धकत्वं निराकृतम् । यतः पर्वतत्वचत्वरत्वाभ्यां पर्वतचत्वरयोः सिद्ध्यात्मकपरामर्शः यत्र, तदनन्तरं पर्वतांशे वह्निमत्वनिश्चयस्य अप्रामाण्यज्ञानं अनुमित्सा वा, तत्र पर्वते इव चत्वरेऽपि वह्न्यनुमित्यापत्तेः । अप्रामाण्य–ज्ञानाभावविशिष्ट–अनुमित्साविरहविशिष्टसिद्धेः विशेष्यतासम्बन्धेन चत्वरांशे विरहात् । अतः धर्मिविशेषनिवेशः आवश्यकः इति प्रतिपादितम् ।

पक्षतावच्छेदकावच्छेदेनानुमितिं प्रति तदवच्छेदेन सिद्धेः प्रतिबन्धकत्वमित्थं जग्रन्थ – पर्वतत्वावच्छेद्यत्वाव–गाहिपर्वतधर्मिकवह्निविधेयकानुमितिं प्रति पर्वतत्वावच्छेद्यत्वावगाहिपर्वतधर्मिकवह्निमत्वनिश्चयत्वेन प्रतिबन्धकत्वमिति । अत्र पर्वतविशेष्यकत्वं च पर्वतत्वविशिष्टविषयकत्वम् । पर्वतत्वावच्छेद्यत्वं च पर्वतत्वव्यापकवह्निप्रतियोगिकत्वम् । तच्च संसर्गमर्यादया भासते । यथा पर्वतो वह्निमान् इत्यादौ पर्वतत्वव्यापकवह्निप्रतियोगिकसंयोगत्वेनैव संयोगभानाङ्गीकारात् । पर्वतत्वावच्छेदेन तद्रूपानुमितेः प्रमात्ववारणाय पक्षतावच्छेदकावच्छेद्यत्वांशे साध्यप्रवेशः कृतः । एवं पक्षतावच्छेदकावच्छेदेन सिद्ध्यनन्तरं तदवच्छेदेनानुमित्सया तत्सामानाधिकरण्येनापि अनुमितिवारणाय प्रतिबध्यकोटौ पर्वतत्वावच्छेद्यत्वप्रवेशः कृतः । शिखरावच्छेदेन पर्वतो वह्निमान् इत्यादौ पर्वतत्वावच्छेद्यत्वं च स्वरूपसम्बन्धरूपं, न तु पर्वतत्वव्यापकवह्निप्रतियोगिकत्वं, अनुभवविरोधात् । तथा च शिखरावच्छेद्यवह्निसंयोगेनैव वह्निनिश्चयस्य तादृशानुमितिप्रतिबन्धकत्वं, न तु पर्वतत्वावच्छेद्यतत्संयोगेन तन्निश्चयस्य ।

पक्षतावच्छेदकसामानाधिकरण्येनानुमितिं प्रति सिद्धिद्वयं प्रतिबन्धकम् । तथा च – संयोगत्वमात्रावच्छिन्न संसर्गताकपर्वतधर्मिकवह्निसाध्यकानुमितिं प्रति संयोगत्वविशिष्टसंसर्गताक पर्वतधर्मिकवह्निमत्तानिश्चयत्वेन सिद्धिद्वयस्य प्रतिबन्धकत्वम् । पर्वतत्वावच्छेदेनानुमितौ तु संसर्गता न संयोगत्वमात्रावच्छिन्ना । अपि तु पर्वतत्वव्यापक–वह्निप्रतियोगिकसंयोगत्वावच्छिन्ना । अतः पर्वतत्वसामानाधिकरण्येन सिद्धेः तदवच्छेदेनानुमितिप्रतिबन्धकत्वं नास्ति ।

'इत्थं च लिङ्गभेदन्यायोऽनुसरणीयः'4 इत्यादिदीधितिग्रन्थव्याख्याने च अनुमित्सायाः उत्तेजकत्वप्रति–बन्धकत्वादिकं व्यवस्थापितम् ।

ततश्च पक्षविशेष्यकानुमितिं प्रति पक्षविशेष्यकसिद्धेः प्रतिबन्धकत्वं यथाग्रन्थमुक्त्वा समानाकारकसिद्धेः प्रतिबन्धकत्वमित्थं प्रत्यपादि– संयोगसंबन्धावच्छिन्नाधेयतासंबन्धेन पर्वतनिष्ठप्रकारतानिरूपितवह्नित्वावच्छिन्न–विधेयताकनुमितिं प्रति तादृशसंबन्धावच्छिन्नपर्वतनिष्ठ प्रकारतानिरूपितवह्नित्वावच्छिन्नविशेष्यताकनिश्चयत्वेन प्रतिबन्धकत्वं इति । पर्वते वह्निः इत्यनुमितावपि वह्नेरेव विधेयत्वात् पर्वतप्रकारकवह्निविशेष्यकनिश्चयस्य तत्प्रतिबन्धकत्वमुपपद्यते । यतः विधेयत्वं च न प्रकारतानियतं, किन्तु विषयताविशेषरूपम् । यथा गुणानां गुणत्वमित्यादौ विशेष्यस्य गुणत्वस्य विधेयत्वाभिधानादुपाध्यायैः ।

किन्तु यदि पक्षविशेष्यकसिद्ध्युत्तरं साध्यविशेष्यकानुमितिः नानुभवसिद्धा, तदा पक्षनिष्ठप्रकारता–निरूपितसाध्यनिष्ठविशेष्यताकानुमितिं प्रति प्रतिबन्धकत्वं पक्षविशेष्यक साध्यविशेष्यकोभयविधसिद्धेः । एवं पर्वतो वह्निमान् इति निश्चयोत्तरं वह्नौ पर्वतव्याप्यवत्तापरामर्शात् पर्वते वह्निः इत्यनुमितावपि वह्नेर्न विधेयत्वं, किन्तु पर्वतस्यैव ।

यद्व्याप्यवत्तानिश्चयजन्यत्वमनुमितेः तदंशे विधेयतास्वीकारात् । अतः उभयविधसिद्ध्योः साध्यविशेष्यकानुमिति–प्रतिबन्धकत्वमक्षतमेव । प्रसिद्धसाध्यकस्थले च लाघवात् साध्यज्ञानस्यैव् प्रतिबन्धकत्वम् । तत्रानुमित्सायाः उत्तेजकत्वमपि नास्ति । अत्र अनुभवोऽपि प्रमाणम् । प्रसिद्धसाध्यकस्थले साध्यप्रसिद्धेरेव प्रतिबन्धकत्वात् पक्षविशेष्यकानुमितिरेव जायते इत्यनुभवानुरोधेन उभयविधसिद्धेः प्रतिबन्धकत्वे गौरवम् । अतः साध्यज्ञानस्यैव प्रतिबन्धकत्वं, तदपि ह्रदो वह्न्यभाववान् इत्याद्यभावसाध्यकानुमितावेव, न तु भावसाध्यकस्थले, तत्र साध्यविशेष्यकानुमितेरदर्शनात् इति साध्यज्ञानप्रतिबन्धकत्वमपि व्यवस्थापितम् ।

इत्थं च अनुमित्साविरहविशिष्टत्वेन, अप्रामाण्यज्ञानाभावविशिष्टत्वेन, पक्षसाध्यविशेषान्तर्भावेण, पक्षता–वच्छेदकसाध्यतावच्छेदकप्रवेशेन, पक्षतावच्छेदकावच्छेदेन तत्सामानाधिकरण्येन, पक्षसाध्यविशेष्यकत्वादिभेदेन चसिध्यनुमित्योः प्रतिबध्यप्रतिबन्धकभावः प्रतिपादितः पक्षताजागदीश्याम् ।

## पादटिप्पणी

1. पक्षता – ६१
2. पक्षता – ६७
3. पक्षता – १०२
4. पक्षता – ११०

## ग्रन्थर्णम् –


१. पक्षता – चौखम्बा संस्कृत संस्थान
२. तत्वचिन्तामणिमाथुरी – चौखम्बा संस्कृत संस्थान


***************

**Volume XXI : January to June – 2023, ISSN 2250-1711**
**Journal of Veda Samskrita Academy [Recognised in the UGC-CARE List]**

# काव्यस्वरूपपर्यालोचनायां भामहाचार्यस्याभिमतम्

**Bapan Ruidas**
Ph.D Scholar, Department of Sanskrit,
Ramakrishna Mission Vidyamandira
Belur Math, Howrah- 711202, West Bengal
Contact No : 9593322276
Email ID : sanskrit.bapan@gmail.com

**भूमिका**

वैदिकसाहित्ये काव्यकविशब्दयोः बाहुल्येऽपि सुनिर्दिष्टं काव्यलक्षणं नोपलभ्यते। परि अग्निपुराणात् परि विष्णुधर्मोत्तरपुराणात् च कृत्स्ने पौराणिकसाहित्ये काव्यलक्षणं न दृष्टम्। आ भामहात् काव्यलक्षणविषयिणी चर्चास्ति। ततः संस्कृतकाव्यशास्त्रेतिहासस्य काव्यलक्षणचिन्ताशालिनः तात्त्विकाः यथामति काव्यस्वरूपं प्रकाशितवन्तः।

**काव्यस्वरूपपर्यालोचनम्**

भामहात्प्राक् काव्यतात्त्विकाः आलंकारिकाः भेदद्वयेन विभक्ताः आसन्। केचन शब्दालंकारस्य केचन अर्थालंकारस्य प्राधान्यम् आख्यातवन्तः। विषयोऽयं भामहेन तत्कृते काव्यालंकारग्रन्थे काव्यस्वरूपनिर्देशनात् प्रागेव निर्देशितः।[1] भामहमतमिदं स्वीकृत्य कुन्तकाचार्यः गदितवान्- "केषाञ्चिन्मतं कविकौशलकल्पितकमनीयतातिशय: शब्द एव केवलं काव्यमिति केषाञ्चिद् वाच्यमेव रचनावैचित्र्यचमत्कारकारिकाव्यम्"[2] इति। अर्थात् कविनिपुणतया रचितम् अतीव सौन्दर्यातिशयशालिशब्दजालमेव काव्यमिति केचन मन्यन्ते,अपरे तु अभिनवरचनया चमत्कृतजनको वाच्यार्थ एव काव्यम्।

शब्दार्थावेव काव्यम्। शब्दम् अर्थं च विहाय न काव्यमिति सर्वसम्मतम्। शब्देऽर्थः तिष्ठति, शब्दश्रवणात्परमेव तस्यार्थज्ञानं जायते अर्थात् अस्माकं हृदि आदौ शब्दस्य प्रभावो भवति ततः हृदयम् आह्लादितं स्यादिति शब्दालंकारवादिनः। अपरतः अर्थबोधोत्तरम् अर्थालंकारस्य ज्ञानमुत्पद्यते। अतोऽयं बाह्यः गौण: वा।ततः अर्थमाधुर्यतः मनुष्याः प्रभाविताः जाताः। किन्तु 'मन्दं मन्दं प्रवहति पवनः' इत्यनुप्रासमण्डितशब्दाबलेः अर्थमजानन् पाठकः शब्दमाधुर्येण आह्लादितः सन् अतीव उत्तमः अतीव सुन्दरः इति कथयति। अनेन वदितुं शक्नोतिरसास्वादनं शब्द एव कारयति। अतः काव्ये शब्दस्य प्राधान्यमिति स्वीकार्यम्।अपरतः उपमारूपकादयः अर्थालंकाराः काव्यशोभानिष्पादनकर्तारः काव्यजनितानन्दस्य अनुभूतिः अर्थप्रतीतेः परमेव भवतीतिअर्थालंकारवादिनः। अतः काव्ये अर्थस्य गुरुत्वमपि अपरिहार्यमिति नि:संशयम्।

परन्तु भामहमतानुसारं न केवलं शब्दो नाप्यर्थ: स्वतन्त्रतया काव्यपदवाच्यो भवति। यतो हि काव्यगतचारुत्वहेतुत्वम् उभयत्रापि अस्ति। इत्थं मतमुपस्थाप्य भामह: समन्वयधिया समाधानं प्रस्तौति-

तदेतदाहुःसौशब्द्यं नार्थव्युत्पत्तिरीदृशी। शब्दाभिधेयालङ्कारभेदादिष्टंद्वयंतुनः॥[3] इति।

शब्दालंकारे शब्दस्य शोभाधायकत्वमस्ति, अर्थालंकारे च अर्थस्य। यतो हि शब्दार्थयो: मिलनेनैव काव्यं भवति। तस्मादत्र शब्दालंकार: अर्थालंकारश्चउभौ इष्टौ। अत्र 'न:' इति पदप्रयोगेन तन्मतद्वयं एकाङ्गी इतिभामहेन विवक्षितम्। यतो हि न केवलं शब्दालंकार: काव्यम्, नापि केवलं अर्थालंकार:। तयोरलंकारयो: पृथगस्तित्वमपि प्रत्यक्षसिद्धम्। शब्दालंकार: श्रवणमात्रमेव काव्यं

चमत्करोति। यथा – 'ललित-लवङ्ग-लता-परिशीलन-कोमल-मलय-समीरे' इत्यादौ तु श्रवणमात्रमेव श्रोतुः चमत्कृतित्वमुत्पद्यते। तत्र अर्थावबोधादृतेऽपि 'बहु रम्यम्, बहु रम्यम्' इति कथयति श्रोता। किन्तु एवं न घटते अर्थालंकारे। तत्र तु सौन्दर्यम् अर्थबोधादृते न जायते। यथा -

अधर: किशलयराग: कोमलविटपानुकारिणौ बाहू।
कुसुममिव लोभनीयं यौवनमङ्गेषु सन्नद्धम्॥[4]

इत्यादौ अर्थबोधात्परम् उपमालंकारजनितसौन्दर्यमनुभूयते। ततश्च सहृदयाणां हृदयेषु आनन्दो जायते। एवम् अन्वयव्यतिरेकाभ्यां सिद्धान्तमिदमत्र उपनीयते यत्- ये केवलं शब्दालंकारस्य चमत्कारित्वं स्वीकुर्वन्ति वा केवलम् अर्थालंकारस्य ते तु भ्रान्ता:। अत:एतेषां मतं खण्डयित्वा भामहो वदति यत् शब्दालंकारस्य अर्थालंकारस्य च सत्ता पृथक्तया अस्ति। अत्र न एकेन केनापि उत्कृष्टकाव्यं सृज्यते। अत: काव्यसर्जने द्वयोरेवप्रयोजनमस्ति। तथाहि तेन काव्यलक्षणे स्पष्टतया उक्तम् -'शब्दार्थौ सहितौ काव्यम्'[5] इति।आचार्य: भामह: अत्यन्तं संक्षिप्तं काव्यलक्षणं प्रस्तुतवान्। शब्दश्च अर्थश्चेति शब्दार्थौ। तौ सहितौ सहभावयुतौ काव्यम्।

भामह: 'सहितौ' इति पदेन किं विवक्षति इति तु वितर्कस्य विषय:। केषाञ्चन मते सहितपदं गुणवाचकविशेष्यम्। एवञ्च एतस्मात् गुणवाचकविशेष्यात् साहित्यशब्दस्योत्पत्ति:। अस्यार्थस्तु - सहितयो: भाव: सहभाव:। कस्य सहभाव: ? इति चेद् भामहवचनाद् ज्ञायते शब्दार्थयो: सहभाव:। वस्तुगत्या शब्दार्थयो: सहभाव: साहित्यम् सम्बन्ध: मेलनं वा काव्यमिति भामह: विवक्षति।

भामहवचनादिदं न स्पष्टतया ज्ञायते यत् शब्दार्थयो: कीदृश: सम्बन्ध: सहभाव: वा अत्र विवक्षित:। एवमत्र विचार्य वक्तुं शक्यते यत् भामहोक्तं काव्यलक्षणं तु अतिव्याप्तिदोषेण दुष्टम्।यदि शब्दार्थयोः सहभाव: साहित्यं वा काव्यं स्यात्तर्हि भामहोत्तरवर्तिनः आलंकारिकाः काव्यस्वरूपविषये किमर्थं गम्भीरं विचारविश्लेषणं कृतवन्तः। शब्दार्थयोर्नित्यसम्बन्धत्वात् तयोः सहभावविरहःनास्ति। शब्दार्थयोः सहभावः काव्यं चेत् सर्वे प्रयोगाः काव्यपदवाच्याः भवन्ति। अनया दृष्ट्या विचारिते सति भामहकृतकाव्यलक्षणम् अतिव्याप्तिदोषदुष्टं स्यात्।

शब्दार्थयोः विशिष्टः सहभावश्चेत् काव्यपदवाच्यं भवति। अत्र'शब्दार्थौ' इति पदस्य तात्पर्यं खलु 'अलंकृतशब्दार्थौविशिष्टशब्दार्थौ वा'। कुन्तकेनादौ अस्य तथ्यस्य उद्घाटनं कृतम्- "ननु च वाच्यवाचकसम्बन्धस्य विद्यमानत्वादेतयोर्न कथञ्चिदपि साहित्यविरह:, सत्यमेतत्। किन्तु विशिष्टमेवेह साहित्यमभिप्रेतम्"[6] इति। अर्थात् शब्दार्थयोर्मध्ये वाच्यवाचकसम्बन्धस्य नित्यत्वात् तयोः सहभावाभावः कदापि न स्यात्। 'शरीरं तावदिष्टार्थव्यवच्छिन्ना पदावली'[7] इति तु दण्ड्याचार्येणोक्तम्। अस्याशयस्तावत् इष्टार्थ: पदसमूह: काव्यमिति। अग्निपुराणेऽप्युच्यते - 'संक्षेपाद्वाक्यमिष्टार्थव्यवच्छिन्ना पदावली'[8] इति। अत्र उभयोर्लक्षणयो: भामहकृतलक्षणातइष्टपदप्रयोग एव विशिष्टः।

भामहाचार्योऽपि काव्यलक्षणे विशिष्टसाहित्यमेव काव्यमिति विवक्षति। 'शब्दाभिधेयालङ्कारभेदादिष्टंद्वयंतुनः' इति कारिकातः अलंकृतशब्दस्यानुवृत्तिः काव्यलक्षणे कृता। तेन 'अलंकृतशब्दार्थौ विशिष्टशब्दार्थौ वा सहितौ काव्यम्' इति भामहकृतकाव्यलक्षणस्य प्रस्फुटितरूपम्। अलंकारसर्वस्वग्रन्थस्य टीकाकृता समुद्रबन्धेनापि अनुरूपं टीकितम्- 'इह विशिष्टौ शब्दार्थौ काव्यम्'[9]। ननु किमिदं विशिष्टमिति। रमणीयता चारुत्वं सौन्दर्यं विच्छित्तिः चमत्कारादयो हि विशिष्टशब्दस्य पर्यायाः।

अलंकारः गुणः रीतिः वक्रोक्तिः ध्वनिः रसः इत्यादयः तस्यैव रूपभेदाः।आदौ भामहाचार्येण विशिष्टपदस्य अनुसन्धानविषये गभीरतया चिन्तनं कृतम्।तेन मन्यते काव्ये शब्दार्थस्य वक्रता हि काव्यभूषणम्। तथाहि भामहपादेनोच्यते – 'वक्राभिधेयशब्दोक्तिरिष्टा वाचामलंकृतिः'[10] इति।अत्र अलंकृतिपदेन वक्रतासमन्वितौ शब्दार्थौ बुध्येते, न तु रूपकादयः अलंकाराः,शब्दार्थयोः वक्रतातः वाक्यस्य चमत्कारिता आगच्छति।चमत्कृतमिदं वाक्यं काव्यमिति भामहनये। भामहाचार्यस्य मतमिमं स्वीकृत्य कुन्तकपादेनापि स्पष्टतया घोषितम्–'वक्रोक्तिः काव्यजीवितम्' इति। अर्थात् वक्रोक्तिर्हि काव्यस्य प्राणस्वरूपः। भामहोऽपि वक्रोक्तिं काव्यस्य प्राणरूपेण समर्थितवान्।

**उपसंहृतिः**

उपर्युक्तस्य आलोचनायाः आधारेण वदितुं शक्यते यत् - 'शब्दार्थौ सहितौ काव्यम्' इत्यस्य भामहकृतकाव्यलक्षणस्य पूर्णार्थस्तावत् 'वक्रशब्दार्थौ सहितौ काव्यमि'ति। यतो भामहदृष्ट्या विशिष्टशब्दस्यार्थौ वक्रता। काव्यालंकारग्रन्थस्य अनेकत्र शब्दार्थयोः वक्रता काव्यमिति ध्वनितम्।अतः 'वक्रशब्दार्थौ सहितौ काव्यम्' इति काव्यलक्षणं सिद्धम्।

**पादटिप्पणी**

1. शब्दाभिधेयालङ्कारभेदादिष्टंद्वयंतुनः, काव्यालंकारः - १/१५, उत्तरार्धः
2. वक्रोक्तिजीवितम् - १/७, वृत्तिः, पृ. १४
3. काव्यालंकारः - १/१५
4. अभिज्ञानशकुन्तलम् -१/१९
5. काव्यालंकारः - १/१६,पूर्वार्धः
6. वक्रोक्तिजीवितम् - १/७, वृत्तिः, पृ. २०
7. काव्यादर्शः -१/१०
8. अग्निपुराणम् -३३७/६
9. अलंकारसूत्रम्, पृ. ४
10. काव्यालंकारः - १/३६

**सहायकग्रन्थाः**


१. कुन्तक। *वक्रोक्तिजीवितम्*। सम्पा. अञ्जलिका मुखोपाध्याय। कलकाता: सदेश, २०१६

२. *कुन्तकस्य काव्यदर्शनम्*। सम्पा. सीतानाथ आचार्यशास्त्री। कलकाता: संस्कृत पुस्तक भाण्डार, २०१४

३. दण्डी। *काव्यादर्शः*। चिन्मयी चट्टोपाध्याय। कलकाता: पश्चिमवङ्ग राज्य पुस्तक पर्षत्,२०१८

४. रुय्यकः। अलंकारसूत्रम्। सम्पा. टि. गणपति शास्त्री। त्रिवान्द्राम: त्रवान्कुर गभर्मेन्टे प्रेस, १९१५

५. *शब्दार्थतत्त्व*। सम्पा. श्रीरवीन्द्रनाथकुमार भट्टाचार्य्य। कोलकाता: सदेश, २००९

६. भामह। *काव्यालंकार*। सम्पा. पि.भि. नागनाथ शास्त्री। दिल्ली: मोतिलाल वनारसीदास पावलिशार्स, १९९१

७. *काव्यालंकारः*। सम्पा. रामानन्द शर्मा। वाराणसी: चौखम्बा संस्कृत सीरीज आफिस, २०१३


*************

**Volume XXI : January to June – 2023, ISSN 2250-1711**
**Journal of Veda Samskrita Academy [Recognised in the UGC-CARE List]**

# मानविकमूल्यबोधे प्रतिमानाटकम् : समीक्षात्मकमेकं विश्लेषणम्

**Munmun Maity**
Ex student of Rashtriya Sanskrit Sansthan
Vill : Uttarbara, Post : Kheput- 721148
Dist : Paschim Medinipur, West Bengal
Contact No. : 8145476895
E-mail : munmun19891995@gmail.com

प्रबन्धसारः –

मर्यादासम्पन्नः बुद्धियुक्तः जनो मनुष्यशब्देनाभिधीयते। जगति विविधजनानां विविधमनोभावाः। परन्तु केवलं द्वौ बाहू द्वौ पादौ वा स्वीकृत्य मनुष्याकारः भवति चेत् मानवः इत्येतत् न मन्तव्यम्। मनुष्यो भवितुं समीचीनमानविकतायाः आवश्यकता वर्तते। सद्विचारः, सद्व्यवहारः, वृद्धानां सम्माननम्, बालप्रेम चेतत् सर्वं मानविकतायाः लक्षणम् अस्ति। न्यायनिष्ठा, सतता शिष्टाचारश्च मानविकमूल्यबोधस्य प्रधानभित्तयः। मनुष्यस्य मनसः सुप्तचैतन्यशक्तिः मनुष्यम् अन्येभ्यः प्राणिभ्यः पृथक् करोति। न केवलम् अन्येषां प्राणिनाम् इव भोजनं निद्रा वा, अपि तु एष मानविकमूल्यबोधः मानवानां श्रेष्ठपरिचयः। मानविकमूल्यबोधः मानवानां मानसिकविकासं प्रवर्धयति। एकः शिशुः यदा जायते तदा पापरहितो भवति। तस्य पितरौ तं यत्नेन प्रेम्णा च पालयतः। सम्यक् जनं भवितुं शिक्षयतः। आर्तस्य सेवा, अन्यायस्य विरोधः, वृद्धानां साहाय्यं चेत्यादि। न कस्यचित् जनस्य मानवमूल्यबोधः जन्मतः प्रबुद्धो भवति। शनैः शनैः परिवारेण, समाजेन, विद्यालयेन, सर्वैः च तस्य विवेको जाग्रतो भवति। एतस्मात् मानविकमूल्यबोधात् एव आदर्शिकपवित्रताविषयाः विकसिताः भवन्ति। भावनया आदर्शगतैक्येन च एकस्मिन् मनुष्ये समीचीनमूल्यबोधो विकसितो भवति, येन समाजस्य परिवारस्य च उन्नतिः स्यात्। मानविकता मानवजीवने प्राप्ता सम्पद्, कस्यापि पुस्तकस्य पठनेन सा न लभ्यते। एकं मनुष्यम् अपरस्मात् मनुष्यात् आचारेणैव पृथक् कर्तुं शक्यते। कश्चिन्मनुष्यः तस्याधीनस्थेन सह कथं वार्तालापं करोति, व्यवहारं करोति इत्येष एव तस्य मानविकमूल्यबोधः। तस्य जनस्य मूल्यबोधः सम्यक् अस्ति चेत् सः स्वकर्मचारिणा सह सम्यक् व्यवहारं करिष्यति, न तु कठोररूपेण। जनान् प्रति प्रेम, जनानां कल्याणाय अग्रेगमणम्, विपत्काले जनानां साहाय्यं, जनान् प्रति सम्मानप्रदानम् इत्येतानि सर्वाणि मूल्यबोधस्य पर्यायाः। महाकविभासकृतं 'प्रतिमा' इत्याख्यं नाटकं मानविकमूल्यबोधस्य दीप्तिमत् उदाहरणम्। यत्र न केवलं रामसीतयोः वृत्तान्तः वर्णितः, अपि तु रामस्य कर्तव्यत्वं, भ्रातृत्वं, पतित्वं, प्रजापालनं चेत्येतेषु मूल्यबोधः परिलक्षितः।

**शब्दसङ्केतः-** मानविकमूल्यबोधः, आदर्शबोधः, कर्तव्यबोधः, पवित्रता, सामाजिकता।

## मूलम् -

जनानां मध्ये प्रेम, स्नेहः, सहानुभूतिः इत्येतैः मानविकमूल्यबोधः जागरितो भवति। मनुष्यशब्देन सह यथा मानविकता अभिन्ना, तथा मानविकतया सह मूल्यबोधोऽपि अभिन्नः। मानविकता मूल्यबोधश्च परस्परम् अविच्छिन्नरूपेण सम्बद्धौ। यस्य हृदये मानविकमूल्यबोधः प्रबुद्धो भवति सः वस्तुतः एव मानवप्रेमी। वस्तुतः यः विषयः मानवानां गुणो भवितुं योग्यः स एव मानविकमूल्यबोधः। केचन मानविकमूल्यबोधाः सन्ति- प्रेम, मैत्री, दया, विश्वासः, आदरः, न्यायः, कर्तव्यता, श्रद्धा, स्नेहः, सत्यता, अहिंसा, क्षमा इत्यादयः।

पृथिव्यां मानवस्य आयुः शतवर्षाणि भवन्ति। शतवर्षाणि जीवितुम् अवश्यमेव सत्कर्म कर्तव्यम्। अतः ईशोपनिषदि उक्तम्- 'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे'॥[1]

सत्कर्मणा मूल्यबोधो विकसितो भवति। असत्कर्मणा मनुष्यः मूल्यबोधं विलोपयति। यदि कश्चित् जनो विवेकी भवति तर्हि कुसङ्गे पतत्यपि अन्तिमे सः कुसङ्गात् आत्मानं मोचयति। कदाचित् जनः प्रमादतः अपि शिक्षते। अक्षसूक्ते दृश्यते यत् जनः

लोभात् अक्षक्रीडां करोति। परन्तु अन्तिमे विवेकबोधे प्रबुद्धे स्वयं कथयति -

'अक्षैर्मा दीव्यः कृषिमित् कृषस्व वित्ते रमस्व बहु मन्यमानः तत्र गावः कितव तत्र जाया तन्मे विचष्टे सवितायमर्यः'॥[2]

तस्मात् हिंसा, घृणा, लोभः इत्येतेषां त्यागेनैव आदर्शमूल्यबोधो निर्मीयते। अनेन मूल्यबोधेन मनुष्यः श्रृङ्खलितो भवति। समाजस्य हितं चिन्तयित्वा आदर्शजनो भवति। अतः मानवजीवने मानविकमूल्यबोधः अत्यन्तम् आवश्यकः।

महाकविभासविरचितं प्रतिमानाटकं सप्ताङ्कविशिष्टम्। यद्यपि एतत् नाटकं रामायणाधारितं तथापि कविः स्वकीयनाट्यप्रतिभया 'प्रतिमा'नाटकं नूतनरूपेण निर्मितवान्। मातुलालयात् आगमनसमये भरतः प्रतिमागृहे सूर्यवंशीयमृतराज्ञां मूर्तिभिः सह स्वपितुः दशरथस्य मूर्तिं दृष्ट्वा दशरथस्य मृत्युवार्तां ज्ञातवान्। अत्रैव भासविरचितप्रतिमानाटकस्य नामकरणस्य सार्थकता विद्यते। नाटकेऽस्मिन् मानविकमूल्यबोधस्य न्यासः स्पष्टो वर्तते। प्रतिमानाटके सीताचरित्रं मानविकतायाः प्रतिमूर्तिस्वरूपम्। यदा तस्यै परिचारिका महाराजस्य सुकुशलतायाः, कुमारस्य च अभिषेकस्य सुसमाचारं दत्तवती तदा सीतादेवी स्वाङ्गात् अलङ्कारं निष्काश्य चेट्यै दत्तवती। यतो हि सा जानाति स्म यत् सुसमाचारवाहकायै किमपि दातव्यम् इति।

महाराजदशरथस्य राज्यभारसमर्पणविषये सीतादेव्याः जिज्ञासुमनः ज्ञातुम् इच्छति यत् पितुः राज्यभारसमर्पणस्य प्रतिक्रियारूपेण कुमाररामचन्द्रः स्वपितरं किम् उक्तवान्। कुमारः रामचन्द्रः सीतादेव्याः मनोवृत्तिम् अवगम्य पुनः मैथिलीं पृष्टवान् यत् रामचन्द्रः किम् उत्तरं दातुं शक्नोति इति। तदा सीता उवाच-

'तर्कयम्यार्यपुत्रेणाभणित्वा किञ्चिद् दीर्घं निःश्वस्य महाराजस्य पादमूलयोः पतितमिति'॥[3]

योग्या भार्या एव स्वभर्तुः मनोवृत्तिम् अवगन्तुं शक्नोति। कुमारभरतस्य राज्याभिषेकस्य, कुमाररामचन्द्रस्य चतुर्दशवर्षाणि यावत् वनवासस्य च विषये श्रुत्वा सा कामपि प्रतिक्रियां न दत्तवती, किन्तु पत्युः पत्नीरूपेण भर्तुः अनुगमनं कर्तव्यमिति निश्चितवती। सा राजकुमारी आसीत्। कदापि कामपि पीडां न अनुभूतवती। राजभवने राजकुमारीरूपेण वर्धिता। राजपुत्र्याः सर्वविलासान् त्यक्त्वा भर्तुः अनुयायिनीं भूत्वा वने वासः कियत् दुष्करमिति ज्ञात्वापि सा किमपि चिन्तनं न अकरोत्। अपि तु पतिः तया सह तिष्ठति चेत् वनवासोऽपि तस्याः कृते राजप्रासादवत्। न केवलं योग्यभार्यारूपेण मानविकतां परिचाययति स्म, अपि तु श्वशुरकूलं प्रति अपि सेवापरायणा आसीत्। एकस्याः स्नुषायाः यथा कर्तव्यम्, तथा तु वने स्थिता न सम्भवति, अतः सा स्वश्वशुरकुलस्य हिताय देवान् प्रणतवती। सा साधुसन्यासीन् प्रत्यपि अतिथिवत्सला आसीत्। अतः सा रावणरूपिणं कटपसाधुमपि अतिथिरूपेण आप्यायितवती। रावणः अपि अवसरं प्राप्य स्वसाधुरूपं परित्यज्य राक्षसावतारं गृहीत्वा सीतादेवीम् अपहृतवान्। दीर्घकालं यावत् युद्धेन रावणस्य वधं कृत्वा सीतादेव्याः उद्धारात् परम् एकदा परिचिते आश्रमे कन्याभिः सह पुनः मिलितवती। सीतादेवी पुरातनदिनानि स्मरन्ती अतीव प्रसन्ना आसीत्, परन्तु सहसा हरणवृत्तान्तं स्मृत्वैव मृदुस्वभावा सीता भीता अभवत्। सा तत् दुःखदं दिवसं स्मर्तुं न इच्छति।

राज्ञः दशरथस्य ज्येष्ठः पुत्रः रामचन्द्रः सुशीलः, धैर्यवान्, न्यायपरायणः मृदुभाषी च आसीत्। तस्य राजसिंहासनं प्रति लोभः नासीत्। अतः राज्ञः दशरथस्य कुमाररामचन्द्रः राजा भवतु इति अभिप्रायं ज्ञात्वा प्रारम्भे तत् अनङ्गीकृतवान् अपि पश्चात् पितुः आदेशेन राज्यभारग्रहणे ऊररीकृतवान्। पुनः यस्मिन् क्षणे सः स्वस्य अभिषेकः स्थगितः इति ज्ञात्वा न आस्फालितवान् अपि तु अवदत् -

'वनगमननिवृत्तिः पार्थिवस्यैव तावन्मम पितृपरवत्ता बालभावः स एव।

नवनृपतिविमर्शे नास्ति शङ्का प्रजानामथ च न परिभोगैर्वञ्चिता भ्रातरो मे' ॥[4]

यदा वृद्धसेवकः कञ्चुकीयः स्वस्य अभिषेकरोधस्य कारणं स्वयं माता कैकेयी इति ज्ञापितवान् तदापि स तत्र गुणान् अपश्यत्-

'यस्याः शत्रुसमो भर्ता मया पुत्रवती च या फले कस्मिन् स्पृहा तस्या येनाकार्यं करिष्यति' ॥[5]

माता कदापि पुत्रस्य अमङ्गलं कामयितुं न शक्नोति। कैकेयी सुमित्रा च जन्ममातारो न सन्ति चेदपि ताः कुमाररामचन्द्रः स्वजन्ममातुः कौशल्यायाः अपेक्षया कदापि न्यूनं न चिन्तितवान्। कुमारभारतस्य राज्याभिषेकविषये अपि सः मातुः कैकेय्याः लोभरहितं हृदयं दृष्टवान्। अपि च स्वस्य राजपदे अभिषेकस्य विषये सर्वेषां समर्थनं सः पक्षपातरूपेण पश्यति -

'शुल्के विपणितं राज्यं पुत्रार्थे यदि याच्यते तस्या लोभोऽत्र नास्माकं भ्रातृराज्यापहारिणाम्' ॥[6]

कुमारः रामचन्द्रः मातुः कैकेय्याः विषये कामपि निन्दां श्रोतुम् न इच्छति। सः सर्वाः मातृः समानरूपेण पश्यति। अत्रापि तस्य मानविकमूल्यबोधः सुस्पष्टो वर्तते।

अभिषेकरोधस्य कथां ज्ञात्वा सुमित्रानन्दनः लक्ष्मणः यदा अत्यन्तं क्रुद्धः अभवत् तदा कुमारः रामचन्द्रः स्वभ्रातरं लक्ष्मणं शान्तयति-

'भवतो वा भवेद् राजा वयं वा ननु तत समम् यदि तेऽस्ति धनुः श्लाघा स राजा परिपाल्यताम्' ॥[7]

पितुः सत्यपालनार्थं चतुर्दशवर्षाणि यावत् वनवासं स निश्चितरूपेण स्वीकृतवान्। अपि च सः एतस्य दुःखस्य भारम् एकः एव वोढुम् इच्छति स्म, अतः सः एकः एव वनवासं गन्तुं निश्चितवान्, परन्तु पतिव्रता पत्नी अनुजलक्ष्मणः च तेन सह गन्तुम् इच्छतः, तस्मात् तयोः अनुरोधं स्वीकृतवान्। भ्रातुः भरतस्य भ्रातृप्रेम दृष्ट्वा सः अवदत्-

'अद्य खल्ववगच्छामि पित्रा मे दुष्करं कृतम् कीदृशस्तस्यस्नेहो भ्रातृस्नेहोऽयमीदृशः' ॥[8]

सः प्रथमवारं मातुलालये पालितं कुमारं भरतं दृष्टवान्। भ्राता यावत् वा दूरं तिष्ठतु, तथापि तेषामं मध्ये भ्रातृबन्धनम् अभेद्यम्। वैमात्रेयस्य पुत्रः इति विचिन्त्य सः कञ्चिदपि भ्रातरं दूरं न स्थापितवान्। सः स्वस्य यथोचितं प्रेम समानरूपेण दत्तवान्।

भ्राता भरतोऽपि अग्रजेन रामचन्द्रेण सह वनवासे स्थित्वा ततः राज्यं चालयितुम् इच्छति। एतस्य उत्तररूपेण कुमारः रामचन्द्रः अवोचत् –

'पितुर्नियोगादहमागतो वनं न वत्स! दर्पान्न भयान्न विभ्रमात् । कुलं च नः सत्यधनं ब्रवीमि ते कथं भवान्नीचपथे प्रवर्तते' ॥[9]

भ्रातुः भरतस्य भ्रातृवत्सलतां पूज्यः पिता दशरथः अदृष्ट्वा गतः इत्यतः भगवन्तं प्रति धिक् कृतवान्।

वनवासे स्थित्वा अपि पितुः वार्षिकश्राद्धानुष्ठानं कथं विधिपूर्वकं करिष्यति इति विचिन्त्य स व्याकुलितोऽभवत्। सः जानाति स्म यत् पितृपुरुषाः विशेषविधिना श्राद्धान्नदानेन तृप्तिं प्राप्नुवन्ति। किन्तु वनवाससमये तु एतत् विधिपूर्वकं श्राद्धानुष्ठानं कर्तुं न शक्यते। अतः राक्षसरूपी रावणः कपटसाधुवेशेन यत् विहितवान् तत् अत्यन्तं कठिनमपि अङ्गीकृतवान्।-

'सौवर्णान् वा मृगांस्तान् मे हिमवान् दर्शयिष्यति भिन्नो मद्बाणवेगेन क्रौञ्चत्वं वा गमिष्यति' ॥[10]

राक्षसराजानं रावणं हत्वा सीतादेव्याः उद्धारं कृत्वा चतुर्दशवर्षाणि यावत् पितृसत्यपालनानन्तरम् अयोध्यां प्रत्यागत्य भरतं प्रति प्रोक्तवचनानुसारं राज्यभारं स्वीकृतवान्।-

'स्वर्गेऽपि तुष्टिमुपगच्छ विमुञ्च दैनं कर्म त्वयाभिलषितं मयि यत् तदेतत्।

राजा किलास्मि भुवि सत्कृत् भारवाही धर्मेण लोकपरिरक्षणमभ्युपेतम्' ॥[11]

राज्ञः दशरथस्य सुमित्रायाश्च अन्यतमः पुत्रः कुमारः लक्ष्मणः। अपूर्वं भ्रातृस्नेहयुक्तमेकं पात्रम्। ज्येष्ठभ्रातुः रामचन्द्रस्य अभिषेकरोधस्य

विषये श्रुत्वा स अतीव क्रुद्धः अभवत्। क्रमेण राजा भवेत्। तदनुसारेण ज्येष्ठभ्राता राजा भविष्यति इत्येव स्वाभाविकम्। अतः अभिषेकरोधस्य विषये श्रुत्वा सः क्रुद्धः अभवत्, परन्तु अग्रजस्य अनुरोधेन पुनः शान्तः अभवत्। कुमारः लक्ष्मणः रामचन्द्रस्य आज्ञानुसारं सीतादेवीं प्रति वनवासगमननिवारणकथने अवदत्-

'अनुचरति शशाङ्कं राहुदोषेऽपि तारा पतति च वनवृक्षे याति भूमिं लता।

त्यजति न च करेणुः पष्कलग्नं गजेन्द्रं व्रजतु चरतु धर्मं भर्तृनाथा हि नार्यः'॥ [12]

एकतः यथा अग्रजस्य रामचन्द्रस्य आज्ञां न निराकरोति तथा अपरतः सीतादेव्याः मातृसमायाः भ्रातृजायाः एकनिष्ठं प्रेम दृष्ट्वा भ्राता स्तम्भितो भवति। तस्य मानविकबोधः सीतादेवीं वनवासगमने निवारयितुं बाधते। अपि तु अग्रजस्य रामचन्द्रस्य अनुयायिरूपेण कुमारलक्ष्मणः अपि वनवासार्थं गन्तुम् इच्छति। सीतादेव्या निराकृते सति कुमारस्य लक्ष्मणस्य उक्तिः -

'गुरोर्मे पादशुश्रूषां त्वमेका कर्तुमिच्छसि तवैव दक्षिणः पादो मम सेव्यो भविष्यति'॥ [13]

भ्रातुः कृते एतादृशः आत्मत्यागः कुमारलक्ष्मणस्य सुन्दरमानविकतायाः परिचयं ददाति। मातुः कैकेय्याः कथनानुसारं कुमाररामचन्द्रस्य वनवासो भविष्यति, परन्तु अनुजलक्ष्मणः कदापि पूज्यभ्रातुः केवलम् एकाकी दुःखं भविष्यति इति न वाञ्छति, अतः सः अपि तेन सह गन्तुम् अत्यन्तम् अभिलाषी। राज्ञः दशरथस्य कैकेय्याः च एकः पुत्रः कुमारः भरतः। भ्रातृप्रेम्णा कुमारलक्ष्मणात् कस्मिंश्चित् अंशे अपि न्यूनो नासीत्। सः बाल्यकालात् एव मातुलालये पालितः। स भ्रातॄन् न कदापि दृष्टवान् तथापि भ्रातृप्रेम तेषु अभेद्यं वर्तते। पितुः मृत्युकारणम्, अग्रजस्य रामचन्द्रस्य निर्वासनकारणं च माता कैकेयी इति ज्ञात्वा कुमारः भरतः मातरं कैकेयीम् अत्यन्तं भर्त्सितवान् -

'त्यक्त्वा स्नेहं शीलसंक्रान्तदोषैः पुत्रास्तावन्नन्वपुत्राः क्रियन्ते लोकेऽपूर्वं स्थापयाम्येष धर्मं भर्तृद्रोहादस्तु माताप्यमाता'॥ [14]

मातरं कैकेयीं प्रति भर्त्सनं तस्य नोचितम्। परन्तु मातुः एतादृशं कार्यं समर्थयितुं न शक्तवान्। परन्तु पश्चात् यदा सत्यं ज्ञातवान् यत् महाराजस्य शापवृत्तान्तस्य पूर्तये माता एनां निन्दां शिरसि गृहीतवती तदा सः मातुः कृते गर्वितः अभवत्, स्वस्य दुष्कृतार्थम् अत्यन्तं लज्जितो भूत्वा क्षमायाचनां कृतवान्। ज्येष्ठभ्रातरं वनवासात् प्रत्यागन्तुं बहु अनुरोधं कृतवान्, परन्तु कुमाररामचन्द्रः पितृसत्यपालनात् मुक्तिं न स्वीकृतवान् इति कारणतः कुमारः भरतः अग्रजस्य पादुके आदायैव राज्यशासनं करिष्यति इति प्रतिज्ञां कृतवान्। तथापि सः कदापि सिंहासने न उपवेक्षति यत्र ज्येष्ठाग्रजस्य अधिकारः अस्ति।-

'पादोपभुक्ते तव पादुके म एते प्रयच्छ प्रणताय मूर्ध्ना

यावद् भवानेष्यति कार्यसिद्धिं तावद् भविष्याम्यनयोर्विधेयः'॥ [15]

माता कैकेयी नाटकस्य आरम्भे अतीव कुटिलपात्ररूपेण दृश्यते, परन्तु पश्चात् सर्वसत्यप्रकाशनान्तरं सा स्नेहशीला दयालूः माता, योग्या पत्नी च इत्येवं परिचीयते। या शापात् भर्तारं मोक्तुं सर्वापवादं गृहीतवती। पुत्रस्य भरतस्य राज्याभिषेकः तस्याः न काम्यः आसीत्। अपि तु यदि रामचन्द्रः वनवासार्थं न प्रेष्यते तर्हि महाराजः शापात् मुक्तः न भविष्यति। सा शक्नोति चेत् स्वपुत्रं भरतं वनवासं प्रेषयितुं शक्नोति स्म, परन्तु महाराजः स्वपुत्रशोकेन प्राणत्यागं करिष्यति इति शापितः आसीत्। यतः भरतः बाल्यकालादेव मातुलालये पालितः, तस्य प्रवासः स्वाभाविकः आसीत्। अतः उपायरहिता राजानं दशरथं रामचन्द्रस्य चतुर्दशवर्षाणि यावत् वनवासः, भरतस्य सिंहासनलाभः च इत्येवं प्रोक्तवती। यद्यपि चतुर्दशदिनानि इत्येवं वक्तुम् अभिप्रायः

आसीत्, तथापि पर्याकुलचित्तेन चतुर्दशवर्षाणि इत्येवं स्खलितम् आसीत्।

'तेनोक्तं रुदितस्यान्ते मुनिना सत्यभाषिणा यथाहं भोस्तृमप्येवं पुत्रशोकादि विपत्स्यसे। इति॥' [16]

राजा दशरथः यथा अत्यन्तं स्नेहशीलः पिता आसीत् तथा कर्तव्यनिष्ठः पतिः आसीत्। सः स्वस्य चतुरः पुत्रान् समानरूपेणैव प्रीतवान्। कुमाररामचन्द्रस्य ज्येष्ठपुत्रत्वात् तस्य राजपदाभिषेकः कथमपि पक्षपाती इति वक्तुं न शक्यते। नियमानुसारं वयसः क्रमेण नृपः वाञ्छनीयः भवति। तया दृष्ट्या ज्येष्ठपुत्रस्य रामचन्द्रस्य राजा भवितुं स्वाभाविकम्। पुनः तिसृभ्यः पत्नीभ्यः अपि सम्मानं ददाति स्म। अतः सः कैकेय्याः व्रतम् अतीव कठिनम् इति ज्ञात्वाऽपि अङ्गीकृतवान्। भरतस्य सिंहासनापेक्षया रामचन्द्रस्य चतुर्दशवर्षवनवासकथनेन अतीव दुःखितः आसीत्। यद्यपि सः शापितः आसीत् यत् पुत्रशोकेन प्राणत्यागं करिष्यति इति। पूर्वं कदाचित् राजा दशरथः मृगयाकाले गहनरात्रौ कलशेन जलं पूरयन्तं मुनिकुमारं हस्तिभ्रमेण शब्दभेदिबाणस्य साहाय्येन हतवान्। ततः राजा दशरथः मुनिकुमारम् अन्धपितुः समीपम् आनयत्। ततः सः अन्धपिता राजानं दशरथं शप्तवान्। तदनुसारेण च ज्येष्ठपुत्रस्य रामचन्द्रस्य विरहम् असहन् प्राणत्यागम् अकरोत्।

मानविकमूल्यबोधविषये अपरवृत्तान्तः उल्लेखनीयो वर्तते। मानवकोटौ नास्ति चेदपि मानविकमूल्यबोधदृष्ट्या मनुष्यमपि अतिक्रान्तवान्। पञ्चमाङ्कस्य अन्ते षष्ठाङ्कस्य च प्रारम्भे जटायुः इति नाम्ना एकः पक्षी अवतरन् दृश्यते। राक्षसराजः रावणः सीतादेवीम् अपहृत्य लङ्कागमनसमये जटायुना प्रतिरुद्धः आसीत्। स्वजीवनस्य मायां परित्यज्य सीतादेवीम् उद्धर्तुं तस्य जीवनसङ्घर्षः। सः जीवनस्य अन्तिमश्वासपर्यन्तं सीतादेवीं परित्राययितुं प्रयतमानोऽभवत्। यद्यपि मानविकमूल्यबोधः इति पदं मनुष्यैः सह सुसम्बद्धं भवति तथापि नाटकेऽस्मिन् पक्षिवर्गेऽपि परिलक्ष्यते। एवं प्रत्येकं पात्रमाध्यमेन प्रतिमानाटके मानविकमूल्यबोधः परिस्फुटोऽस्ति।

**पादटिप्पणी**

1. ईशोपनिषद् – 2, पृ. 4)
2. अक्षसूक्त - 10/34/3, पृ. 157
3. प्रतिमा नाटक – 1, पृ. 29
4. तदेव - 1/14, पृ. 42
5. तदेव - 1/13, पृ. 40
6. तदेव - 1/15, पृ. 44
7. तदेव - 1/20, पृ. 51
8. तदेव - 4/12, पृ. 167
9. तदेव - 4/20, पृ. 178
10. तदेव - 5/12, पृ. 210
11. तदेव - 7/11, पृ. 272
12. तदेव - 1/15, पृ. 44
13. तदेव - 1/27, पृ. 62
14. तदेव - 3/19, पृ. 142
15. तदेव - 4/25, पृ. 184
16. तदेव - 6/15, पृ. 247

**ग्रन्थपञ्जि-**

1. स्वामी नित्यमुक्तानन्द, उपनिषद ग्रन्थावली, उद्बोधन कार्यालय , कलकाता, 2017
2. भट्टाचार्य , भवानीप्रसाद , तारकनाथ अधिकारी, वैदिक संकलन , संस्कृत वुक डिपो , कलकाता, 2012
3. वन्द्योपाध्याय, अशोककुमार , प्रतिमा नाटकम्, सदेश , कलकाता , 2016
4. शास्त्री , शङ्करराम, प्रतिमा नाटकम्, श्री बालमनोरमा प्रेस, माद्रासा , 1951
5. वसु , श्री रामापद , प्रतिमा नाटकम् , भिनास् प्रिन्टिं ओयार्कस् , कलकाता , 1968

*********

**Volume XXI : January to June – 2023, ISSN 2250-1711**
**Journal of Veda Samskrita Academy [Recognised in the UGC-CARE List]**

# वैदिकदेवतानां चारित्रिकवैशिष्टविवेचनम्

**Jayoshree Paul**
NET, JRF
Ph.D. Scholar
Department of Sanskrit
Tilka Manjhi Bahgalpur University
Bhagalpur, Bihar- 812007
Contact No. : 8944057791 (Whatsapp No. : 8001789004)
E-mail : jayoshreepaul@gmail.com

**भूमिका –**

आत्मनिष्ठास्तत्त्वद्रष्टारः ऋषयः प्रकृतिशिल्पात्मके पवित्रतमे मृगचर्मणि समासीनाः विशुद्धज्ञानस्वरूपं मन्त्रब्राह्मणात्मकम् अपौरुषेयं वेदं साक्षात्कृतवन्तो दृष्टवन्तो वा। **'मन्त्रब्राह्मयोर्वेदनामधेयम्'**[1], **'मन्त्रब्राह्मणात्मकः शब्दराशिर्वेदः'**[2], **'वेदशब्देन ऋग्यजुः सामानि ब्राह्मणसंहितानि उच्यन्ते'**[3] चेत्येवं वेदशब्दव्युत्पत्तिः। वेदः प्रथमं मन्त्राकं सत्त्वं प्रकाशकं परं मतोविकासस्वभावत्वेन ब्राह्मणोपनिषदादिशाखाप्रसारितात्मभवं स्वस्मिन् स्थितां ज्ञानप्रभां प्रसारयति। भारतीयाः वेदं पवित्रतमज्ञेयाध्येयरूपेण श्रद्धाभूमौ चिरं प्रतिष्ठापितवन्तः वर्तन्त एव। वेदानां धार्यतायाः मान्यतायाश्च निर्धारणक्रमे इदं सुस्पष्टमेव ज्ञातव्यं यद् वेदेषु वैज्ञानिकी दृष्टिः प्रामुख्यं भजते स्म। वेदशब्देन तत्कथ्यप्रकाशनपराणि तद्विकासभूतानि ब्राह्मणोपनिषदादीन्यपि शास्त्राणि बोध्यानि, तत्र तत्रागतान्यपि विज्ञानतत्त्वानि वेदगतान्येव मन्तव्यानि। '**मन्त्रब्राह्मणयोर्वेदनामधेयम्**' इति तु स्पष्टमेव समुद्घोषितं वर्तते। वेदेषु प्रतिपाद्य रूपेण यस्य यज्ञस्य वर्णनं समुपलभ्यते तद्यज्ञविषये तत्त्वविदाम् इयम् अवधारणा स्मृतौ सततमेव संरक्षणीया '**स्वीयानां भावानाम् अन्यत्रार्पणम् अन्यतश्च भावनम् इतीयम् आदान-प्रदानप्रक्रिया यज्ञः**'[4]। ऋषिभिः तत्त्वदर्शनप्रणवस्य साक्षात्कृततत्त्वाः मन्त्रब्राह्मणरूपाः वेदा एव विश्वस्य सर्वविधकाम्यप्रकाशस्य च मूलभूताः। साक्षात्कृततत्त्वात्मकम् इदं मन्त्रब्राह्मणात्मकं वेदशास्त्रमेव अस्य विश्वस्य प्रतिष्ठेति।

**देवताशब्दनिर्वचनम् –**

देव शब्दस्य बहवो हि अर्थाः भवन्ति। देवः देवं देवता चेति त्रिषु लिङ्गेषु प्रयोगः विद्यते। इदं तैत्तिरीयब्राह्मणे तृतीयाष्टके दशम-एकादश-द्वादशाध्यायेषु स्पष्टं प्रतिपादितम्। क्लीब्लिङ्गे देवं शब्दस्य अर्थः भवति इन्द्रियमिति। दीव्यते अनेन इति व्युत्पत्त्या दिव् क्रीडायाम् इत्यस्माद्धातोः करणे अच् कृते सति तस्य शब्दस्य निष्पत्तिः भवति। पुंलिङ्गे देवः इत्यस्य अर्थाः देवतादयः भवन्ति। तत्र दीव्यति आनन्देन क्रीडति इति व्युत्पत्त्या दिवधातोः घञ् कृते सति अस्य शब्दस्य निष्पत्तिः भवति। मनुस्मृतौ उच्यते –

**'देवान् ऋषीन् मनुष्याँश्च पितृन् गृह्याश्च देवताः। पूजयित्वा ततः पश्चात् गृहस्थः शेषभुग् भवेत्।।'**[5]

देवशब्दस्य राजा, मेघः, पारदः ऋत्विगादयोऽपि अर्थाः भवन्ति। परन्तु सामान्यतया देवशब्दस्य देवता अर्थः एव प्रचलितः अस्ति। देवताशब्दः स्वार्थे सप्तम्यास्त्रल् इत्यनेन तल् कृते सति निष्पन्नः भवति। यस्य अर्थः देवः एव भवति।

**देवतानां स्वरुपम् –**

देवानां मातापितरौ द्यौः एवं पृथ्वी स्तः इति बहुषु ग्रन्थेषु वर्णितं विद्यते। अन्यत्र केचन देवाः अन्येभ्यः देवेभ्यः उत्पन्नाः सन्तीति कथास्ति, अन्यत्र च प्रजापतिभ्यः हिरण्यगर्भेभ्यः वा। वैदिकदेवतानाम् उत्पत्तेः यः आधारः ऋग्वेदे दृश्यते। वैदिकदेवानां वास्तविकं रहस्यम् अपि पुराणेषु एव विद्यते। उच्यते –

**'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्। बिभेत्यल्पश्रुताद् वेदो मामयं प्रहरेदिति।।'**

इन्द्ररुद्रादीनां देवानां शारीरिकवैशिष्ट्यस्य उल्लेखः वेदवाङ्मये प्राप्यते। इन्द्रस्य भुजा सबला, उदरं सुन्दरम्, श्मश्रु सुन्दरम् अस्ति, रुद्रस्य

शरीरं कान्तिमयं गौरवर्णयुक्तञ्च विद्यते। सूर्यस्य करयोः, अग्नेः जिह्वायाः चर्चा अपि बहुत्र दृश्यते।

एते सर्वे देवाः शक्तिशालिनः समर्थाः दातारः उदाराः निश्छला अनैतिकतत्त्वमुक्ताश्च भवन्ति। स्वाभाविक्या दयालुतया, करुणया, मैत्रिभावनया चोतप्रोताः भवन्ति। असत्-तत्त्वानां विनाशाय, दमनाय वा रुद्रवरुणादयः अवश्यमेव आवश्यकं क्रोधं कुर्वन्ति। अतएव तेषां क्रोधात् रक्षणाय वेदे प्रार्थना अपि विद्यते। यथा ऋग्वेदे –

**'परि णो हेती रुद्रस्य वृज्याः परि त्वेषस्य दुर्मतिर्मही गात्। अव स्थिरा मघवद्भ्यस्तनुष्व मीढ्वस्तोकाय तनयाय मृड।।'**[6]

देवताविषये इयं धारणा विद्यते यत् ते दिशासु निवासं कुर्वन्ति, कवचं धारयन्ति, धनुर्बाणं च धारयन्ति। नयनयोर्निमेषं न पातयन्ति, अपितु निर्निमेषदृष्ट्या सावधानपूर्वकं मनुष्याणां कर्मणां पर्यवेक्षणं कुर्वन्ति।[7]

**वैदिकदेवतानां चारित्रिकवैशिष्ट्यम् –**

यासां देवतानां चर्चा वेदेषु विद्यते, यासां देवतानां स्तुतिः वेदेषु विद्यते, ताः एव वैदिकदेवताः भवन्ति। सामवेदीयब्राह्मणेषु देवताध्यायब्राह्मणमपि एकं विद्यते, यस्य नामान्तरं दैवतब्राह्मणमिति वर्तते। अत्र खण्डत्रयं विद्यते। प्रथमे खण्डे देवतानां वर्णनं विद्यते। प्रथमकण्डिकानुसारेण सामवेदीयदेवतानां नामनिर्देशः एवम् अस्ति – अग्निः, इन्द्रः, प्रजापतिः, सोमः, वरुणः, त्वष्टा, अङ्गिरसः, पुषा, सरस्वती, इन्द्राग्नी चेति। बृहद्देवता कथयति –

**'न हि कश्चिदविज्ञाय याथातथ्येन दैवतम्। लौक्यानां वैदिकानां वा कर्मणां फलमश्नुते।।'**

आदिमपिता द्यौः आदिममाता च पृथ्वी वर्तते। वैदिकार्याणामयं विश्वासोऽस्ति यत् देवतानामेव अनुग्रहात् जगतः समस्तानि कार्याणि सम्पद्यन्ते। भिन्नाः भिन्नाः घटनाः अपि तासां देवतानाम् एव कारणात् भवन्ति। पाश्चात्यवैदिकविदुषां वैदिकदेवानां विषये इयमेव धारणास्ति यत् ते भौतिकजगतः, प्राकृतिकदृश्यानाम् अधिष्ठातारः सन्ति। भौतिकघटनानाम् उपपत्तये एव ता देवताः भवन्ति।

ऋग्वेदस्य प्रारम्भिके काले बह्वीनां देवतानां सत्ता आसीत्। अस्य संज्ञा बहुदेवतावादः अस्ति। कालान्तरे यदा वैदिकार्याणां विकासः जातः, तदा ते एतेषां बहुदेवतानाम् अधिपतिरूपेण प्रधानरूपेण वा एकस्य देवताविशेषस्य कल्पनां कृतवन्तः। इयमेव कल्पना भवति एकेश्वरवादः। बहुदेवतावादस्य बहुकालादनन्तरम् एकेश्वरवादस्य जन्म अभवत्। तस्यापि अवान्तरकाले सर्वेश्वरवादस्य कल्पना जाता।

वैदिकधर्मस्य इयमस्ति विशिष्टता यत् यस्य देवस्य स्तुतिः मन्त्रद्वारा भवति, स एव देवः स्तुतिकाले सर्वाधिकः श्रेष्ठः व्यापकश्च चित्रितः भवति। वरुणस्य स्तावकसूत्रेषु स एव सर्वासु देवतासु महान् सर्वापेक्षया महत्त्वशाली च स्वीकृतोऽस्ति। अन्ये देवगणाः तस्माद् वरुणदेवाद् उत्पन्नाः भवन्ति। एवञ्च तेषामेव शासने स्थिताः सन्तः ते निश्चितकार्यस्य निर्वाहं कुर्वन्ति। इन्द्रोऽपि स्तुतिकाले सर्वश्रेष्ठः देवः भवति, यस्मात् इतर-देवतानामुद्गमः भवति। अन्येषामपि देवतानां विषये एतदेव हि तथ्यं प्राप्यते।

पृथिव्याम्, अन्तरिक्षे, आकाशे च एकादश-एकादश देवताः सन्ति। अथर्ववेदे वर्तते –

**'ये देवासो दिव्येकादश स्थ पृथिव्यामधि एकादश स्थ। अप्सु क्षितौ महिनैकादश स्थ ते देवासो यज्ञमिमं जुषध्वम्।।'**

यजुर्वेदे यथा –

**'त्रयस्त्रिंशता स्तुवतभूतान्यशाम्यन् प्रजापतिः परमेष्ठ्यधिपतिरासीत्'** [7]

अथर्ववेदे यथा –

**'यस्य त्रयस्त्रिंशद् देवा निधिं रक्षन्ति सर्वदा। निधिं तमथ को वेद यं देवा अभिरक्षथ।।'**[8]

मासस्वरूपाः यस्मात्पुनः पुनः परिवर्तमानाः प्राणिनाम् आयूंषि कर्मफलञ्च आददाना गच्छन्ति तस्मादादित्या इति। यस्माद्रोदयन्ति

तस्माद्रुद्राः भवन्ति। एते प्राणाः यदा अस्माच्छरीरात् मर्त्त्यलोकात् उत्क्रामन्ति, तदा तत्सम्बन्धिनः रोदयन्ति, यस्माद्रोदयन्ति सम्बन्धिनः तस्मात् रुद्राः। अथर्ववेदे रोहित-मृत्यु-विद्युत्-व्रात्य-वेन-काम-काल-विराज-मन्य-धनपति-आशापाल-आदिदेवानां, तथा च विष्कला, सूषणा, अराति, निर्ऋति आदि देवीनां धारणा नवीना वर्तते। पृथिवी-आकाश-जल-वनस्पति-आदिस्थलेषु तिष्ठन्ति एतादृशाः अपि केचन देवाः सन्ति।

पुनः इल-रात्रि-वनस्पति-अश्व-शकुनयः इत्यादयः आकाशवर्गे सन्ति। मृत्य-मन्यु-तार्क्ष्य-क्षेत्रपति-दधिक्राब्नादयः अन्तरिक्षवर्गे सन्ति। वृषाकपि-मनु-वसु-समुद्र-दध्यङादयश्च पृथिवीवर्गे सन्ति।

ऋग्वेदकालस्य त्रयस्त्रिंशद्देवाः पुराणकाले त्रयस्त्रिंशत्कोटिपर्यन्तम् आगताः, ये च वेदादेव विकासिताः सन्ति। यथा –

**'तिस्रः कोट्यस्तथा पञ्चशतानि मुनिसत्तम'**[9]

परन्तु इदमपि दृश्यते यत् -

**'सर्वे देवगणास्तात त्रयस्त्रिंशत्तु छन्दजाः'**[10]

शतपथब्राह्मणानुसारेण एताः वेदोत्पन्नाः देवताः त्रिषु वर्गेषु परिगणिताः भवन्ति। तत्र आदित्यवर्गः, रुद्रवर्गः, वसुवर्गश्चेति। देवतानां प्रसङ्गे पाद्मोत्तरखण्डे वर्णितमस्ति –

**'सदाराः विबुधाः सर्वे स्वानां स्वानां गणैः सह। त्रैल्योक्ये तत्त्रयस्त्रिंशत् कोटीसङ्ख्या यथाऽभवत्।।'**[11]

**उपसंहारः –**

वैदिककाले आर्यजातिः धर्मप्राणा आसीत्। देवतानां सत्ता-प्रभावव्यापकतासु दृढो विश्वासः आसीत्। वैदिकमतानुसारेण इदं जगत् पृथ्वी-अन्तरिक्षमाकाशश्चेति त्रिषु विभागेषु विभक्तं विद्यते। प्रत्येकस्मिन् विभागे लोके वा देवतानां निवासोऽस्ति। वैदिकधर्मे बहुदेवतावादी यज्ञप्रधानो धर्मः विद्यते। कतिपयेषु मन्त्रेषु सर्वदेवतावादिनी धारणा दृष्टिगोचरा भवति। देवतानामपि आकृतिः मनुष्यसदृशी वर्तते। अनेकेषु स्थलेषु ते प्राकृतिकदृश्यानां रूपात्मकाः प्रतिनिधयः भवन्ति, प्राकृतिकदृश्यानां वस्तुतः प्रतीकाः भवन्ति। यथा सूर्यस्य बाहवः तेषां किरणानि सन्ति, अग्नेः जिह्वा अङ्गानि च तेषां ज्वलायाः द्योतकानि भवन्ति। देवतानां सङ्ख्या तिस्रः एव भवति। एतेषां सर्वेषां देवानां षड्सु देवेषु अन्तर्भावो भवति अग्निपृथ्वीवायुअन्तरिक्षादित्यद्यौरिति षडेते। पुनश्च एतेषां भूर्भुवः स्वः इति त्रिलोकेषु देवत्रये अन्तर्भावः दृश्यते। पुनः त्रयाणां ब्रह्मणि अन्तर्भूतत्वात् देवानाम् एक एव संख्या भवति। उच्यते च – **'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा'**[12] इति, **'एकं सद्विप्राः बहुधा वदन्ति'**[13] इचि च। वेदेषु देवानां साहचर्येण भक्तिरपि प्रतिपादिता भवति। पुराणेषु प्रतिपादितः देवावतारवादोऽपि सर्वथा वेदानुकूल एवास्तीति शम्।

**पादटिप्पणी :**

1. यज्ञपरिभाषा 9.9.39
2. ऋग्भाष्यभूमिका 14
3. मनुस्मृतिः 2.6
4. महर्षिकुलवैभवम् उपोद्घात्
5. मनुस्मृतिः 3/117
6. ऋग्वेदः 2/33/14

7. गोभिलगृह्यसूत्रम् 4/9/19

8. तैत्तरीयसंहिता 3/4/14/31

9. अथर्ववेदः 10/7/23

10. ब्रह्मपुराणम् 110/147

11. ब्रह्मपुराणम् 1/15/139

12. पाद्मोत्तरखण्डः

13. श्वेताश्वतरोपनिषद्, षष्ठोऽध्यायः, मन्त्रः 11

14. ऋग्वेदः, सूक्तम् 164

**सहायकग्रन्थसूची –**


- अथर्ववेदसंहिता, श्रीमत्सायणाचार्य, माधवीयवेदर्थप्रकाशसहित, कृष्ण अकादमी, वाराणसी, 1981
- उपनिषत् संग्रह, मोतीलाल बनारसी दास, 1970
- ऋग्वेदसंहिता, श्रीपाददामोदर सातवलेकर, ज्ञान ऑफसेटप्रंटर, 1986
- निरूक्तम्, यास्क, मुकुन्द झा बख्शी, मेहरदास लक्ष्मणचन्द, 1982
- मनुस्मृति, चौखम्बा संस्कृत प्रतिष्ठान, 1984
- महर्षिकुलवैभवम्, श्री मधुसूदन ओझा, राजस्थान प्राच्य विद्या, प्रतिष्ठान, जयपुर, 1944
- यजुर्वेदसंहिता, सावतलेकर, ज्ञान ऑरोट प्रिंटर्स, 1984
- सामवेदसंहिता, श्री सातवलेकर, ज्ञान ऑफसेट पिंटर्स, 1984
- वैदिकसाहित्य संस्कृतिश्च, डॉ. उदयनाथ झा, जयश्री प्रकाशन, पुरी, 2007
- वैदिक एवं वेदोत्तरभारतीय संस्कृति, पं. गङ्गाधरमिश्रः, चौखम्बा वाराणसी, 1981


*************

**Volume XXI : January to June – 2023, ISSN 2250-1711**
**Journal of Veda Samskrita Academy [Recognised in the UGC-CARE List]**

# संस्कृतसाहित्ये रीतिविचारः

**Priyanka Barik**
Research Scholar
Department of Sanskrit
Jadavpur University, Kolkata- 700032, West Bengal
Contact No. : 9531505288
E-mail : priyankabarik53@gmail.com

**भूमिका -**

अलङ्कारशास्त्राणाम् अनुशीलनेन इदम् अधिगम्यते यत् अत्र अनेके सम्प्रदायाः वर्तन्ते। को भवति काव्यस्य आत्मा इत्यस्मिन् विषये आलङ्कारिकैः भूयान् यत्नः कृतः। तत्र किं तादृशं तत्वं येन वर्तमानेन काव्यत्वं तिष्ठति यस्यानुपस्थितिः काव्यत्वं नश्यते। अस्यैव जिज्ञासायाः उत्तरान्वेषणाय विभिन्नसम्प्रदायानामुद्भवः। सर्वैः आलङ्कारिकैः किमपि एकं मतं प्रदश्र्य काव्यत्वमतत्वस्य स्वीकारः कृतः। तस्यैव मतस्य अन्यैः अपि अनुमोदनं कृतम्। येन आद्य उल्लेखः कृतः सः आचार्यः सम्प्रदायप्रवर्तकः सञ्जातः अन्ये च तदनुयायिनः भवन्ति। यत्र अधिकानुयायिनः प्राप्ताः स सम्प्रदायः बलिष्ठः सन् विशेषतः ख्यातिं गतः।

**रीतिसम्प्रदायः –**

रीतिसम्प्रदायस्य प्रवर्तकः आचार्यः भवति वामनाचार्यः। सः '**रीतिरात्माकाव्यस्येति**' लिखितवान्। सः रीतेः व्याख्यां कुर्वन् लिखति विशिष्टापदरचना रीतिः, विशेषो गुणात्मा तन्नाम गुणसम्पन्ना पदरचना रीतिरिति, तन्मते गुणाः काव्यस्य नित्यधर्माः भवन्ति। गुणाः काव्येषु शोभां वर्धयन्ति, तदभिवृद्धिम् अलङ्काराः कुर्वन्ति। काव्यशोभायाः कर्तारो धर्माः, गुणाः तदतिशयहेतवस्त्वलङ्काराः। एवं वामनेन अलङ्कारेभ्यः गुणेभ्यः प्राधान्यं प्रदत्तम्। तस्मादयं सम्प्रदायः गुणसम्प्रदायनाम्नाऽपि प्रसिद्धः वर्तते।

काव्यालङ्कारसूत्रवृतौ वामनः रीतेः त्रीन् प्रकारान् प्रदर्शयति वैदर्भी, गौडी, पाञ्चाली च इति। तदनन्तरं रुद्रटः चतुर्थीं लाटीं योजयति। यद्यपि भोजस्तु रीतिशब्दः रीङ्धातुना निष्पन्नः यदर्थश्चनलं निर्माणम् इति विचारयन् लिखति रीङ्गताविति धातोः सा व्युत्पत्या रीतिरुच्यते। ततः तेन अवन्ती-मागधी च रीतिद्वयं स्वीकृत्य आहत्य षड् रीतयः स्वीकृताः। वामनेन दण्डिना चापि दशगुणाः स्वीक्रियन्ते ओजः, प्रसादः, श्लेषः, समता, समाधिः, माधुर्यं, सौकुमार्यम्, उदारता, अर्थव्यक्तिः, कान्त्यादयश्चेति।

वैदर्भीरीतौ सर्वे अपि गुणाः सन्ति। अतः '**इति वैदर्भीमार्गस्य प्राणाः दशगुणाः मताः।**' काव्यादर्शे इति प्रोक्तं दृश्यते। गौडीरीतौ ओजस्-कान्तिगुणाद्वयं तथा पाञ्चाल्यां माधुर्यं तथा सौकुमार्यम् इति गुणौ भवतः।

काव्यस्य आत्मतत्वविषये रीतिसम्प्रदायः आलङ्कारसम्प्रदायादेकं सोपानमग्रे गच्छति। तथापि '**रीतयोऽवयवसंस्थानविशेषवत्**' इति विलिख्य प्राणरूपेणायं सम्प्रदायः न स्वीकृतः। रीतिनामानि प्रदेशनाम्ना निर्मितानि सन्ति। यथा लाटी-लाट नाम्ना निर्गता। अस्मिन् सम्प्रदाये अनेके अनुयायिनः समागताः।

एवम् अलङ्कारशास्त्रस्य षट् सम्प्रदायाः सन्ति। रससम्प्रदायः, अलङ्कारसम्प्रदायः, रीतिसम्प्रदायः, वक्रोक्तिसम्प्रदायः, ध्वनिसम्प्रदायः, औचित्यसम्प्रदायः चेति।

भारतीयसाहित्यशास्त्रस्य मीमांसायां रीतिसिद्धान्तः प्राचीने अपि विख्यातः आसीत्। रीतया सह गुणानामपि विकासः सम्भवति। यतो हि स्वाभाविकतया गुणस्तु संकलितो वर्तते। गुणास्तु काव्यमीमांसायां व्याख्यातवन्तः सन्ति, अतः वामनः रीतिरेव काव्यस्य आत्मावत्त्वमिति गदितवान्। तेन साकं गुणाः तु रीतया सह स्वाभाविकतया चर्चिताः एव। अतः सांख्यीयपुरूषप्रकृतिवत्

रीतिगुणयोः सम्बन्धः सङ्कलितो सम्पर्कितश्च वर्तते। अद्यतने रीतिः शैलीरूपेण प्रकटिता बभूव। अतः आदौ कथितस्य प्रमाणपूर्तौ कथ्यते रीतिसिद्धान्तः अर्थात् शैलीसिद्धान्तः एव। रीतिसिद्धान्तस्य आचार्यः वामनः स्वीक्रियते। यतो हि संप्रदायसंस्थापकत्वात्, तत् सूत्रं यथा '**रीतिरात्मा काव्यस्य**' नाम काव्यस्य आत्मगतं स्थानं वा आत्मस्थानं रीतिरेव। आचार्यः वामनः रीतेः लक्षणम्, उदाहरणं, तन्महत्वं, तत्प्रकारम् इत्येतेषां चर्चा स्वग्रन्थे कृतवान्। अतः रीतिसंम्प्रदायस्य प्रवर्तकः आचार्यः वामनः इति। रीतिविषयक अयं विचारः भरतमुनिविरचितनाट्यशास्त्रेऽपि दृश्यते अतः अस्य प्राचीनत्वविषये न कोऽपि अप्रामाणिकत्वमस्ति।

आद्याचार्येण भरतमुनिना रीतेः वृत्ति नाम्ना एवञ्च गुणानामपि विवरणं नाट्यशास्त्रे कृतम्। न केवलं तावद् अपि तु भरतः, भामह, दण्डी च इत्यादयः नैके प्राचीनालङ्कारिकैः रीतेः चिन्तनं स्वमत्यानुगुणं काव्ये येन केन प्रकारेण कृतमस्ति। भामहाचार्येण एवञ्च दण्डिना गिरायाः नाम वाचः मार्गान् वर्णिताः एवञ्च नूतनाः उद्भटरुद्रटानन्दवर्धनकुन्तकभोजमम्मटविश्वनाथजगन्नाथहेमचन्द्रादिभिः अपरिमितैः आलङ्कारिकैः रीतिविषयमादाय स्वीयानि अभिमतानि प्रस्तुतानि। तेन च ज्ञायते विषयोऽयं सर्वरूपेण भावप्रमाणगर्भितो वर्ततेति। वामनेन पूर्वसूरिणा रीतिविषयकं चिन्तनं तेन च स्वमौलिकं चिन्तनं कृत्वा रीतिसम्प्रदायस्य स्थापना कृता। एवञ्च तत् चिन्तनान्ते रीतिरेव काव्यस्यात्मा इति कथितम्। ततः च प्रभाविताः अनन्तराचार्याः स्वं स्वं विषयमादाय स्थापयित्वा च रीतिसम्प्रदायं गौणं स्वीचक्रुः।

**रीतिशब्दस्य व्युत्पत्तयः –**

अनेकव्युत्पत्तिसम्पन्ना इयं रीतिः। रीयते गम्यते अनया इति रीतिः। तन्नाम यया गमनं शक्यं भवति सा रीतिः। अतः रीतिः इत्युक्ते गमनानुकूलः मार्गः, पन्थः, अध्वश्चेति। रीतेः मार्गः एव गत्यर्थं संसूचयति। अतः गतिरेव रीतिः। अतः फलितार्थः काव्यस्य गमनानुकूलव्यापारः एव रीतिः। अतः यया काव्यं प्रति गम्यते, काव्यानन्दः अनुभूयते प्राप्यते वा सा रीतिः। रीतिः इत्युक्ते एका पद्धतिः।

**आलङ्कारिकानुसारं रीतिविचारः –**

<u>वामानाचार्यः -</u>

'**विशिष्टा पदरचना रीतिः विशेषो गुणात्मा**'[1] इति वामनाचार्यः। अर्थात् येन विशिष्टार्थम् उत्पाद्यते सा रीतिः। एवञ्च पदरचनायाः वैशिष्ट्यं गुणाश्रितं भवति। गुणाः काव्यस्य शोभावर्धकाः सन्ति। अतः आलङ्कारिकाः काव्यलक्षणे रीतिगुणयोः ग्रहणं कृतवन्तः। तादृशं काव्यं रीतिमयं भवति। तेन रीतिः काव्यस्य आत्मेति वामनाचार्यस्य निर्विवादः वर्तते।

<u>आनन्दवर्धनाचार्यः –</u>

आनन्दवर्धानानुसारं पदसंघटनारीतिः। आनन्दवर्धनस्य अभिमतानुसारं रीतिः अर्थात् संघटना। अतः सम्यक्+घटना, सुचारु रचना वा संघटना। तेन संरचना एव संघटनारीतिः इति।

वामनाचार्यः यां पदरचनां कथयति तामेव आनन्दवर्धनः संघटना पदेन व्यवहारं करोति। यथा वामनः विशिष्टपदरचना रीतिः इत्यत्र विशिष्टपदस्य प्रयोगं करोति। तद्वदेव अत्र आनन्दवर्धनः सम्यक् घटना संघटना इत्यत्र सम्यक् इति पदस्य प्रयोगं करोति। 'आनन्दवर्धनस्य मते घटनानां सम्यक्त्वरसाभिव्यक्तौ गुणानां साहाय्येन रसाभिव्यक्तिः कारणभूता वर्तते'।[2] अतः अत्र व्यत्यासः विरोधाभासः दृश्यत उभयोः आचार्ययोः। वामनमते गुणाः आत्मस्थानीयाः आनन्दवर्धनस्य मते गुणाः शोभावर्धकानि तत्त्वानि।

<u>भोजराजः –</u>

वचनविन्यासक्रमः रीतिः इति भोजराजाचार्यः। राजशेखरः एवमेव भोजराजः रीतिं वचनविन्यासक्रमः इति स्वीकृतवन्तौ। रीतिः अर्थात् वचनविन्यासस्य विशिष्टव्यापारः। अर्थात् काव्ये पदानां एकः निश्चितक्रमः नाम रीतिः। वचनविन्यासक्रमोऽपि पदरचना वा

संघटनायाः पदपर्यायः एव।

<u>कुन्तकाचार्यः –</u>

मार्गः एव रीतिरिति कुन्तकः। यथा रीतेः अर्थः महाकविना दण्डिना मार्गः वर्त्मादिशब्दानां प्रयोगः कृतः। तमेव मार्गानुगमनं कुन्तकाचार्येण कृतम्। अतः रीतिरेवमार्गपदेन व्यवस्थापिता आचार्येण कुन्तकेन। यतो हि कुन्तकाचार्यः वक्रोक्तिसंप्रदायस्य प्रवर्तकः आसीत्। तन्मते अपि मार्गः त्रिविधः विभाजितः। यथा –

1. सुकुमारमार्गः

2. विचित्रमार्गः

3. उभयात्मकः मार्गः

अस्य नैके विभागाः कर्तुं शक्यते अतः अस्याः रीतेः अपरं नाम शैली इत्यपि प्रसिद्धं जातम्।

**रीतेः प्रकारभेदः –**

रीतेः भिन्नताविषये भरतनाट्यशास्त्रात् इदम् उद्धृतं वर्तते यत् – तत्र नाट्यशास्त्रे नाटकानां प्रवृत्तिविषये तत्र शब्दः प्रसिद्धः जातः प्रवृत्तयः वृत्तयश्च।

प्रवृत्तिः तन्नाम स्थानानुगुणं देशानुगुणं वेशभूषादिकम्। सा च प्रवृत्तिः चतुर्धा विभक्तुं शक्यते। आवन्ती, दाक्षिणात्य, पाञ्चाली, औड्रीनाम मागधी चेति।

वृत्तिः इत्युक्ते वाचः विभिन्ना शैली। वाचः सकलाः सर्वाः चेष्टाः चेति। सा अपि चतुर्धा विभज्यते। भारतीवृत्तिः, आरभटीवृत्तिः, सात्वतीवृत्तिः, कैशिकीवृत्तिः।

भामहः दण्डी च इमौ आचार्यौ रीतेः वैदर्भः एवञ्च गौडीयः इति प्रकारद्वयं चर्चितवन्तौ।

वैदर्भी गौडी पाञ्चाली चेति वामनमते रीतिः त्रिविधा। रुद्रटः अग्निपुराणकारः व्यासः विश्वनाथः मम्मटः च आचार्याः एते वामनोक्तान् त्रीन् प्रकारान् एव स्वीकुर्वन्ति।

भोजराजमतानुसारं रीतयः षट् भवन्ति। वैदर्भी, गौडी, पाञ्चाली, लाटी, मागधी, आवन्तिका चेति।

कुन्तकामतानुगुणं रीतिः इत्युक्ते मार्गः। अतः तन्मते कविस्वभावानुगुणं मार्गस्यप्रकाराणि यथा – सुकुमारमार्गः, विचित्रमार्गः, मध्यममार्गः चेति।

उद्भटाचार्यमते तु रीतयः त्रिस्रः भवन्ति। उपनागरिका, परूषा, कोमला चेति।

मम्मटमतेऽपि रीतयः त्रिधाः भवन्ति। वैदर्भी, गौडी, पाञ्चाली चेति।

**रीतिविषये विरुद्धमतानि –**

ध्वनिवादिनः प्रवदन्ति यत् रीतिः काव्यस्यात्मा भवितुं नार्हति, यतो हि रसस्य उपकारकत्वात्। उक्तञ्च तेन –

'**काव्यस्यात्मा ध्वनिरितिबुधैः यः समाम्नातपूर्वः इति**'[3]

अनेन कथनेन साकं तेन वामनस्य रीतिरात्माकाव्यस्येति काव्यात्मविषयकस्य वादस्य निषेधः उपहासश्च कृतः।

काव्यस्य आत्मा रस एव उक्तं आचार्येण विश्वनाथेन। तेषां नये –

'**वाक्यं रसात्मकं काव्यमिति**'।[4]

अनेन वाक्येन रीतेः आत्मतत्वविचारस्य अनेनाचार्येणापि बहिष्कारः उपहासश्च विहितः।

मम्मटमते अपि रीतिस्तु उपकारकर्त्री वर्तते। अस्य आत्मस्थानत्वकल्पनम् अनुचितम्।

**'तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि'** [5]

अनेन वाक्येन काव्यलक्षणोक्तेन रीतेः आत्मतत्वविषयं परास्तम्। अपि च उक्तञ्च तैः रीतिस्तु काव्यपुरूषस्य अङ्गसंस्थानवती वर्तते, न तु आत्मस्थीया।

**उपसंहारः –**

भोजराज-राजशेखर-दण्डी-कुन्तक-विश्वनाथ-मम्मटादीनाम् आचार्याणां मते रीतिः तु रसोपकारिणी। अतः इयं न आत्मस्थानमलङ्कर्तुं योग्या। परं सर्वेऽपि आचार्याः रीतेः अवगणनां नैव कुर्वन्ति, तेनैव सह रीतेः महत्वम्, अस्तित्वं स्वीकुर्वन्त्येव इति शम्।

**पादटिप्पणी**

1. *काव्यालङ्कारसूत्रम् 1 अधिकरणम्, 2 अध्यायः*
2. ध्वन्यालोकः, 3 उद्योतः
3. ध्वन्यालोकः, 1 उद्योतः
4. साहित्यदर्पणः, 1 परिच्छेदः
5. काव्यप्रकाशः, 1 उल्लासः

**सहायकग्रन्थसूची –**


- साहित्यालोकः, डॉं. राजवंशसहाय, चौखम्बा विद्याभवन, वाराणसी।
- वक्रोक्तिजीवितम्, डॉं. परमेश्वरदीनपाण्डेय, चौखम्बा विद्याभवन, वाराणसी।
- साहित्यमीमांसा, पं. गौरीनाथ शास्त्री, संपूर्णानन्दविश्वविद्यालय, वाराणसी।
- ध्वन्यालोकः, डॉं. जगन्नाथपाठकः, चौखम्बा विद्याभवन, वाराणसी।
- काव्यप्रकाशः, डॉं. जमुना पाठक, चौखम्बा कृष्णदास अकादमी वाराणसी।
- साहित्यदर्पणः, डॉं. सत्यव्रतसिंह, चौखम्बा विद्याभवन, वाराणसी।
- साहित्यशास्त्रीयोनिबन्धः, पं. वेदव्यास शुक्ल, चौखम्बा विद्याभवन, वाराणसी।
- श्रीकण्ठचरितम्, परिमल पब्लिकेशन दिल्ही।
- Some concepts of Alankar Shastra of Dr. J.O.Madras


*************

**Volume XXI : January to June – 2023, ISSN 2250-1711**

**Journal of Veda Samskrita Academy [Recognised in the UGC-CARE List]**

# भारतीयज्ञानपरम्परायां चतुःषष्ठिकलाः

**Dr.Muralisham H**
Asst Professor
Govt Sanskrit College, Tripunithura- 682301,
Ernakulam, Kerala
Contact No. : 7907181923
E-mail : muralipathra@gmail.com

उपोद्घातः

तक्षशिला, विक्रमशिला, नालन्दा, उदान्तपुरी, जगद्दला, वल्लभी, वाराणसी, मणिखेतः, शारदपीठम् इत्यादयः विश्वविद्यालयाः भारते अतीव प्रसिद्धाःसन्ति। चाणक्यविष्णुगुप्तः, पाणिनी, सुश्रुतः इत्यादीनां प्रसिद्धानां शास्त्रकर्तॄणाम् अध्ययनमपि एषु विश्वविद्यालयेषु अभवन्। भारतीयेषु विश्वविद्यालयेषु विद्यालयेषु गृहेषु गुरुकुलेषु चतुःषष्ठिकलानाम् अध्ययनम् अध्यापनम् जायते स्म।[1] तासु कलासु मध्ये दशकलानामेव विचारः विशदतया अस्मिन् पत्रे प्रकाशयिष्यते।

चतुःषष्ठिकलाः काः भवन्ति? इति जिज्ञासा जायते एव। ताः तु इतिहासः, आगमः, काव्यम्, अलङ्कारः, नाटकम्, गानम्, कवितारचना, कामशास्त्रम्, देशभाषाविज्ञानम्, लिपिज्ञानम्, लिपिकर्म, वाचनम्, गणना, व्यवहारज्ञानम्, स्वरशास्त्रम्, शकुनशास्त्रम्, रत्नशास्त्रम्, मल्लशास्त्रम्, गजनां हयानां च चालनकौशलम्, सूपकर्म, दोहदम्, गन्धनिर्मितिः, रसविचाराः, बिलवादः, अग्निस्तम्भः, जलस्तम्भनम्, वाचः स्तम्भनम् , वयस्तम्भनम्, वशीकरणम्, आकर्षणम् , मोहनम्, विद्वेषणम्, उच्चाटनम्,मारणम्, कालवञ्चनम्, स्वरवञ्चनम्, मणिमन्त्र-औषधादयः सिद्धयः, चौर्यकर्म, चित्रक्रियाः, लोहक्रियाः , मृत्क्रियाः, दारुक्रियाः, वेणुक्रियाः, चर्मक्रियाः, अम्बरक्रियाः, अदृश्यकरणम्,दन्तीकरणम्, मृगयाविधिः, वाणिज्यम्, पशुपालनम्, कृषिः, आसवकर्म, लावकुक्कुटः, मेषादियुद्धकारकः, कौशलम् तथा शुकसारिका-प्रलापनम्, एताः प्रमुखकलाः भवन्ति।

वात्स्यायनस्य कामसूत्रस्य व्याख्याता जयमङ्गलटीकायाः कर्ता द्विप्रकारकाणां कलानाम् उल्लेखम् अकरोत्। कामशास्त्रसम्बन्धिनः, अपि च तन्त्रस्बन्धिनः चेति। उभयत्रापि 64 कलाः भवन्ति। तासु काश्चन समानाः भवन्ति। कामशास्त्रे तु 24 कर्माश्रयः, 20 द्युताश्रयः, 16 शयनोपचारिका, 4 उत्तरकलाः भवन्ति। अस्य अङ्गीभूताः कलाः अपि वर्तन्ते। आहत्य 518 कलाः भवन्ति।

कर्माश्रयाः 24 कलाः भवन्ति। गीतम्, नृत्यम्, वाद्यम्, कौशलम्, लिपिज्ञानम्, उदारवचनम्, चित्रविधिः, पुस्तककर्म, पत्रच्छेदः, शाल्यविधिः, गन्धयुत्स्वाद्यविधानम्, रत्नपरीक्षा, सीवनम्, रङ्गपरिज्ञानम्, उपकरणक्रिया, मानविधिः, आजीवज्ञानम्, क्रीडाकौशलम्, संवाहनम्, लोकज्ञानम्, वैचक्षण्यम्, तिर्यग्योनिचिकित्सा मायाकृतपाषाण्डपरिज्ञानम्, शरीरसंस्कारः 24 कलाः भवन्ति।

द्याश्रयाः 20 कलाः भवन्ति। 15 निर्जीवाः 5 सजीवाः कलाः भवन्ति। आयुःप्राप्तिः, अक्षविधानम्, करणादानम्, चित्राचित्रविधिः, गूढराशिः, बीजग्रहणनयज्ञानम्, क्रियामङ्गणम्, रूपसङ्ख्या, तुलयाभिहारः, क्षिप्रग्रहणम्, अनुप्राप्तिः, लेखस्मृतिः, अग्निक्रमः, छलव्यामोहनम्, ग्रहादानम् एते 15 निर्जीवकलाः भवन्ति। सजीवाः 5 कलाः उपस्थापनविधि-युद्ध-सत -गत-नृत्यादयः भवन्ति।

शयनोपचारिकाः 16 कलाः भवन्ति। ताः च 1. पुरुषस्य भावः, 2. स्वरागप्रकाशनम्, 3 प्रत्याङ्गदानम्, 4 नखदन्तविचारः 5. नीविस्त्रीसंसनम् 6.गुह्यसंस्पर्शनम्, लोम्यम्,7. परमार्थकौशलम् 8 हर्षणम् 9. समानार्थता कृतार्थता 10. अनुप्रोत्साहनम् 11. मृदुक्रोधप्रवर्तनम् 12 सम्यक्-क्रोधनिवर्तनम् 13यक्रुद्धप्रसादनम् 14 सुप्तपरित्यागम् 15.चरमस्वापविधिः 16 गुणगूहनम्।उत्तरस्य 4 कलाः भवन्ति। 1.साश्रुपातः रमणाय शापदानम् 2. स्वशपथक्रिया 3. प्रस्थितानुगमनम् 4 पुनः निरीक्षणम्।

वात्स्यायनस्य कामशास्त्रानुसारं 64 कलानां वर्णनं कृतं वर्तते। ताः तु अधः दत्ताः वर्तन्ते।-

64 कलाः – कं सुखं ददातीति कलाः। ताः च गीतम् (१), वाद्यम् (२), नृत्यम् (३), आलेख्यम् (४), विशेषकच्छेद्यम् (५), तण्डुलकुसुमवलिविकाराः (६), पुष्पास्तरणम् (७), दशनवसनाङ्गरागः (८), मणिभूमिकाकर्म (९), शयनरचनम् (१०), उदकवाद्यम् (११), उदकाघातः (१२), चित्राश्च योगाः (१३), माल्यग्रथनविकल्पाः (१४), शेखरकापीडयोजनं (१५), नेपथ्यप्रयोगाः (१६), कर्णपत्त्रभङ्गाः (१७), गन्धयुक्तिः (१८), भूषणयोजनम्(१९), ऐन्द्रजालम् (२०), कौचुमाराश्च (२१), हस्तलाघवम् (२२), विचित्रशाकयूषभक्ष्यविकारक्रियाः (२३),पानकरसरागासवयोजनम् (२४), सूचीवानकर्माणि (२५), सूत्रक्रीडा (२६), वीणाडमरुकवाद्यानि (२७), प्रहेलिका (२८), प्रतिमाला (२९), दुर्वाचकयोगाः (३०), पुस्तकवाचनम् (३१), नाटकाख्यायिकादर्शनम् (३२), काव्यसमस्यापूरणम् (३३), पट्टिकावानवेत्रविकल्पाः (३४),तक्षकर्माणि (३५), तक्षणम् (३६), वास्तुविद्या (३७), रूप्यपरीक्षा (३८), धातुवादः (३९), मणिरागाकरज्ञानं (४०), वृक्षायुर्वेदयोगाः (४१), मेषकुक्कुटलावकयुद्धविधिः (४२), शुकसारिकाप्रलापनं (४३), उत्सादने संवाहने केशमर्दने च कौशलम् (४४),अक्षरमुष्टिकाकथनम् (४५), म्लेच्छितविकल्पाः (४६), देशभाषाविज्ञानम् (४७), पुष्पशकटिका (४८), निमित्तज्ञानम् (४९), यन्त्रमातृका (५०), धारणमातृका (५१), सम्पाठ्यम् (५२), मानसी काव्यक्रिया (५३), अभिधानकोशः (५४), छन्दोज्ञानम् (५५), क्रियाकल्पः (५६), छलितकयोगाः (५७), वस्त्रगोपनानि (५८), द्यूतविशेषः (५९), आकर्षक्रीडाः (६०), बालक्रीडनकानि (६१), वैनयिकीनाम् (६२), वैजयिकीनाम् (६३), व्यायामिकीनाम् च (६४) विद्यानां ज्ञानं इति चतुःषष्टिरङ्गविद्याः कामसूत्रावयविन्यः ॥कामसूत्र १.३.१५ ॥ चतुष्षष्टिकलास्त्वेता विद्वद्भिः परिकीर्तिताः । प्राधन्येनकलास्त्वेताः गण्यन्ते पण्डितोत्तमैः।।[४]

## १) गीतम्-

सङ्गीतरत्नाकरः, रागविबोधः, सङ्गीतपारिजातम् इत्यादयः- प्रसिद्धाः ग्रन्थाः सन्ति। 64 अधिकानि सङ्गीतग्रन्थानां नामानि समुपलभ्यन्ते। ते च अधः प्रस्तूयन्ते।

अर्जुनभरतः – अर्जुनस्य, रागनिरूपणम् , नारदीयशिक्षा, पञ्चमसारसंहिता, सारसंहिता, भरतशास्त्रसङ्गीतम्, भरतलक्षणम्नारदस्य भवन्ति।भरतनाट्यशास्त्रम् – भरतमुनेः, भरतभाष्यम् – न्यायदेवस्य , भरतशास्त्रम् – रघुनाथस्य, सङ्गीतवृत्तरत्नाकरः, षड्राङ्गचन्द्रोदयः, नर्तननिर्णयः, रागमञ्जरी ,रागमाला -पुण्डरीकविट्ठलस्य भवति।

वीरपराक्रमः – वासुदेवस्य, हृदयप्रकाशः – हृदयनारायाणदेवस्य, सङ्गीतरत्नावली – सोमराजदेवस्य,सङ्गीतदामोदरः - शुभङ्करस्य, सङ्गीतनारायणः – पुरुषोत्तमस्य, सङ्गीतमीमांसा – कुम्भकर्णमहीमहेन्द्रस्य, सङ्गीतराजः – कुम्भकर्णस्य, सङ्गीतामृतम् -कमललोचनस्य, गीतालङ्कारः –अनन्तनारायाणस्य, तालदशप्राणदीपिका – गोविन्दस्य, रागमाला / रत्नमाला -क्षेमकरणस्य, रागविचारः – श्रीरामस्य, रागादिस्वरनिर्णयः – रघुनाथदासप्रसादस्य, रागविबोधः – सोमनाथस्य, रागरत्नाकरः – गन्धर्वराजस्य, श्रुतिभास्करः – भीमदेवस्य,मतङ्गभरतम् – लक्ष्मणस्य भवति।

अनुनयसंहिता , मुरलीप्रकाशः – भावभट्टस्य रागकौतुहले नृत्यप्रकरणम् – रामकृष्णभट्टस्य, सङ्गीतसारोद्धारः – हरिभट्टस्य, नारददीपिका – भट्टाचार्यस्य, आनन्दजीवनम्– राजामण्डनपालस्य, तालदीपिका –टिप्पणभूपालस्य, तालाभिनवलक्षणम् –नन्दिकेश्वरस्य भवति।

ताललक्षणम,सङ्गीतदीपिका –तिप्पभूपालस्य, नृत्यरत्नावली – गणपतिदेवसेनस्य, नृत्याध्यायः –अशोकमल्लस्य, रागचन्द्रोदयः – विमलस्य, रागतत्त्वबोधः – श्रीनिवासस्य, सङ्गीतचिन्तामणिः – कमललोचनस्य, सङ्गीतमकरन्दः – वेदकृतस्य, सङ्गीतसारामृतम् – तुलजेन्द्रस्य, सङ्गीतसुधाकरः – हरिपालस्य, सङ्गीतराघवः – बामभूपालस्य, सङ्गीतपारिजातः – अहोबलस्य भवति। सङ्गीतदर्पणः – हरिवल्लभस्य, सङ्गीतसुधाकरः – दामोदरस्य, सङ्गीतसेतुः – गङ्गारामस्य, सङ्गीतोपनिषत् – सुधाकमलस्य, सङ्गीतरत्नाकरः –

शार्ङ्गदेवस्य, सङ्गीतरत्नाकरः – सुधाकमलस्यसङ्गीतरत्नाकरः – वनरकस्य, सङ्गीतरत्नाकरः –कल्लीनाथस्य, सङ्गीतरत्नाकरः – सिंहभूपालस्यसङ्गीतरत्नाकरः – हंसभूपालस्य भवति।

**२) वाद्यम्–**

**'घनंचविततंवाद्यंततंसुषिरमेवच। कांस्यपुष्करतन्त्रीभिर्वेणुनाचयथाक्रमम्।।''** [2]

प्राचीनकालादपि सङ्गीतविचारे ऋषीनाम् मुनीनां नितरां श्रद्धा च आसीत्। तस्माद्अनेकानि वाद्यानि निर्मितानि सन्ति। तानि च इत्थं वर्तन्ते। ढोला, मृदङ्गः , दुन्दुभिः, वीणा , शततन्त्री , एतादृशाः अनेके भारतीयवाद्यानि सन्ति । येषां वाद्यानां वादनं कर्णप्रियं , सुमधुरं च भवति । अनेके भारतीयाः युवकाः सततम् अभ्यासं कुर्वन्ति । अभ्यासेन ते वादननिपुणाः भवन्ति , श्रेष्ठाः वादकाः च भवन्ति । भारतीयरागपरम्परानुसारं यदा ते वादयन्ति तदा जनाः मन्त्रमुग्धाः भवन्ति । प्रातःकालस्य रागः , सायंकालीनः रागः , वर्षारागः , युद्धसमयस्य रागः , शोककालस्य रागः एतेषु रागेषु यदा ते सुरावलिं जनयन्ति तदा मनसि तदनुसारमेव भावः जायते । अस्माकं भारतीयवाद्यानि, गायनपरम्परा पुरातना समृद्धाः च असन् ।

**३) नृत्यम्-**

रङ्गमञ्चकलासु नृत्यम् अविभाज्यम् अङ्गं भवति। भरतनाट्यशास्त्रम् नृत्यस्य विचारे एवं कथितम्। तद्यथा –

न तज्ज्ञानं न तच्छिल्पं न सा विद्या न सा कला । नासौ योगो न तत्कर्मनाट्येऽस्मिन् यन्न दृश्यते ।।[३]

''करणान्यङ्गहाराश्चविभावोभावएवच। अनुभावोरसाश्चेतिसंक्षेपान्नृत्यसंग्रहः।''

आन्ध्रप्रदेशे- कूचपुडी, उत्तरप्रदेशे कथक्, अस्साम् राज्ये– सत्रिया, राजस्थानेघूमर, अस्साम् राज्ये– बिहु,जम्मू-काश्मीरे-रौफ, बिहारे-बिडेसिया, गजरात् राज्ये गर्बा, केरले- कतक् कली, अरुणाचलप्रदेशे- बर्डो चाम्, मणिपुरेमणिपुरि डेन्स जागोइ, नागालैण्ड राज्ये- चाङ्ग-लो, छत्तीसघर राज्ये -कर्म नाच् , गोवा- Dekhni, हर्याणा राज्ये- साङ्ग, मेघालये- लाहो, हिमाचलप्रदेशे-नाटि, झारखण्ड प्रदेशे-पालिका, कर्णाटके डोल्लु कुणित, मिझोराम्- Cheraw, मध्यप्रदेशे- माञ्च, महाराष्ट्र- लवणि, ओडिषा- ओडिस्सी, उत्तराखण्डे- चोलिया नृत्यम्, तेलङ्गाणे – दण्डारि, पञ्जाब- बाङ्गा, सिक्किम्- सिङ्गि चाम्, तमिल् नाडु प्रदेशे भरतनाट्यम् , त्रिपुरा राज्ये- होजगिरि, पश्चिमबङ्गे-चौ, एवम् प्रादेशिकनृत्याः अपि भवन्ति।

**४) आलेख्यम् । –**

चित्रकला अथवा आलेख्य विचारे अपि अनेके भारतीयग्रन्थाः प्रसिद्धाः सन्ति।

''रूपभेदाःप्रमाणानिभावलावण्ययोजनम्। सादृश्यंवर्णिकाभङ्गइतिचित्रंषडङ्गकम्।।''इति।

एतानिपरानुरागजननान्यात्मविनोदार्थानिच। तानि विष्णुधर्मोत्तरपुराणे 35 -40 अध्यायेषु चित्रसूत्रम् इति विषयाः वर्णिताः सन्ति। चित्रलक्षणम् इति ग्रन्थः नग्नजितेन लिखितः। पञ्चमे शताब्दे अयं ग्रन्थः लिखितः। अस्य संस्कृतमूलम् नष्टमिति भाति। परन्तु टिबेटियन् भाषायां प्राप्स्यते इति श्रूयते।समराङ्गणसूत्रधारः, अपराजितप्रच्छः, मानसोल्लासः एते ज्यौतिषे शिल्पवास्तुविषयान्तर्गतः भवति। आलेख्यविचारे एते उपलभ्यमानग्रन्थाः सन्ति। अभिलशितार्थ चिन्तमणिः, शिवतत्वरत्नाकरः , चित्रकलाद्रुमा , शिल्परत्नम् , नारदशिल्पशास्त्रम् , सरस्वती शिल्पशास्त्रम् , प्रजापति शिल्पशास्त्रम् , काश्यप शिल्पशास्त्रम्, चेति भवन्ति।

**५) विशेषकच्छेद्यम्**

ललाटे तिलकस्थापनार्थं पत्राणि कर्तयित्वा आकृतीनां निर्माणम् ।

**'पत्रच्छेद्यानिनासाभिप्रायाकृतानिप्रेषयेत्'इति। सत्यम्। विशेषकग्रहणमादरार्थम्, विलासिनीनामतिप्रियत्वात्।**

**६) तण्डुलकुसुमवलिविकाराः**

रङ्गोलि। मण्डलनिर्माणम् । देवपूजनाद्यवसरे विभिन्नमण्डलानां निर्माणम् ।

अखण्डतण्डुलैर्नानावर्णैःसरस्वतीभवनेकामदेवभवनेवामणिकुट्टिमेषुभक्तिविकाराः।

तथाकुसुमैर्नानावर्णैर्ग्रथितैःशिवलिङ्गादिपूजार्थंभक्तिविकाराः।अत्रग्रथनंमाल्यग्रथनम्एवान्तर्भूतम्।भक्तिविशेषणावस्थापनंकलान्तरम्।

**७) पुष्पास्तरणम्**

पुष्पैः अलङ्करणम्।यन्नानावर्णैः पुष्पैः सूचीवानादिबद्धैरभ्यस्यते तदेव, वासगृहोपस्थानमण्डपादिषु यस्य पुष्प-शयनमित्यपरा संज्ञा।

**८) दशनवसनाङ्गरागः**

दन्तानां नखानां वस्त्राणाम् समुचितैः वर्णैः अलङ्करणम् । रागशब्दः प्रत्येकं योज्यते। तत्राङ्गरागोऽङ्गमाष्टिः कुङ्कुमादिना। रञ्जनविधिरिति वक्तव्येदशनादिग्रहणमादरार्थम्। विलासिनीनांदशनादिसंस्कारस्यात्यन्ताभीष्टत्वात्।इति।

**९) मणिभूमिकाकर्म**

गृहे मणीनां भूमीनाम् अलङ्करणम्। गृहस्य अन्तः अलङ्करणम्।''मणिभूमिकाकृतकुट्टिमाभूमिः, ग्रीष्मेशयनापानकार्थंतस्यां मरकतादि भेदेनकरणम्।''

**१०) शयनरचनम्**

शयनस्य रचनकौशलम्।शयनीयस्यकालापेक्षयारक्तविरक्तमध्यस्थाभिप्रायादाहारपरिणतिवशाच्चरचनम्।

शिवतत्त्वरत्नाकरग्रन्थानुसारं64कलाः एवं वर्तन्ते।इतिहासः, आगमः, काव्यः, नाटकम्, अलङ्कारः, गायकत्वम्, कवित्वम्, कामशास्त्रः, दुरोदरः, देशभाषालिपिज्ञानम्, लिपिकर्मः, वाचनम्, गणकः, व्यवहारः, स्वरशास्त्रम्, शाकुन, सामुद्रिकः, रत्नशास्त्रम्, गज-अश्व-रथकौशलम्, मल्लशास्त्रम्, सूपकर्मः, भूरूहदोहदः, गन्धवादः, धातुवादः, रत्नसम्बन्धीखनिवादः, बिलवादः, अग्निसंस्तम्भकः, जलसंस्तम्भकः, वाचःस्तम्भन, वयःस्तम्भन, आकर्षणम्, मोहनम्, विद्वेषणम्, उच्चाटनम्, मारणम्, कालवञ्चन, स्वर्णकारः, परकायप्रवेशः, पादुकासिद्धिः, वाक्सिद्धिः, गुटिकासिद्धिः, ऐन्द्रजालिकः, अञ्जनम्,परदृष्टिवञ्चनम्, स्वरवञ्चनम्, मणि-मन्त्रऔषधादिकीसिद्धिः, चैरकर्मः, चित्रक्रिया, लौहक्रिया, अश्मक्रिया, मृत्क्रिया, दारूक्रिया, वेणुक्रिया, चर्मक्रिया, अम्बरक्रिया, अदृश्यकरण, दन्तिकरण, मृगयाविधिः, वाणिज्यः, पाशुपाल्यः, कृषिः, आसवकर्मऔरलावकुक्कुटमेषादियुद्धकारकःकौशलः।

**निष्कर्षः-**

अधुना अपि कौशलेषु छात्राः प्रयासशीलाः भवन्ति। सीवनम्, कर्णाभरणादीनाम् निर्माणम्, वस्त्रेषु पुष्पादिकानाम् सीवनम्, गृहस्य अन्तः अलङ्करणम्, बहवो इतरकौशलानि वर्तन्ते। अद्यत्वे चलनचित्रादयः निर्मान्ति। परन्तु प्राचीनकाले मौखिकद्वारा, गृहे एव वा, गुरुकुलेषु अनध्ययनकालेषु बोधयन्ति स्म। ग्रन्थलेखनसौकर्यं न वर्तते स्म। तस्मात् अनेकानांकलानांविचारे विशदतया ग्रन्थेषुनवर्णिताःवर्तन्ते। क्वचिद् साधारणम् इति कारणात् न लिखितं स्यात्। एतासाम् चतुःषष्ठिकलानाम् अध्ययने अध्यापने अधुनातनकाले आवश्यकता वर्तते इति शम्।

**पादटिप्पणी**

1. विक्रमशिला का इतिहास - पत्र सङ्ख्या -64

2. कामसूत्रम् -जयमङ्गलव्याख्यानम्।

३. भरतनाट्यशास्त्रम्, 1-116

४. शिवतत्त्वरत्नाकरः-द्वितीयस्तरङ्गः-श्लोकसङ्ख्या 43-श्लोकसङ्ख्या53

**परिशीलितग्रन्थसूची -**


1. Wikipedia
2. विक्रमशिला का इतिहास-ठाकुर परशुराम् ब्रह्मवादी- प्रभात प्रकाशन नई दिल्ली२०१२–२०१३
3. कामसूत्रम्।– वात्स्यायनस्य कामसूत्रम् जयमङ्गलटीकोपेता-चौखम्बा सुरभारती प्रकाशनम्
4. शब्दकल्पद्रुमः- Sabdakalpadruma Set Of 5 Vols. शब्दकल्पद्रुमः,ChaukhambaSurbhartiPrakashan, Varanasi.2020
5. Beautiful Tree -Indigenous Indian Education In The Eighteenth Century (Hardcover, Dharampal) Rashtrotthana Sahitya-2021
6. पाणिनीयशिक्षा -त्रिनयनाख्येन संस्कृतभाष्येण -चिन्तामणिनाम्ना हिन्दीभाषान्तरेण च विभूषिता – सन्तोषपाण्ड्या,-श्रीनिवासरथः-
7. अभिलषितार्थ चिन्तामणिः -सोमेश्वरदेवसूकि- Ed. Shama Sastri- R. University Of Mysore 69 1926
8. शिवतत्त्वरत्नाकरः-Basavarajaof Keladi-B.M Nath Co-vepery Madras 1927.
9. वाल्मीकिरामायणम् –
10. मनुस्मृतिः -


***************

**Volume XXI : January to June – 2023, ISSN 2250-1711**
**Journal of Veda Samskrita Academy [Recognised in the UGC-CARE List]**

# सूर्यनमस्कारः

**K. S. Vasantha**
Research Scholar
Karnataka Sanskrit University
Chamaraja Pete- 560018
Bengaluru, Karnataka
Contact No. : 9740356612
E-mail : vasanthakolar4@gmail.com

जगतितले मनुष्य-प्राणी-सस्यप्रभृतयः जीविताः भवेयुः चेत् सूर्यदेवस्य शक्तिः अत्यावश्यकी । सूर्यातपं विना सस्यादयः न वर्धन्ते । सस्येभ्यः प्राप्यमाणैः धान्यशाकफलैः एव सर्वेषां जीवनम् अस्ति । अतः भूमण्डले सूर्यस्य आवश्यकता अत्यधिका भवेत् एव । सर्वेषां जीवनाधारः सूर्यः एव ।

वेदेषु, पुराणेषु च सूर्यस्य विशेषस्थानं कल्पितम् अस्ति । सः भाग्यदायकः, रोगनिवारकः च इति उल्लेखः दृश्यते । भगवतः सृष्टौ सूर्यस्य अपेक्षया अन्यः कोऽपि तेजोवान् नास्ति । अतः तस्मात् तेजसं, वर्चसं, शक्तिं च प्राप्तुं सूर्योपासनम् उत्तमः मार्गः ।

1. उद्यन्नादित्यः क्रिमीन् हन्ति । आरोग्यंभास्करादिच्छेत्॥
2. उद्यन्नद्य मित्रमः आरोहन्नुत्तरां दिवम् । हृद्रोगंममसूर्यहरिमाणंचनाशय॥
3. सूर्य आत्मा जगतस्तस्थुषश्च । प्राणाः प्रजानाम्उदयतिसूर्यः ॥
4. अकालमृत्युहरणं सर्वव्याधिविनाशनम् । सूर्यपादोदकंतीर्थं जठरे धारयाम्यहम् ॥

एतादृशान् अनेकान् श्लोकान् वयं वेदोपनिषदि द्रष्टुं शक्नुमः ।

हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम् । तत् त्वं पूषन्नपावृणु सत्यधर्मस्य दृष्टये ॥

इति ईशावास्योपनिषदि वर्णितम् अस्ति ।

ततः पुराणेषु अपि एतन्निमित्तीकृत्य अनेकाः कथाः उक्ताः -

- श्रीरामः अगस्त्यमुनेः 'आदित्यहृदय'मन्त्रस्य उपदेशं प्राप्य, सूर्यदेवम् आराध्य निरायासेन रावणं हतवान् ।
- सत्राजितः इति कश्चन यादवकुलीयः राजा । सः भक्त्या सूर्यदेवम् आराध्य स्यमन्तकमणिं प्राप्तवान् ।
- कुष्ठरोगेणपीडितः श्रीकृष्णस्यपुत्रः साम्बः प्रभासक्षेत्रे सूर्यमुद्दिश्य कठिनतपः आचरितवान् । ततः सः रोगमुक्तः, शापमुक्तः चाभवत् ।
- धौम्यमहर्षेः सूर्योपासनमन्त्रोपदेशंप्राप्ययुधिष्ठिरः सूर्यंनिष्ठयाआराध्यअक्षयपात्रंप्राप्नोत्।

जीवजगतः मूलाधारः सूर्यः । भूमि-जल-वायु-अग्न्यादयः प्रपञ्चस्य शुद्धिकरणे रताः चेदपि तेषाम् अपेक्षया अत्यधिकतया शुद्धिकरणं करोति सूर्यशक्तिः । आरोग्यार्थं सूर्यप्रकाशः आवश्यकः एव । एतं विषयं ज्ञातवतः अस्मत्पूर्वजाः ऋषिमुनयः प्रकृत्यां दृश्यमानान् अंशान् अवलोक्य ततः लाभः अस्ति इति ज्ञातवन्तः । ततः सूर्यचन्द्रभूम्याकाशाग्निजलवाय्वादीन् देवान् मत्त्वा पूजितवन्तः । तान् विहाय जीवनं दुर्भरम् इति सत्यांशम् अवगतवन्तः ।

सूर्यं सुन्दरलोकनाथममृतं वेदान्तसारं शिवम् । ज्ञानब्रह्ममयं सुरेशममलं लोकैकचिन्त्यं स्वयम् ।
इन्द्रादित्यनराधिपं सुरगुरुं त्रैलोक्यचूडामणिम् । विष्णु-ब्रह्म-शिव-स्वरूपहृदयं वन्दे सदा भास्करम् ॥

[सौन्दर्यपूर्णम्, लोकनाथम्, अविनाशिनम्, वेदान्तगम्यम्, मङ्गलकरम्, ज्ञानस्वरूपम्, ब्रह्मप्रदीकम्, सर्वलोकध्यातारम्, मनुष्यदेवगणादिनाथम् त्रिमूर्तिनां हृदयप्रायं भास्करं सदा वन्दे ।]

सूर्यात् तेजसं, वर्चसं, शक्तिं च प्राप्तुं सूर्योपासनां कुर्मः । 'उपासनाव्यायामः' इति नाम्ना कथ्यते । सन्तः 'आरोग्यं भास्करादिच्छेत्' इति उक्तवन्तः । सूर्यदेवस्य अनुग्रहः यैः प्राप्यते ते आरोग्यवन्तः भवन्ति ।

देहारोग्यार्थम् इन्द्रियनिग्रहणार्थं, मानसिकसंयमार्थं, एकाग्रतां प्राप्तुं, स्मरणशक्तेः, बुद्धिविकासाय च सूर्यनमस्कारः सुन्दरसोपानरूपेण तिष्ठति । जातिमतभेदं विना स्त्रीपुरुषाः सर्वे अपि सूर्यनमस्कारस्य आभ्यासं कर्तुम् अर्हन्ति । नैमित्तिकी श्रद्धा भक्तिः च आवश्यकी । सूर्यनमस्कारः न केवलं रोगनिरोधकः अपि च महारोगान् अपि उपशमयति ।

आदित्यस्य नमस्कारान् ये कुर्वन्ति दिने दिने । दीर्घमायुर्बलं वीर्यं तेजस्तेषां च जायते ॥

## सूर्यनमस्कारकरणविधिः

सूर्यनमस्काराय प्रातःकालः एव योग्यसमयः । प्रातर्विधीन् समाप्य आहारसेवनात् पूर्वं नमस्कारस्य आरम्भः करणीयः । यत्र प्रकाशः, वायुः च

अधिकतया व्यापृता भवति तत्र समतलप्रदेशे शुभ्रवस्त्राणि धृत्वा सूर्याभिमुखं स्थित्वा नमस्कारस्य आरम्भः करणीयः । एकाग्रतया सूर्यनमस्कारस्य आसनानि करणीयानि ।

सूर्यनमस्कारः नाम अनुक्रमेण प्रभावयुतः द्वादशात्मकः आसनयुक्तः योगः । एकैकस्य आसनस्य करणसमये सूर्यस्य नाम्ना एकः मन्त्र वक्तव्यः ।

*** सूर्यनमस्कारस्य प्रथमः मन्त्रः -**

ओं मित्राय नमः ।

एतस्य आसनस्य करणसमये साधकः ऋजुतया स्थित्वा हस्तं संयोज्य पादौ संयोज्य च एतं मन्त्रं वदेत् । एतेन आसनेन शरीरस्य नराणां च समतोलनं प्राप्यते ।

*** द्वितीयः मन्त्रः -**

स्तोत्थानासनम् - ओं रवये नमः ।

एतं मन्त्रं जपन्तः हस्तद्वयमपि पृष्ठभागं प्रति नयेयुः । तदा उदरस्य मांसखण्डाः विकसिताः भवन्ति । ततः वक्षस्थलं विस्तारिकृत्य श्वासकोशं प्रति प्राणवायुं प्रापय्य श्वासकोशं विकासयति ।

*** तृतीयः मन्त्रः -**

ओं सूर्याय नमः - पादहस्तासनम्

एतस्य मन्त्रस्य उच्चारणं कुर्वन्तः पुरतः सम्पूर्णतया अवनमय्य पादौ स्पृष्टव्यौ । एतेन आसनेन कटिप्रदेशः, पृष्ठास्थीनि च शिथिलतां प्राप्नुवन्ति । पृष्ठभागस्य विश्रामः भवति ।

*** चतुर्थः मन्त्रः -**

ओं भानवे नमः - अश्वसञ्चालनासनम्

एतेन आसनेन पादस्य मांसखण्डाः दृढाः भवन्ति । मेरुदण्डस्य, कण्ठस्य च उत्तमः व्यायामः भवति ।

*** पञ्चम: मन्त्र: -**

ओं खगाय नम: - पर्वतासनम्

पृष्ठाभागस्य बाह्वो: च बलवर्धनं करोति । स्कन्धं, वक्षस्थलं च विस्तार्य मनसि प्रशान्ततां जनयति ।

*** षष्ठ: मन्त्र: -**

ओं पूष्णे नम: - अष्टाङ्गनमस्कार:

अष्टाङ्गनमस्कार: मेरुदण्डस्य बलवर्धनं कृत्वा मन: प्रशान्तयति ।

*** सप्तम: मन्त्र: -**

ओं हिरण्यगर्भाय नम: - भुजङ्गासनम्

विस्फारितफणया स्थित: सर्प: इव एतत् आसनं दृश्यते । एतेन शरीरस्य सर्वाङ्गानि बलवृद्धिं प्राप्नुवन्ति ।

*** अष्टम: मन्त्र: -**

ओं मरीचये नम: - पर्वतासनम्

एतेन पृष्ठभागे रक्तपरिचलनम् अधिकं भवति ।

*** नवम: मन्त्र: -**

ओम् आदित्याय नम: - अश्वसञ्चालनासनम्

उदरस्य अवयवानां पादयो: मांसखण्डानाम् च बलवर्धनया इदम् आसनम् उत्तमतया सहकरोति ।

*** दशम: मन्त्र: -**

ओं सवित्रे नम: - पादहस्तासनम्

एतत् आसन् कटि-बाहु-हस्तादीनां शक्तिं वर्धयति ।

*** एकादश: मन्त्र: -**

ओम् अर्काय नम: - हस्त-उत्थानासनम्

उदरस्य शक्तिं वर्धयित्वा वक्षस्थलस्य विकासनं करोति । तत: शरीरं अधिकतया प्राणवायुं यथा प्राप्नुयात् तथा सहकरोति । श्वासकोश: सम्पूर्णतया विकासं प्राप्नोति ।

*** द्वादश: मन्त्र: -**

ओं मित्राय नम: - प्रणमासनम्

एतेन आसनेन शरीरस्य समतोलनं प्राप्यते । तथैव नरमण्डलं शिथिलीकृत्य शरीराय विश्रान्तिसुखं यच्छति ।

एवंप्रकारेण 12 आसनानि अपि श्रद्धया यदि करोति तर्हि: एक: सूर्यनमस्कार: समाप्यते । शरीरस्य अष्टसु भागेषु सूर्यनमस्कारस्य सम्बन्ध: अस्ति ।

1. ललाटम् 2. वक्षस्थलम् 3. हस्तपादम् 4. भुजौ, बाहू च 5. जानु 6. दृष्टि: 7. कण्ठ: 8. मन:, बुद्धि: च

**एकाग्रता -** मनस: एकाग्रतार्थं भगवद्गीतायां श्रीकृष्णेन अर्जुन: बोधित: । स: श्लोक: इत्थम् -

समं काय शिरोग्रीवं धारयन्नचलं स्थिर: । सम्प्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकयन् ॥ - (गीता - 6.13)

शरीरं, शिर:, कण्ठ: च एतान् त्रीन् समानतया अचलतया नासिकाग्रे स्थिरीकृत्य मन: वशीकरणीयम् ।

**श्वासोच्छ्वासः** - सूर्यनमस्कारे श्वासोच्छ्वासस्य नियन्त्रणं प्रामुख्यम् आवहति । ब्रहदारयकोपनिषदि 'प्राणो वै बलम्' (5-98-4) इति उक्तम् अस्ति ।

न केवलं मनुष्येभ्यः अपि तु प्राणिसस्यप्रभृतीभ्यः च शक्तिं ददाति सूर्यः, सूर्ये विद्यमाना विशिष्टा शक्तिः च । मानवजीवनं सस्यसम्पत्तेः आधारभूतम् अस्ति । ततः सूर्येण विना जीवनं दुःस्साध्यम् । शरीराय आरोग्याय च सूर्यनमस्कारः अत्यावश्यकः । इदं ज्ञात्वा अस्मत्पूर्वजाः सूर्यनमस्कारम् अभ्यस्य अनेकानि वर्षाणि यावत् रोगरहिततया जीवनं यापितवन्तः । गच्छता कालेन समयाभावेन अयं क्रमः ह्रासतां गतः । तेन कारणेन जनेषु अनेकविधाः रोगाः वर्धमानाः सन्ति ।

पुनश्च अयं क्रमः प्रगतिपथं प्रति आनेतव्यः इति धिया सर्वेषाम् आरोग्यार्थं मकरसङ्क्रमणकाले रथसप्तमीदिने च सामूहितकतया 108 सूर्यनमस्कार-करणस्य पद्धतिः आगता अस्ति ।

जनसामान्यानां कृते सूर्यनमस्कारः प्रापणीयः इति धिया केन्द्रसर्वकारेण मूल्याङ्कनानाम् (stamp) उपरि सूर्यनमस्कारस्य सर्वाणि आसनानि सुन्दरतया मुद्रितानि सन्ति । तदतिरिच्य द्वादश आसनानि अपि एकस्मिन् मूल्याङ्कने एव मुद्रणं कारयित्वा अन्ताराष्ट्रीययोगदिने (21.6.2015) चेन्नैनगरस्थे पत्राचारस्य (Indian Post Office) मुख्यकार्यालये लोकार्पण-कार्यक्रमः कृतः । सूर्यनमस्कारेण समग्रशरीरे उत्साहः वर्धते इति तु सर्वैः विदितम् एव ।

* * * *

## आकरग्रन्थाः


1. The cult of Sun-God in Medieval Eastern Bengal by -Sart Chandra Mitra
2. Surya Namaskara- by BhavauravShrinivasan.
3. Sun – worship in ancient India by V.C. Shrivatsa.
4. What is best to Eat – by Dr.S.H.Belfrage M.D
5. AstadalaYogamala – B.K.S. Iyengar.
6. Yoga Pravesha – by Ajit Kumar.


*************

**Volume XXI : January to June – 2023, ISSN 2250-1711**
**Journal of Veda Samskrita Academy [Recognised in the UGC-CARE List]**

# जीवन्मुक्तिविचाराणां महावाक्यार्थदर्पणदिशा विमर्शः

**डा. गणपति वि. हेगडे**
प्रभारी प्राचार्य,
असिस्टेण्ट प्रोफेसर अद्वैतवेदान्तविभाग
मुम्बादेवी आदर्श संस्कृत महाविद्यालय मुम्बई भारतीय विद्या भवन,
के.एम्.मुन्शी मार्ग,गिरगांव चौपाटी, मुम्बई – 400007
Contact No. : 9482944911
E-mail : ganapativg@gmail.com

श्रीमताकृष्णानन्दभारतीतीर्थेन विरचितः वेदान्तशास्त्रसम्बद्धः अप्रकाशितः तालपत्रादिस्थितः 'महावक्यार्थदर्पणम्' इति ग्रन्थः एकसप्तत्युत्तरषोडशशतश्लोकघटितः (१६७१) पद्यात्मकः ग्रन्थः विद्यते । मया अस्मिन् ग्रन्थे जीवन्मुक्तिः कथं निरूपिता इति लेखनेऽस्मिन् लिख्यते । अविद्याकारणं जीवत्वमस्ति, तथाविद्यानिवृत्याजीवत्वं बाध्यते अर्थात् ब्रह्मरूपं लभ्यते । अविद्याबन्धनं मिथ्या । अस्य मिथ्याबन्धनस्य विधूननेन एव मोक्षप्राप्तिः भवति । तदुक्तं श्री मधुसूदनसरस्वतीयतिवर्यैः "मिथ्याबन्धविधूननेन विकल्पोऽज्झितः"[1] इति । मिथ्याबन्धनस्य विधूननं तत्त्वमस्यादिवाक्योत्त्थसम्यक्धीजन्ममात्रतः एव भवति । यदा तत्त्वमसि इत्यादिवाक्यद्वाराविद्यानिवृत्तिर्जायते ब्रह्मविषयकज्ञानेन तदैव सहकार्येणाविद्यायाः बाधो जायते । तदा जीवः निजब्रह्मस्वरूपे प्रतिष्ठितो भवति । इयमेव मुक्तिः, अयमेव परमपुरुषार्थः मोक्षः ।

मुक्तिः द्विविधा जीवन्मुक्तिर्विदेहमुक्तिश्चेति । जीवतः इहैव ब्रह्मात्मैक्यसाक्षात्कारेण समूलाविद्यानिवृत्तौ नित्यशुद्धबुद्धमुक्तस्वरूपाखण्डसच्चिदानन्दस्वरूपेणैव स्वात्मना स्थितिरेव मुक्तिः । प्रारब्धकर्मवशात् देहे सत्यपि ब्रह्मसाक्षात्कारवतः स्वस्वरूपावस्थितिः जीवन्मुक्तिः इत्युच्यते । प्रारब्धकर्मसमाप्त्यनन्तरं विदेहकैवल्यम् । प्रारब्धवशात्सत्यपि देहे ब्रह्मनिष्ठो ब्रह्मसाक्षात्कारवान् जीवन्मुक्तः इत्युच्यते ।

यथा जीवन्मुक्तो नाम स्वस्वरूपाखण्डब्रह्मज्ञानेन तदज्ञानबाधनद्वारा स्वस्वरूपाखण्डब्रह्मणि साक्षात्कृते अज्ञानतत्कार्यसञ्चितकर्मसंशयविपर्ययादीनामपि बाधितत्वात् अखिलबन्धरहितो ब्रह्मनिष्ठः[2] । मुक्तस्य ज्ञानबलात् प्रारब्धकर्मणः यावत्फलभोगपर्यन्तं ज्ञानमात्रेण निवृत्यसंभवेन जीवन्मुक्तिः सूत्रभाष्यसम्मता, श्रुतिसम्मता, स्थितप्रज्ञलक्षणप्रतिपादनात् गीतासम्मता च वरते। जीवन्मुक्तेः अनङ्गीकारे जगति ज्ञानिगुरोरेव लोपप्रसंगः, "तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्"[3] इत्यादिश्रुतिविरोधः सूत्रविरोधश्च संभवति । प्रारब्धकर्म वेगानुरोधादेव बाधितानुवृत्तिः सिध्यति । तत्क्षये तु हेत्वभावादनारम्भे विदेहकैवल्यं भवति[4] ।

जीवन्मुक्तः विद्वान् स्वयं स्ववासनाप्रेरित एव दुःखमयत्नसिद्धं वैषयिकं सुखं विषयेषु च भुङ्क्ते । प्राप्तं दुःखं केनाप्युपायतः रोद्धुं न शक्यते । तद्वत्सुखं वैषयिकं प्रारब्धं बलवत्तरम् । जीवन्मुक्तानां कथं व्यवहारः संभवति इति चेदुच्यते । यथा-

**स्ववासनाप्रेरित एव वर्तते यत्नेन नायं विषयेषु विद्वान् । भुङ्क्ते यथा दुःखमयत्नसिद्धं स्वयं तथा वैषयिकं सुखं च ॥**[5]

**समीक्षते वासनयैव भाषते जानाति भुङ्क्ते कुरुते च सर्वम् । नरोऽपि लोके त्वनपेक्ष्य वासनां प्रवर्तते नापि निवर्तते जनः ॥**[6]

यथा विदुषस्स्वतः अयत्नेन दुःखमायाति तथैव औदासिन्येन तिष्ठतः सुखमायाति । स्वयमेव सुखं दुःखमायात्यारब्धवेगतः । अहोरात्रादिवत् प्राप्तं दुःखं केनाप्युपायतः न रोद्धुं शक्यते । प्रारब्धं कर्म बलवत्तरम् वर्तते । केचन प्रारब्धं स्वेच्छानिच्छापरेच्छाभिः त्रिविधमिति वदन्ति । अविद्याकामकर्माणि शरीरोत्पत्तिकारणम् वर्तते । उक्तानां त्रयाणां विनाशः मोक्षस्य कारणम् । अतः मुमुक्षोः कर्तव्यं सर्वकामप्रमोक्षणम् । सर्वकामप्रमोक्षः अविद्याविलये सति भवति । सर्वोऽपि लोकः सकलक्रियासु स्ववासनाप्रेरित एव वर्तते । संसारबन्धः वासनाकृतः तन्मुक्तिरेवात्मविदां विमुक्तिः । ब्रह्मात्म्यैकत्वबोधेन विनष्टावरणस्य ब्रह्मनिष्ठया वासनानां क्षयः कर्तुं शक्यते ।

यथा रामनाम्नः कृष्णनाम्नो वा वृत्यैकग्राह्ययोः सहोच्चारणं न सिध्यति तथैव ब्रह्मजगतोरुभयोरपि न घटते सह ग्रहः । यथा घटज्ञानं पटज्ञानं नैकधा घटते तथा ब्रह्मज्ञानं जगज्ज्ञानं नैकदा घटते ।

तस्मात् जीवन्मुक्तिः कथमिति चेदुच्यते यथा-

**देहादावभिमानिनो हि करणव्यापार आलोक्यते । तेनैवैतद्रहितस्य केवलपरब्रह्मात्मना तिष्ठतः ॥**[7]

**धन्या महान्तः प्रणिधानवन्तः पूर्णे परे ब्रह्मणि संवसन्तः । विन्दन्ति नन्दन्ति मुदा रमन्ति क्रीडन्ति लीनन्ति तदात्मनान्तः ॥**[8]

**जीवन्विमुक्तस्तु स एव विद्वान्मुङ्क्ते सदानन्दसुधारसं यतिः । अन्तर्बहिस्सर्वत एव सर्वदा स्वमेव पश्यन् परिपूर्णमद्वयम् ॥**[9]

**स्यान्निर्विकल्पकसमाधिनिरूढवृत्तेर्नो दृष्टदुःखलवलेशतरप्रतीतेः ।**

**अश्रान्तनिश्चलतरात्मसुखानुभूतिमुक्तस्य जीवत इहैव विदुत्तमस्य ॥**[10]

तस्मात्सर्वप्रयत्नेन विदुषा बोधदार्ढ्याय वासनाक्षयः कर्तव्यः । यावत् विपरीतभावना न गच्छेत् तावत् अस्य शरीरबन्धः न याति । पूर्वसम्भावितबाह्यवासना केनापिरोद्धुं न हि शक्यते । अतः विद्वानपि वासनानुरूपं प्रवर्तते । यथा वायुवेगेन मेघो दिगन्तरं याति तथा वासनानां बलेनैव मनः बाह्यमालम्बते । सङ्कल्पो वासनामूलः कामस्सङ्कल्पमूलकः । काममूलानि कर्माणि वासनामूलकारणम् वर्तते । तदुक्तं महावाक्यार्थदर्पणे यथा-

**वासनानां क्षये सिद्धे मनस्स्वात्मनि लीयते । मनस्स्वात्मनि लीने तु नश्यन्त्यखिलवासनाः ॥**[11]

**ज्ञानस्य कार्यं विविधं वदन्ति जीवद्दशायामिह सौख्यमात्म्यम् । विदेहमुक्तिं च विचक्षणास्तत्कार्यद्वयं हन्ति च वासना स्वयम् ॥**[12]

**तस्मात् प्रवृत्तिः परिवर्जनीया मुमुक्षुणा ब्रह्मविदत्र बाह्ये । नित्याद्वयानन्दसुखानुभूतिं विदेहमुक्तिं च य इच्छतीह ॥**[13]

तस्मात्प्रयत्नेन विमुक्तिकामः परात्मनि मनः सम्यक्समाधाय तद्वासनानां क्षितिमातनोतु इति श्रुतिस्मृतीनां परमं तात्पर्यम् । यथा असंमूढनिदिध्यासनस्य विजातीयप्रत्ययान्तरितसजातीयप्रत्ययप्रवाहस्य परिपाकेन विपरीतभावनाख्यसम्मोहरहितः ततः सर्वप्रतिबन्धापगमात् ब्रह्मवित् ब्रह्मसाक्षात्कारवान् ततश्च समाधिपरिपाकेन निर्दोषे समे ब्रह्मण्येव स्थितो नान्यत्रेति जीवन्मुक्तः स्थितप्रज्ञः इत्यर्थः[14] । अयं व्युत्थानसमये मांसशोणितभाजनेन शरीरेण इन्द्रियग्रामेण पूर्वपूर्ववासनया क्रियमाणानि कर्माणि भुज्यमानानि ज्ञानाविरुद्धारब्धफलानि च पश्यन्नपि बाधितत्वात् परमार्थतो न पश्यति । यथेन्द्रजालमिदमिति ज्ञानवान् तदिन्द्रजालं पश्यन्नपि परमार्थमिदमिति न पश्यति । सचक्षुरचक्षुरिव सकर्णोऽकर्ण इव इत्यादिश्रुतेः । उक्तं च सुषुप्तवज्जाग्रति यो न पश्यति द्वयं च पश्यन्नपि चाद्वयत्वतः । तथा च कुर्वन्नपि निष्क्रियश्च स आत्मविन्नान्य इतीह निश्चयः[15] ।

तत्त्वज्ञाने सति देहपातः न भवति तत्र अविद्याबन्धनमपगच्छति, तस्मिन्नेव शरीरे प्रारब्धकर्मवशात् शरीरक्रिया यथापूर्वमनुवर्तते । यथा दण्डद्वारा चक्रभमेण कृते, उपरते दण्डव्यापारे चक्रं किञ्चित्कालं यथापूर्वं भ्रमते तथैव पूर्वकर्मभिर्लब्धं शरीरं ज्ञाने सत्यपि नष्टं न भवति प्रारब्धानुसारि प्रचलति[16] । तदुक्तं छान्दोग्ये " तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये"[17] इति । येन कर्मणा शरीरमारब्धं तस्योपभेगेन क्षयाद् यावन्न देहपातः तावदेव आचार्यवतः विज्ञानवतः पुरुषस्य सदात्मसम्पत्तेः कालक्षेपः । यदैव च प्रारब्धकर्मणाम् उपभोगेन क्षयः तदैव सत् सम्पद्यते इति देहपातस्य सत्सम्पत्तेश्च न कालभेदः विद्यते । ब्रह्मविदः जीवनप्रयोजनाभावे अपि प्रवृत्तफलानां कर्मणाम् स्थितिः अवश्यमेव स्यादिति मुक्तेषुवत् ।

ज्ञानमात्रस्य नाज्ञाननिवर्तकत्वं किन्तु अप्रतिबद्धज्ञानस्य । प्रारब्धकर्मरूपफलप्रतिबन्धकसद्भावदशायां ज्ञानं प्रतिबद्धं तेन अज्ञानस्य न निवृत्तिः न वा प्रारब्धकर्मणः । अतः अज्ञानकार्यसद्भावात् ज्ञानिनः जीवन्मुक्तानां देहधारणमुपपन्नं भवति । निवृत्तसर्पभ्रमस्यापि संस्कारात् भयकम्पानुवृत्तिवत् दण्डसंयोगनाशेऽपि चक्रभ्रमणवच्च संस्कारानुवृत्तेः अविद्यानिवृत्तौ अपि देहादिकार्यस्य अनुवृत्तिः सम्भवति ।

**पादटिप्पणी**

1. अद्वैतसिद्धिः - मङ्गलश्लोकः ।

2. वेदान्तसारः ।

3. मुण्डकोपनिषत् १-२-१२
4. संक्षेपशारीरकं - ०४/४५ ।
5. महावाक्यार्थदर्पणम् – १४९३ ।
6. महावाक्यार्थदर्पणम् – १५०८ ।
7. महावाक्यार्थदर्पणम् – १५३९ ।
8. महावाक्यार्थदर्पणम् – १५५६ ।
9. महावाक्यार्थदर्पणम् – १५४९ ।
10. महावाक्यार्थदर्पणम् – १५५० ।
11. महावाक्यार्थदर्पणम् – १५८३ ।
12. महावाक्यार्थदर्पणम् – १५८० ।
13. महावाक्यार्थदर्पणम् – १५८५ ।
14. भगवद्गीता ५-२०
15. वेदान्तसारः ।
16. बृहदारण्यकोपनिषद् भाष्यम् -२-४-५ ।
17. छान्दोग्योपनिषद्- छा.६.१४.१२ ।

परिशीलितग्रन्थाः-

१. महावाक्यार्थदर्पणः – कृष्णानन्दभारतीतीर्थः अड्यार ग्रन्थालयः ।
२. ब्रह्मसूत्रम् (शाङ्करभाष्योपेतम्) – मोतिलाल बनारसीदास पब्लिकेशन् दिल्ली, १९९८ ।
३. भगवद्गीता – गोरखपुर प्रेस- २०००।
४. वेदान्तपरिभाषा – प्रो. पारसनाथद्विवेदी, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी २०००।
५. उपनिषद्भाष्यम् -१,२,३ - श्रीशङ्करभगवत्पादाचार्याः, श्रीदक्षिणामूर्तिमठप्रकाशन वाराणसी, २००४
६. अद्वैतसिद्धिः – श्रीमधुसूदनसरस्वती, चौखम्बा संस्कृतप्रतिष्ठान, वाराणसी १९६५ ।
७. वेदान्तसारः – श्रीसदानन्दः, चौखम्बा कृष्णदास अकाडमी वाराणसी, २००२।
८. सिद्धान्तलेशसंग्रहः – श्रीमदप्पय्यदीक्षितः, चौखम्बा कृष्णदास अकाडमी वाराणसी,२००२ ।
९. शाङ्करवेदान्तकोशः- डा. मुरलीधर पाण्डेय, संपूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराण्सी,१९९८ ।
१०. शाङ्करवेदान्ते तत्त्वमीमांसा- चौखम्बा कृष्णदास अकाडमी वाराणसी, २००२।
११. शाङ्करदर्शनमर्मप्रकाशः- कृष्ण जोईस, राष्ट्रियसंस्कृतविद्यापीठं तिरुपतिः, १९९५।
१२. अद्वैततत्त्वमीमांसा- अभेदानन्द भट्टाचार्य, परिमल पब्लिकेश्न दिल्ली-२००० ।

*****************

**Volume XXI : January to June – 2023, ISSN 2250-1711**

**Journal of Veda Samskrita Academy [Recognised in the UGC-CARE List]**

# पञ्चतन्त्रे षाड्गुण्याधारेण युद्धकौशलविवेचनम्

**LOKENATH DAS,**
Research Scholar
Department of Sanskrit (Sahitya)
National Sanskrit University, Tirupati- 517507, Andhra Pradesh
Contact No. :6294215214,
Email- udas7613@gmail.com

सारांशः (Abstract)

प्राचीनकाले भारतवर्षेऽनेकानि लघु-दीर्घकायराज्यान्यासन्। तानि सर्वाणि प्रायशः स्वतन्त्राण्येव। अतस्तेषु राज्येषु पारस्परिकसम्बन्धविषये तदानीन्तनेषु राजशास्त्रग्रन्थेषु साधुविचारणा विहिता। एतत्सम्बन्धे न केवलम्मनु-भीष्म-कौटिल्य-कामन्दकादयो राजशास्त्रविदैव अपितु कालिदास-भारवि-माघादयोऽपि महाकाव्यप्रणेतारः सम्यक् विवेचनं कृतवन्तः। भारतीयराजशास्त्रग्रन्थेषु मन्त्रस्यात्यधिकं महत्त्वं विज्ञापितम्। अयमेव मन्त्रः षाड्गुण्यसम्बद्धः। षाड्गुण्यमन्त्रमेव राजमन्त्रिणोर्मध्ये विधीयते। राजकार्यं सञ्चालनाय राज्ञा मन्त्रिनियुक्तिः विधीयते। मनुः कथयति यन्मन्त्रिभिस्सह सामान्यं सन्धिविग्रहं स्थानं समुदयं गुप्तिं प्राप्तवस्तुप्रयोगविषयांश्च चिन्तयेत्। उक्तञ्च-

सर्वेषास्तु विशिष्टेन ब्राक्षणेन विपश्चिता। मन्त्रयेत् परमं मन्त्रं राजा षाड्गुण्यसंयुतम्।।

कुञ्चीशब्दाः- सन्धिः, विग्रहः, यानम्, आसनम्, द्वैधीभावः, संश्रयः, षाड्गुण्यसम्बन्धः।

प्रस्तावना (Introduction)

प्राचीनकाले भारतवर्षेऽनेकानि लघु-दीर्घकायराज्यान्यासन्। तानि सर्वाणि प्रायशः स्वतन्त्राण्येव। अतस्तेषु राज्येषु पारस्परिकसम्बन्धविषये तदानीन्तनेषु राजशास्त्रग्रन्थेषु साधुविचारणा विहिता। एतत्सम्बन्धे न केवलम्मनु-भीष्म-कौटिल्य-कामन्दकादयो राजशास्त्रविदैव अपितु कालिदास-भारवि-माघादयोऽपि महाकाव्यप्रणेतारः सम्यक् विवेचनं कृतवन्तः। प्रायस्ते सर्वे तदानीन्तनानां राज्ञां सम्बन्धप्रसङ्गे मण्डलसिद्धान्तस्य प्रतिपादनं कृतवन्तः। राजमण्डलस्योक्तद्वादशप्रकृतीनां प्रत्येकस्यामात्य-राष्ट्र-दुर्गार्थ-दण्डाः भवन्ति पञ्चप्रकृतयः। एवं प्रकारेण षष्टिप्रकृतयो जातास्तथा चतसृभिर्मूलं प्रकृतिभिश्शाखा प्रकृतिभिश्प्रचाष्टाभिः समं द्विसप्ततिः प्रकृतयो। उक्तञ्च-

एताः प्रकृतयो मूलं मण्डलस्य समासतः। अष्टौ चान्या समाख्याता द्वादशैव तु ताः स्मृताः।।

अमात्य-राष्ट्र-दुर्गार्थ-दण्डाख्याः पञ्च चापराः। प्रत्येकं कथिता ह्येताः संक्षेपेण द्विसप्ततिः।। 1

उक्तराजमण्डलस्य प्रकृतिभिस्साकं विजिगीषू राजा केन प्रकारेण व्यवहारं कुर्यादिति विषये भगवान् मनुरूपायचतुष्टयस्य षाड्गुण्यनीत्याश्चाश्रयः ग्रहणाय निर्दिष्टवानस्ति। अत एव षड्गुणाराजनीतिशास्त्रग्रन्थेषु सन्धि-विग्रह-यानासनद्वैधीभावसंश्रयः रूपेण स्मृताः। एते गुणाः देशकालः परिस्थित्यानुसारेण प्रयोक्तव्याः नृपतिभिः। भारतीयराजशास्त्रग्रन्थेषु मन्त्रस्यात्यधिकं महत्त्वं विज्ञापितम्। अयमेव मन्त्रः षाड्गुण्यसम्बद्धः। षाड्गुण्यमन्त्रमेव राजमन्त्रिणोर्मध्ये विधीयते। राजमण्डलस्य राज्ञां पारस्परिक-नीतिविनिर्णयायैव षाड्गुण्यसंयुक्तो मन्त्रो विधीयते। यथा राष्ट्राभिवृद्धये उपायप्रयोगाः भवन्ति तथैव षड्गुणाः अपि राष्ट्रवृद्धिकारकाः भवन्ति। राजकार्यं सञ्चालनाय राज्ञा मन्त्रिनियुक्तिः विधीयते। मनुः कथयति यन्मन्त्रिभिस्सह सामान्यं सन्धिविग्रहं स्थानं समुदयं गुप्तिं प्राप्तवस्तुप्रयोगविषयांश्च चिन्तयेत्। उक्तञ्च-

सर्वेषास्तु विशिष्टेन ब्राक्षणेन विपश्चिता। मन्त्रयेत् परमं मन्त्रं राजा षाड्गुण्यसंयुतम्।। 2

'सन्धिः'

महान् राजनयवेत्ता विष्णुशर्मा स्वस्मिन् ग्रन्थे यद्यपि षाड्गुण्यस्य परिभाषाणं कृतवानस्ति किन्तु विवेचनमस्य विशदरूपेण तेन कृतम्। षाड्गुण्यनीतिप्रयोगो मुख्यतः पञ्चतन्त्रस्य काकोलूकीये नाम्नि तृतीये तन्त्रे विहितः। ग्रन्थानुसारे महिलारोप्यं नाम नगरे एकोविशालो वटतरुः

आसीत्। तत्र मेघवर्णो नाम वायसराजो अनेककाकपरिवारैः सह प्रतिवसति स्म। स तत्र स्वीयदुर्गनिर्माणेन सपरिजनैः सह सुखेन कालं निवसति स्म। तथाऽन्योऽरिमर्दनो नाम उलूकराजो असङ्ख्योलूकपरिवारो गिरिगुहादुर्गाश्रयः प्रतिवसति स्म। स च रात्रावभ्येत्य सदैव तस्य वटतरोः समन्तात्परिभ्रमति। अथोलूकराजः पूर्वविरोधवशाद् कञ्चिद् वायसं प्राप्नोति तं विनाश्य गच्छति। अस्यां स्थितौ तथाविधस्य रिपोरुच्छेदः सर्वदाऽवश्यको वायसराजेनानुभूतो यतोहि आलस्य युक्तो यो जनो यद्दच्छया प्रसरन्तमरिं रोगं चोपेक्षेत स तेनैव विनाश्यते। उक्तञ्च-

जातमात्रं न यः शत्रुं व्याधिञ्च प्रशमं नयेत्। महावलोऽपि तेनैव वृद्धिं प्राप्य स हन्यते।। 3

इत्थं विचिन्त्या मेघवर्णः सर्वान् सचिवानाहूयात्मरक्षासम्बन्धे उपयुक्त समाधानं जिज्ञासितवान्। उत्कटस्तावदस्माकं शत्रुरुद्यमसम्पन्नः कालविच्च। नित्यमेव निशागमे आगम्य अस्माकं पक्षीयप्राणिविनाशं करोति। वयं वायसाः रात्रौ न पश्यामो दिने वा दृष्ट्वाऽपि तस्य दुर्गं द्रष्टुमक्षमाः प्रतिविधानमपि कर्तुं न शक्नुमः। तत्कथमस्य प्रतीकारः? तदत्र अरिमर्दनस्य मर्दनविषये किं युज्यते सन्धि-विग्रह-यानासन्-संश्रय-द्वैधीभावानां मध्यात्। पूर्वमुक्तं यद् विष्णुशर्मणा षाड्गुण्यस्य परिभाषणं कृत्वा तस्य विवेचनमेव कृतम्। महतोऽरेररिमर्दनस्योच्छेदनाय षाड्गुण्यस्य प्रयोगस्य महत्यावश्यकता विद्यते। मेघवर्णस्य प्रश्नमनुश्रुत्य ते सर्वे सचिवाः मन्त्रणां विधाय शत्रोः शत्रुताकारणं ज्ञातुं निग्रहं च कर्तुमैच्छन्। वायसराजस्य पञ्चसचिवाः आसन्। ते उज्जीवी-सञ्जीवी-अनुजीवि-प्रजीवि-चिरञ्जीविनाम्ना ग्रन्थे स्मृताः। मेघवर्णः पञ्चसचिवान् प्रत्येकं प्रष्टुमारब्धवान्। तेषु सचिवेषु प्रथमं उज्जीविनं पृष्टवान् एवं विकटस्थितौ किम्मन्यते भवानिति ? स आह- बलवता सह विग्रहो न विधेयः यतः सः बलवान् कालप्रहर्ता च। अतः सन्धिरेव सर्वथा विधेयः इति प्रथमस्य सचिवस्योज्जीविनो मतम्। उक्तञ्च यतः-

बलीयसे प्रणमतां काले प्रहरतामपि। सम्पदो नापगच्छन्ति प्रतीपमिव निमग्नाः।। 4

स्वमतपुष्टये तेन पुनरुक्तं यद् गर्वोऽभिमानोऽहङ्कारो नृपतिः यदि सन्धिं न करोति तर्हि सः समवलेनापि शत्रुणा परस्परं क्षयप्राप्तामृन्मयघटयोरिव स्वक्षयं याति। प्रबलेन समं दुर्बलपुरुषस्य युद्धं तस्य निधनकारणमेव भवति। मूषिकस्य पाषाणबिलं यदि सिंहोऽपि खनति तदा तस्य नखभङ्ग एव जायते अथवा मूषिकप्राप्तिमात्रं भवति। अतोऽलाभकरं युद्धं सर्वथा त्याज्यम्। अतः अतिसामान्यं लाभाकाङ्क्षया कदाचित् महान् प्रयत्नो न आश्रयणीयः। उक्तञ्च-

खनन्नाखुबिलं सिंहः पाषाणशकलाकुलम्। प्राप्नोति नखभङ्गं वा फलं वा मूषको भवेत्॥ 5

युद्धं तु कदापि न विधेयं तथापि यदि बलीयसा सञ्जायते तदा सत्वरमेव वैतसीवृत्तमाचरणीया न कदापि भुजङ्गवृत्तिम्। वैतसीवृत्तिमाचरेण पुरुषो सम्पदं प्राप्नोति परन्तु सर्पवृत्तमापन्नो जनः केवलं वधयोग्यः एव भवति। उक्तम्-

बलीयसा समाक्रान्तो वैतसीं वृत्तिमाश्रयेत्। वाञ्छन्नभ्रंशिनी लक्ष्मीं न भौजङ्गीं कदाचन॥ 6

अन्यञ्च- कुर्वन्हि वैतसीं वृत्तिं प्राप्नोति महतीं श्रियम्। भुजङ्गवृत्तिमापन्नो वधमर्हति केवलम्।। 7

उज्जीविनः स्पष्टमतं यत् कच्छपसंकोचमास्थाय प्रहाराणपि सहेत तथा च सुसमये प्राप्ते कृष्णसर्पवत् इव तिष्ठेत्। तथा च बलवता सह विरोधे कदाचित् कूर्मवृत्तिः कदाचिच्च भुजङ्गवृत्तिः आश्रयणीया कर्तव्या। यदि कदाचित् युद्धोपरिस्थितिरेव भवेत् तदा सामनीतिप्रयोगेन शान्तिरेव विधेया न कदापि युद्धे शीघ्रता दर्शयितव्या। तदनुसारेण येन केनापि प्रकारेण राजा यदि स्वसिद्धिमेव पश्येत् तदैव सन्धिं कुर्यात्।उक्तञ्च-

सन्धिः कार्येऽप्यनार्येण विज्ञाय प्राणसंशयम्। प्राणैः संरक्षितैः सर्वं राज्यं भवति रक्षितम्।। 8

सन्धेरनन्तरमपि राजा सर्वदा स्वार्थमभिलक्ष्य शत्रोः अपकर्षं चिन्तयेत्। एवं विभिन्नपरिस्थितिं अवलोक्य उज्जीवी नामकः सचिवो मेघवर्णाग्रे साममन्त्रेण सन्धिकरणमेव विज्ञप्तवान्।सत्यमरिमर्दनो नामोलूको मेघवर्णाद् बलवत्तरोऽतो यदि तेन सह विग्रहो भवति तर्हि सर्वदा वायसस्यैव हानिः सम्भवेत्। वस्तुतः उज्जीवी शान्तविचारसमर्थकः आसीत् अतस्तेन सन्धिरेवानुमोदितः।

"विग्रहः"

विग्रहो नाम विद्यते षाड्गुण्यस्य द्वीतीयं तत्त्वम्। पञ्चतन्त्रस्य द्वीतीये भागे मित्रभेदतन्त्रेऽपि विग्रहस्य विचारो विहितः। मित्रभेदे दमनकः स्वस्वार्थसिद्धये पिंगलक-सञ्जीवकयोर्मध्ये भेदस्य महान्तमुपायं कृतवान्। अस्मिन् प्रसंगे विष्णुशर्मणोक्तं स्वकीयपराक्रमप्रदर्शनं निर्बलशत्रोः

उपरि एव करणीयं न केवलमेतदेव, बलवन्तमरिमवलोक्यात्मनो रक्षामेव करणीयम्। परन्तु यदि कश्चन् शत्रोः पराक्रममविचार्य त्वाम् आह्वानं करोति तदा सर्वदैव हानिग्रस्तं एव भवति। पञ्चतन्त्रकारेण षाड्गुण्यस्य नीतिविचारः प्रसङ्गे सर्वत्रैव सन्धिः एव नानुमोदितः। मेघवर्णः प्रथममात्यम् उज्जीविनं श्रुत्वाऽनन्तरम् अपरामात्यं सञ्जीविनं पृष्टवान्। काऽभिमतिरस्मिन् प्रसंगे भवतः इति। सञ्जीवी केवलं सन्धिमेव श्रेयस्करं न मन्यते। शत्रुणा सह केवलं सन्धिः सर्वदा न विधेयमिति तस्याभिप्रायः। सन्धिकरणमेव तेन निराकृतम्। तेनोक्तम् अरिमर्दनः क्रूरोऽतिलुब्धो धर्मविहीनश्चास्ति। अतः सत्यधर्मरहितेन सह कदापि न सन्धिः विधेया। उक्तञ्च-

शत्रुणा न हि सन्दध्यात्सुश्लिष्टेनापि सन्धिना। सुतप्तमपि पानीयं शमयत्येव पावकम्॥ 9

क्रूरलुब्धोऽलसो-मूर्खः-युद्धनिरुत्सकः शत्रुः सुखेनोच्छेद्यो भवति।उपर्युक्तैः सर्वैः दुर्गुणैः सह अरिमर्दनः समन्वितोऽस्ति अतस्तेन सह विग्रहो एव विधेयः। तथाविधस्य शत्रोरुच्छेदोऽल्पप्रयासेनैव सम्भवेत।सञ्जीविनोच्यते यदा अरिमर्दनेनापमानिताः वयं यदि तेन सह सन्धिप्रस्तावमेव कुर्मस्तदा सः अतिकोपं करिष्यति। उक्तञ्च यत् चतुर्थोपायेन दण्डेन यो शत्रुता साध्यो भवति तत्र सन्धिप्रस्तावोऽरूचिकर: एव भवति, न कोऽपि विज्ञो वैद्यः आमज्वरग्रस्तं स्वेद्यं रोगिणं जलेन परिषिञ्चति। यथा जलबिन्दवः प्रतप्तस्य घृतस्य न शान्तिकारका एव भवन्ति तथैव क्रुद्धस्य शत्रोः कृते सामरुपः सन्धिप्रस्तावः तस्य क्रोधोद्दीपकः एव भवति।उक्तञ्च-

सामवादाः सकोपस्य शत्रोः प्रत्युत दीपकाः।। प्रतप्तस्येव सहसा सर्पिषस्तोयबिन्दवः॥ 10

महाकविमाघो निगदति यावत्पर्यन्तं शत्रोः मस्तकोपरि पादारोहणं न क्रियते तावदालम्बनरहिता कीर्तिः स्वर्गारोहणाय सक्षमा न भवति। तात्पर्यमिदं यदुच्चैरारोहणाय यथा सोपानस्यावश्यकता भवति तथैव कीर्तिं प्राप्तुं बलवताऽपि शत्रुणा सह विग्रहो करणीयः एव भवेत्। कौटिल्यो निगदति यत्पारस्परिकापकृतिरेव विग्रहः। सोमदेवसूरिविचारेण विजिगीषुकृतापराधं एव विग्रहोऽस्ति। अनेन प्रकारेण विष्णुशर्मणा भीषणपरिस्थितौ विग्रहाचरणमनुशंसितवान्।अतः सञ्जीवीना विग्रहमन्त्रं विज्ञापयामास।

### 'यानम्'

षाड्गुण्यस्य तृतीयं तत्त्वं "यानम्" विष्णुशर्मणा परिभाषितं किन्तु विवेचनमस्य कथोपकथनमाध्यमेन सम्यकविहितम्। मनुना यानस्य परिस्थितिः ज्ञापिता।तेन उक्तम्-

यदा प्रहृष्टा मन्यते सर्वास्तु प्रकृतिर्भृशम्। अत्युच्छ्रितं तथात्मानं तदा कुर्वीत विर्गहम्।। 11

आचार्यः कौटिल्यो विजीगीषोः शत्रुराज्योपरि आक्रमणं यानं कथयति। शुक्राचार्यानुसारेण विजयापाप्तिः कामनया शत्रुनाशाय यद्गमनं विधीयते तदेव यानम्। वायसराजेन मेघवर्णेन सञ्जीविनो विग्रहमन्त्रमनुश्रुत्य अनन्तरमपरोऽमात्यो अनुजीवीं स्वाभिप्रायं प्रकटयितुमनुरूद्धः। अनुजीविनोक्तं यदुलुकोऽरिमर्दनो दुष्टो बलवान् गतमर्यादश्चास्ति, तस्मात्तेन सह न सन्धिः न वा विग्रहो एव विधेयः। तदर्थं केवलं यानमेवश्रेयः यतः उत्कटबलयुक्तेन दुष्टेण शिष्टाचाररहितेन च साकं कदापि सन्धिविग्रहौ नोपयुक्तौ। अत्र केवलं यानमेव विकल्पः भवति। यानं नाम केवलमाक्रमणेनैव न सिध्यते किन्तु स्वरक्षार्थं पलायनमपि यानमेवोच्यते। विष्णुशर्मणा यानस्य प्रकारद्वयमुक्तम्। तत्र द्विविधे याने प्रथममेकं बलिना पीडितस्य भीतस्य रक्षणाय यानम्। अपरं विजिगीषोः शत्रुः विजयाय यात्रारूपं यानमिति। ग्रन्थकारोऽत्र यानस्य कालमपि अनुशंसितवान्। तदनुसारेणोत्कृष्टवीर्यस्य विजयाभिलाषिणो राज्ञः कार्तिके चैत्रे वा शत्रुदेशे यानम्प्रशस्यते न खलु अन्यसमये। मनुविचारेणा फाल्गुन-चैत्रेषु यानं गच्छेत्।विष्णुशर्मणा विपदग्रस्तं निर्बलं च अरिमुपरि यानं निर्दिष्टम्। विष्णुशर्मणाऽपि कथ्यते यद् सुहृदबलान्नजलादिं च न ज्ञातुं यो नृपतिः शत्रूच्छेदनाय परराष्टं गच्छति स पुनः स्वराष्ट्रमपि प्राप्तुं समर्थं न भवेत्। षाड्गुण्यविवेचनप्रसंगेऽनुजीविमुखेन विष्णुशर्मा विशदविवेचनं कृतवानस्ति। सिंहोऽपि क्रोधवशात् उत्पतनशीलो अङ्गं प्रथमं सङ्कोचं करोति। उक्तञ्च-

यदपसरति मेषः कारणं तत्प्रहर्तुं,मृगपतिरपि कोपात्सङ्कुचत्युत्पतिष्णुः।

हृदयनिहितभावा गूढमन्त्रप्रचाराः,किमपि विगणयन्तो बुद्धिमन्तः सहन्ते॥ 12

बुद्धिमन्तः पुरूषाः हृदगतमेव स्वकीयभावं कृत्वा मानापमानौ विगणयन्तः कालमपेक्ष्यन्ते। तात्पर्यमिदं यन्मेघवर्णोऽपि स्वशत्रुमुलुकमुपेक्ष्य

सद्योऽपसरणमेव कुर्यात्, अन्यच्च यो राजा शत्रुः बलवन्तम्मत्वाऽचिरमेव देशत्यागं करोति सः युधिष्ठिरमिव पृथिवीम्प्राप्नोति किन्तु यो दुर्बलो नृपतिः अहङ्कारवशाद्बलीयसा शत्रुणा सह युद्धं करोति स तु शत्रोः इच्छापूर्तिं करोति अपि च स्वकीयकुलस्य क्षयमेव करोति। अतो बलवताऽरिमर्दनेन समं न सन्धिं न विग्रहं न वा तस्योपरि यानं कृत्वा वायसराजो मेघवर्णोऽपसरेदेव कर्तव्यम्। एवमपसरणरूपं यानमनुजीविनाऽनुशंसितम्।

**'आसनम्'**

षाड्गुण्यस्य चतुर्थं तत्वम् 'आसनम्' विष्णुशर्मणा परिभाषितम्। अतः अनुजीवीनो वचनमाकर्ण्य मेघवर्णश्चतुर्थममात्यं प्रजीविनमाह- " भद्र त्वमप्यात्मनोऽभिप्रायं वद! प्रजीविना पूर्वाणि सन्धि-विग्रह-यानानि त्रीण्यपि नानुमोदितम्। विष्णुशर्मणा आसनमपि न परिभाषितम्, केवलं तस्य व्याख्यानमेव कृतम्। प्रथमं त्रीणि षाड्गुण्यतत्वानि निराकृत्यासनमनुष्ठेयमिति स्वमतपुष्टये विष्णुशर्मणा कथ्यते यदस्मिन् शत्रुकृताक्रमणकाले अपसरणं न युज्यते। अस्मिन् विकटसमये उपेक्षणमासनवत् स्वदुर्गमेव व्यावस्थायामरिप्रहाराद् आत्मरक्षणमेव प्रथमं कर्तव्यम् यतो जलचरविशेषो कुम्भीरः स्वस्थाने स्थित्वैव गजेन्द्रं सदृशं भयानकजीवमपि कर्षति परन्तु स एव कुम्भीरः यदि स्वस्थानाच्युतो जायते तर्हि सामान्य जीवेन कुक्कुरेणापि पराभवं गच्छति। उक्तञ्च-

नक्रः स्वस्थानमासाद्य गजेन्द्रमपि कर्षति। स एव प्रच्युतः स्थानाच्छुनापि परिभूयते॥ 13

अन्यभारतीयराजनीतिवित्समानो विष्णुशर्माऽपि दुर्गमहत्त्वं विज्ञापितवान्। दुर्गस्थो राजैव सर्वशक्तिसम्पन्नो भवतीति प्रतिपादयता तेनोक्तं यत स्वस्थाने दुर्गे स्थितो राजा एकोऽपि शतं सैनिकान् योद्धुं शक्नुयात् ।उक्तञ्च-

एकः शतं योधयति प्राकारस्थो धनुर्धरः। शतं दशसहस्राणि तस्माद् दुर्गं विधीयते।। 14

अतः स्थानभ्रष्टता कदापि न स्यात्। यतो युद्धं कृत्वापि यदि प्राणान् तिष्ठेत् चेत् राज्यं सम्प्राप्नुयात् परन्तु यदि मृतश्चेत् तदा स्वर्गप्राप्तिः सम्भवेत्। इत्थम्प्रजीविना आत्मरक्षार्थं मेघवर्णमासनगुणाश्रयणाय निर्देशितः। तद्विचारेण यदि मेघवर्णस्तदानीमासनमाश्रयते तदा गुप्तरूपेण स्वबुद्धिव्यायामं सैन्यबलञ्च दृढं कृत्वा शत्रुमरिमर्दनं सावधानतया परास्तं विधास्यति।

**'संश्रयः'**

षाड्गुण्यस्य चतुर्थतत्वं प्रजीविप्रोक्तमासनं निशम्य मेघवर्णेन पृष्टश्चिरंजीवी। सः स्वबुद्धिबलेन पूर्वोक्तान् गुणान् उपयुक्तान् मत्वा पञ्चमतत्त्वं " संश्रयम्" अनुमोदते। मेघवर्णेन पृष्टः सः वदति-'देव! षाड्गुण्यमध्ये मम संश्रयः सम्यक् प्रतिभाति। तत्तस्यानुष्ठानं कार्यम्। कः संश्रयगुणः इति विचारयता कौटिल्येनोच्यते "परार्पणं संश्रयः"। अर्थात् स्वशत्रोः अन्यस्य च कस्यचिद् बलवतो नृपतेः समक्षमात्मसमर्पणमेव संश्रयः । आचार्य शुक्रः संश्रयस्थाने आश्रयस्य प्रयोगं कृतवान्। तद्विचारेण सबलमित्रस्याश्रयं गृहीत्वा यदा निर्बलोऽपि राजा बलवान् भवति तदेवाश्रयः। कौटिल्यानुसारेण शत्रोर्बलवत्तरेण राज्ञा सह संश्रयगुणो व्यवहर्तव्यः। एतदभावे तथाविधस्य शत्रोरेवाश्रयो ग्रहीतव्यः। आचार्यविष्णुशर्मानुसारेण प्रतापी शक्तिसम्पन्नश्चैकाकीनृपतिः न किमपि कर्तुं शक्तः । वचनमिदं पुष्टयन् स कथयति यदवायुशून्यस्थाने ज्वलितोऽग्निः स्वयमेव शान्तोऽपि जायते। उक्तञ्च-

असहायः समर्थोऽपि तेजस्वी किं करिष्यति? निर्वाते ज्वलितो वह्निः स्वयमेव प्रशाम्यति॥ 15

पारस्परिकमैक्यमेव पुरुषाणां हितकरः विशेषतः स्वजातिषु नितान्तमावश्यकं सम्मेलनम्। तुषैः परिभ्रष्टास्तण्डुलाः कदापि न प्ररोहन्ति। एवं यदि एकाकित्वमकिञ्चित्करं तदा मेधवर्णेन कश्चित्समर्थो राजा समाश्रयणीयः। आश्रयभूतो मित्रसदृशराजैव विपत्तेः प्रतीकारं करोति। यदि भवान् मेघवर्णो निजस्थानमात्रं परित्यज्यान्यत्र कुत्रचिद् गच्छति तदा न कोऽपि समर्थो जनो वाङ्मात्रेणापि भवतः सहायतां करिष्यति। दुर्बलस्य न कोऽपि सहायको भवति। वनानि दहनस्य कृते वायुः अग्नेः सहायको भवति। किन्तु स एव वायुः दीपस्य विनाशाय मुख्यकारणम्भवति। उक्तञ्च-

महाजनस्य सम्पर्कः कस्य नोन्नतिकारकः। पद्मपत्रस्थितं तोयं धत्ते मुक्ताफलश्रियम्॥ 16

एवं येन केनापि प्रकारेण तादृश्यां विकटपरिस्थितौ मेघवर्णेन षाड्गुण्यस्य पंचमो गुणः संश्रयः एवाश्रयणीयः। एतद्विनाऽरिमर्दनात्

कश्चिद्रक्षाप्रतीकारः न प्रतिभाति। यदि मेघवर्णः कस्यचिद्राज्ञः संश्रयमादत्ते तदैव तेषां सर्वेषां वायसानां प्राणरक्षां सम्भवति, अन्यथा सर्वनाशस्तु अवश्यम्भावी एवास्ति। इत्थं प्रकारेण चिरंजीविना संश्रयगुणस्य पक्षपातः कृतः।

**'द्वैधीभावः'**

वायसराजो मेघवर्णः पूर्वोक्तानामुज्जीव्यादिमन्त्रिणां मतमाकर्ण्य न सन्धिविग्रहादिपञ्चगुणान् अवलम्बते। सर्वेषां मन्त्रिणां विचारास्तु समीचीनाः एवासन्, किन्तु सर्वश्रुत्वाऽपि किं कर्तव्यविमूढो मेघवर्णः प्राचीनं स्वपितृसचिवं दीर्घदर्शनं सकलनीतिशास्त्रपारङ्गतं स्थिरजीविनं प्रणम्य प्राह तात! त्वं सकलं श्रुत्वा यदुचितं तन्मे समाज्ञापय। स्थिरजीविनोच्यते सर्वेषामेव सचिवानां मतानि नीतिशास्त्रसमंमतान्येव सन्ति परन्तु सर्वाण्येव समयापेक्ष्यानि अर्थात् सन्धिविग्रहयानासनसंश्रयानां नोपयुक्त कालोऽस्ति। साम्प्रतिके दुष्काले केवलं "द्वैधीभावः" एव समाश्रयणीयः। द्वैधीभावस्य तात्पर्यमिदं यत्कदाचित्तेन सह मैत्रीं विधाय कदाचिच्च युद्धमप्रदर्श्य तथाविधमरिमुच्छिद्येत्। नीतिशास्त्रानुसारेण स्वयमविश्वस्तोऽपि शत्रुं विश्वास्य लोभाकृष्टं कुर्वन् विजिगीषुस्तं सुखेन विनाशयितुं शक्नोति। सत्यं नीतिनिपुणविद्वांसः प्रथममुच्छेद्यमपि सपत्नं वर्धयन्त्येव पश्चाद्वर्धितं तादृशमरिं गुडवर्धितश्लेष्माणमिव सुखेनैव निपातयन्ति। उक्तञ्च-

स्त्रीणां शत्रोः कुमित्रस्य पण्यस्त्रीणां विशेषतः। यो भवेदेकभावेन न स जीवति मानवः।। 17

द्वैधिभावस्य महान् ज्ञापको महामात्यश्चाणक्यो नन्दवंशीयमहामात्यप्रधानं राक्षसं चन्द्रगुप्तस्य पक्षे कर्तुं यद्विधानं विहितवान् तथा च पश्चात् स्वकूटनीतिप्रागल्भेन स्वपक्षे आनीतवांश्च तत्सर्वं द्वैधीभावस्यैव लक्षणमासीत्। चाणक्योऽपि परस्परं गुप्तवार्ता विधाय चन्द्रगुप्तेन सह कृत्रिमसंघर्षं निर्माय शत्रून् वञ्चयित्वा राक्षसं तस्यामात्यपदे नियुक्तवान्। यदि सः कृत्रिमं द्वैधीभावं लोकसमक्षे नादर्शयिष्य तर्हि राक्षसोऽपि तस्य पक्षे न गतो भवेत्। अतः स्थिरजीवी प्राह – वत्स! समाकर्ण्य तर्हि सामाद्यतिक्रम्य यो मया पञ्चमोपायनिरुपितः। तन्मां विपक्षभूतं कृत्वाऽतिनिष्ठुरवचनैः निर्भर्त्स्य विपक्षप्रणिधानां प्रत्ययो भवति तथा समाहतरुधिरैरालिप्याऽस्यैव वटवृक्षस्याधस्तातप्रक्षिप्य मां गम्यतां पर्वतम् ऋष्यमूखं प्रति। तत्र सपरिवारस्तिष्ठ, यावद् अहं समस्तान् सपत्नान् सुप्रणीतेन विधिना विश्वास्य अभिमुखान् कृत्वा कृतार्थो ज्ञातदुर्गमध्यः दिवसे तान् अन्धतां प्राप्तान् ज्ञात्वा व्यापादयामि। ज्ञातं मया सम्यक्, नान्यथा अस्माकं सिद्धिरिति, यतो दुर्गम् एतत् अपसाररहितं केवलं वधाय भविष्यति। तत् त्वया अहं न अत्र विषये प्रतिषेधनीयः। इत्युक्त्वा तेन सह अनर्थकविवादं कर्त्तुमारब्धः। अथ अन्ये तस्य भृत्याः स्थिरजीविनम् उच्छृङ्खलवचनैः कथयन्तम् अवलोक्य तस्य वधाय उद्यता मेघवर्णेन अभिहिताः – 'अहो! निवर्त्तध्वं यूयम्, - अहमेव अस्य शत्रुपक्षपातिनो दुरात्मानः स्वयं निग्रहं करिष्यामि इत्याभिधाय तस्योपरि समारूह्य, लघुभिश्चञ्चुप्रहरैस्तं प्रहृत्य, आहतरुधिरेण प्लावयित्वा, तदुपदिष्टम् ऋष्यमूखपर्वतं सपरिवारो गतः। तदा आहतः स्थिरजीविनः अरिमर्दनमवलोक्य स मन्दं मन्दं शब्दमकरोत्। तत् श्रुत्वा ते सकला अपि उलुकाः तद्वधाय प्रजग्मुः। अथ तेनोक्तम् – 'अहो! अहं स्थिरजीवी नाम मेघवर्णस्य मन्त्री, मेघवर्णेन एव ईदृशी अवस्था नीता। तन्निवेदयत आत्मस्वाम्यग्रे तेन बहुवक्तव्यम् अस्ति। अथ तैः निवेदितः सः उलुकराजो विष्मयाविष्टस्तक्षणात् तस्य सकाशं गत्वा प्रोवाच –'भो भो! किमेतां दशां गतस्त्वम्? तत्कथ्यताम्।' स्थिरजीवी प्राह – देव! श्रूयतां मे एतदवस्थाकारणम्, अतीतदिने स दुरात्मा मेघवर्णो युष्माद्यापादितान् प्रभूतवायसान् दृष्ट्वा युष्माकम् उपरि कोपशोकग्रस्थो युद्धार्थं प्रचलित आसीत्। ततो मया अभिहितं स्वामिन् न युक्तं भवतस्तदुपरि गन्तुम्, बलवन्तः एते बलहीनाश्च वयम्, उक्तञ्च तत् तस्य उपनयनप्रदानेन सन्धिरेव युक्तः। उक्तञ्च–

बलवन्तं रिपुं दृष्ट्वा सर्वस्वमपि बुद्धिमान्। दत्त्वा हि रक्षयेत्प्राणान्रक्षितैस्तैर्धनं पुनः॥ 18

तत् श्रुत्वा तेन दुर्जनप्रकोपितेन त्वत्पक्षपातिनं माम् आशङ्कमानेन इमां दशां नीतः। तत् तव पादौ साम्प्रतं मे शरणम्, यावद् अहं प्रचलितुं शक्नोमि तावत् त्वां तस्य आवासे नीत्वा सर्ववायसक्षं विधास्यामि इति। अथ दुर्गद्वारं प्राप्य अरिमर्दनोऽब्रवीत – 'भो भोः! हितैषिणोऽस्य स्थिरजिविनो यथा समीहितं स्थानं प्रयच्छत। तच्च श्रुत्वा स्थिरजीवी अचिन्तयत् – मया तावत् एतेषां वधोपायः चिन्तनीयः स मया मध्यस्थेन न साध्यते। यतो मदीयम् इङ्गितादिकं विचारनयन्तः तेऽपि सावधानो भविष्यन्ति। तत् दुर्गद्वारम् अधिश्रितोऽभिप्रेत साधयामि इति निश्चित्य उलुकपतिमाह 'देव! युक्तमिदं यत् स्वामिनो प्रोक्तं, परमहमपि नीतिज्ञस्ते अहितश्च, यद्यपि अनुरक्तः शुचिः तथाऽपि दुर्गमध्ये आवासो नार्हः।

तत् अहमत्रैव दुर्गद्वारस्थः प्रत्यहं भवत्पादपद्मरजः पवित्रीकृततनुः सेवां करिष्यामि।' तदा प्रतिदिनमुलुकपतिसेवकाः प्रकृष्ठमांसाहारं स्थिरजीविने प्रयच्छन्ति। अथ कतिपयः एव अहोभिः मयूरः इव स बलवान् संवृत्तः। अथ स्थिरजीवी निजनीडे एकैकां वनकाष्ठिकां दुर्गप्रज्वालनार्थं प्रतिदिनं प्रक्षिपति। न च ते मूर्खाः उलुकाः विजानन्ति यत् एष कुलायम् अस्माद्दाहाय वृद्धिं नयति। अथ नीडनिर्मानच्छलेन दुर्गद्वारे कृते काष्ठनिचये, सञ्जाते सूर्योदयेऽन्धतां प्राप्तेषु उलुकेषु सत्सु स्थिरिजीवी श्रीघ्रं गत्वा मेघवर्णमाह – 'स्वामिन् ! दाहसाध्या कृता रिपुगुहा, तत् सपरिवारः समेत्यं एकैकां वनकाष्ठिकां ज्वलन्तीं गृहीत्वा गुहाद्वारेऽस्मत्कुलाय प्रक्षिप। येन सर्वे शत्रवः कुम्भीपाकनरकप्रायेण दुःखेन म्रियन्ते।' तत् श्रुत्वा प्रहृष्टो मेघवर्णमाह – तातः! कथय आत्मवृन्तान्त्यम्? चिरात् अद्य दृष्टोऽसि। स आह – 'वत्स! नायं कथनस्य कालः, यतः कदाचित् तस्य रिपोः कश्चित् प्रणिधिः मम इह आगमनं निवेदयिष्यति तद् ज्ञानात् अन्धोऽन्यत्र अपसरणं करिष्यति। तत त्वर्यताम् ! उक्तञ्च-

अमित्रं कुरुते मित्रं, मित्रं द्वेष्टि हिनस्ति च। शुभं वेत्त्यशुभं, पापं भद्रं, दैवहतो नरः॥ 19

अथ असौ तद्वचनम् आकर्ण्य सपरिजनएकैकां ज्वलन्तीं वनकाष्ठिकां चञ्चग्रेण गृहित्वा तद्गुहाद्वारं प्राप्य स्थिरजीविनीडे प्राक्षिपत्। ततः सर्वे ते दिवान्धा रक्ताक्षवाक्यनि स्मरन्तो द्वारस्य आवृतत्वात् निर्गन्तुमशक्नुवन्तः गुहामध्ये कुम्भीपाकन्यायं प्राप्ताः मृताश्च। एवं शत्रून् निःशेषतां नीत्वा भूयोऽपि मेघवर्णः तमेव वटवृक्षदुर्गं जगाम।

## उपसंहारः-

षाड्गुण्यमन्त्रस्य भारतीयदण्डनीतिशास्त्रेऽतिमहत्वपूर्णस्थानमस्ति। सन्धिविग्रहयानादयस्तु नयनाम्नोच्यन्ते किन्तु विभिन्नाऽपि परिभाषाऽस्य कृतास्ति। राजनयस्य परिभाषां कुर्वता के. एम. पणीकर महाशयेनोक्तम् – "Diplomacy is the art of forwarding one's interests in relation to other countries" अर्थात् अन्ताराष्ट्रियराजनीतौ राजनयः एका सा कलाऽस्ति यथा राष्ट्रमेकमन्यैस्सह सम्बन्धनिर्माणकाले स्वहितं सर्वोपरि मन्यते। वस्तुतो विश्वस्य राष्ट्रस्य समस्यानिराकरणाय या पद्धतिरवलम्बते तदेव राजनयः। अयं राजनयः शब्दः युनानीभाषायाः "डिप्ल्युन्" शब्दान्निर्गतः। अयमेव डिप्ल्युन् शब्दः पश्चात् Diplomacy इत्याङ्गलशब्देन परिस्कृतः। पञ्चतन्त्रे षाड्गुण्यस्य विवेचनं मुख्यतः काकोलुकीयतन्त्रे कृतमस्ति परन्तु मित्रभेदे पिङ्गलकसञ्जीवकोपाख्यानेऽपि सङ्केतो मिलति।

## पादटिप्पणी-

1. मनुसंहिता-७/१५६-१५७
2. मनुसंहिता-७/५८
3. पञ्चतन्त्रम्-३/३
4. पञ्चतन्त्रम्-७/७
5. पञ्चतन्त्रम्-३/१६
6. पञ्चतन्त्रम्-३/१८
7. पञ्चतन्त्रम्-३/१९
8. पञ्चतन्त्रम्-३/९
9. पञ्चतन्त्रम्-३/२३
10. पञ्चतन्त्रम्-३/२७
11. मनुसंहिता-७/१७०
12. पञ्चतन्त्रम्-३/४२
13. पञ्चतन्त्रम्-३/४४
14. मनुसंहिता-७/७४
15. पञ्चतन्त्रम्-३/५५
16. पञ्चतन्त्रम्- ३/४९
17. पञ्चतन्त्रम्-३/६२.
18. पञ्चतन्त्रम्-३/१२७
19. पञ्चतन्त्रम्-३/२१८

## सहायकग्रन्थसूची

1. विष्णुशर्मा, पञ्चतन्त्रम्, सम्पादकः-डा.सुधाकरमालव्य, कृष्णदासअकादेमी, गोपालमन्दिरलैन वाराणसीय,२२१००१.
2. नारायणशर्मा, हितोपदेशः, सम्पादकः- डा.सुधाकरमालव्य, कृष्णदासअकादेमी, गोपालमन्दिर लैन् वाराणसी, २२१००१.
3. आचार्यमनुः, मनुस्मृतिः, सम्पादकः–डा.अनिलचन्द्र वसु, संस्कृत बुक डिपो२८/१, विधान सरणी,कलिकाता-७००००६.
4. महाकवि माघः, शिशुपालवधम्, सम्पादकः-श्री सत्यनारायण चक्रवर्ती, संस्कृत पुस्तक भाण्डार ३८,विधान सरणी, कलकाता-
5. आचार्यकौटिल्यः, कौटिलीय अर्थशास्त्रम्, सम्पादकः-डःअनिलचन्द्र वसु, संस्कृत बुक डिपो२८/१, विधान सरणी, कलकाता-
6. भतृहरिः, नीतिशतकम्, सम्पादकः-राजेश्वरप्रसादमिश्रः, अक्षयवटप्रकाशन, इलाहा-वाद-२०१२.
7. शुक्राचार्यः, शुक्रनीतिसारः, सम्पादकः-जगदीश चन्द्र मिश्रः, चौखम्वा सुरभारतीप्र-काशन,वाराणसी-२०१२.
8. महाभारत-गीताप्रेस, गोरखपुर-२०१४.

Volume XXI : January to June – 2023, ISSN 2250-1711
Journal of Veda Samskrita Academy [Recognised in the UGC-CARE List]

# साहित्याकादमीपुरस्कारप्राप्तेषु असमीयोपन्यासेषु संस्कृतवाङ्मयस्य प्रभावः : एकमध्ययनम्

**Loopamudra Goswami**
Research Scholar
Kumar Bhaskar Varma Sanskrit and Ancient Studies University
P.O.: Hati Namati- 781337, Nalbari, Assam
Contact No. : 7896748106
E-mail : loopamudragoswami03@gmail.com

**सारांशः -** साहित्याकादमीपुरस्कारः भारतवर्षे साहित्यिकेभ्यः प्रदत्तमानेष्वन्यतमःसाहित्यिकसम्मानोऽस्ति । अयं सम्मानः भारतवर्षस्य चतुर्विंशतिभाषासु प्रदीयते , तेषु असमीयाभाषा अपि एका भाषा अस्ति , यत्र१९५५ तमवर्षात् २०२१ वर्षपर्यन्तं भिन्नाः साहित्यपण्डिताः अनेन सम्मानेन सम्मानिताः जाताः । असमीयाभाषायामयं सम्मानः पद्य-उपन्यास-लोकसाहित्याध्ययन-साहित्यिकसमालोचना-आत्मजीवनी-गद्य-निबन्ध-लघुकथादि-कोटिषु प्रदीयते । तासु कोटिषु असमीयाभाषोपन्यासवर्गेषु अधुनापर्यन्तं विंशतिः विद्वांसः विदुष्यश्च अकादमीपुरस्कारेण विभूषिताः सन्ति । पुरस्कृतेषूपन्यासेषु यदि वयमन्वेषयामः तर्हि तत्र प्रायशः चतुर्षु उपन्यासेषु संस्कृतवाङ्मयस्य प्रभावः परिलक्ष्यते। एषूपन्यासेषु चरित्राणां नामसु , ग्रन्थस्य नामकरणेषु , घटनाया उपस्थापनशैलीषु कथं रामायण-महाभारतादि - इतिहासग्रन्थानां संस्कृतवाङ्मयस्य च प्रभावः दृश्यते तदेव अस्मिन् शोधपत्रे अध्ययनमिष्यते ।

**कूटशब्दाः** - साहित्याकादमी ,असमीयासाहित्यम् , साहित्यपण्डिताः , उपन्यासः

**शोधपत्रस्य क्षेत्रं प्रासंगिकताश्च-** असमीयासाहित्ये वङ्ग - संस्कृत - हिन्दी - उर्दुसाहित्यानां प्रभावः प्रायः परिलक्ष्यते । संस्कृतसाहित्यस्य प्रभावः असमीयाजनजीवने नीरक्षीरन्यायवत् विस्तृतो वर्तते । असमीयासाहित्ये कथा - उपन्यास - संगीत - नाटकादिषु संस्कृतस्य प्रभावः विशेषतः लभ्यते । संस्कृतमाधारीकृत्य विरचितेषु उपन्यासेषु संस्कृतस्य प्रभावः , लेखकस्य स्वकीयसंयोजनादेः वैशिष्ट्यम् इत्यादि अत्र मया विचार्यते । अस्मात् असमप्रदेशस्य अमूल्यसाहित्यकोशैः सह परिचयो भवति । विस्तारभयाद् अत्र केवलं लब्धसाहित्याकादमीपुरस्कारासमीयोपन्यासेष्वेव संस्कृतस्य प्रभावः कीदृशः लभ्यते तदालोच्यते ।

**शोधप्रश्नाः -**

१. असमीयासाहित्ये संस्कृतस्य प्रभावः कीदृशः अस्ति?

२. किमर्थं प्रायशः आधुनिकलेखकैः संस्कृतमुपजीव्यत्वेन ग्रहणमक्रियत?

३. उपन्यासेषु असमीयाकवीनां मौलिकत्वं कीदृशम् अस्ति?

**शोधप्रविधिः -** शोधकार्यमिदं मौलिकशोधप्रविधिना प्रवर्तिष्यति । अत्र असमीयोपन्यासानामध्ययनसमये वर्णनात्मकविश्लेषणात्मक तुलनात्मकपद्धतीराधारीक्रियते । उपलब्धप्राथमिकद्वितीयस्रोतसामाधारेण कार्यमिदं सम्पादिष्यते । प्राथमिकस्रोतस्तु ग्रन्थचतुष्टयेन साधितं भविष्यति । द्वितीयकस्रोतांसि च सहायकसंस्कृतासमीयाःग्रन्थाः , अन्तर्जालीयस्रोतांसि च भविष्यन्ति ।

**प्राक्कथनम् -** असमीयासाहित्यस्य इतिहासः प्राचीनतमः अस्ति । प्रायशः ८-१२शतशतिकायां विरचितानि चर्यापदानि असमीया-साहित्यस्य प्रथमलिखितसाहित्यरूपेण परिगण्यन्ते । एतानि गीतानि बौद्धधर्मस्य नीतिनिबद्धानि आसन् । परन्तु एतेषां चर्यापदानां भाषा सम्पूर्णरूपेण असमीया नासीत् । तत्र वाङ्ला - मैथिली - उरिया - मणिपुरी -आदि -लिप्याणामपि प्रयोगचिन्हानि पण्डिताः चिह्नितवन्तः । तत्र पण्डितानां मतानैक्यं दरीदृश्यते । अतएव चर्यापदानाम् अनन्तरं १४ शतिकायां हेमसरस्वतीदेवेन लिखितः 'प्रह्लाद-चरितम्' ग्रन्थएव पूर्णांगासमीयालिखितसाहित्यरूपेण अभिधीयते । तस्यां शतिकायामेव माधवकन्दलिना 'वाल्मीकिरामायणम्' असमीयाभाषायाम् अनुदितम् । रुद्रकन्दलि -दुर्गावर-मनकर-पीताम्बरादि प्राक्शङ्करीयुगस्य साहित्यिकाः आसन् । तत्पश्चाद् महापुरुष शंकरदेव-माधवदेवादि - वैष्णवगुरुजनाः रामायण-महाभारतादिसाहित्यमाश्रित्य नैकाः ग्रन्थाः अरचयन् ।

शंकरोत्तरयुगे असमराज्ये आहोमराज्ञः शासनमासीत् । तस्मिन्काले इतिहाससाहित्य - ज्योतिष - चिकित्सा - गणित - संगीतादिकलानां चर्चा आसीत् । परन्तु व्यवहारिकविषयनिबद्धेषु ग्रन्थेष्वपि संस्कृतवाङ्मयस्य वैशिष्ट्यानि परिदृश्यन्ते । ततः रमन्यासकालीनयुगेऽपि संस्कृतस्य प्रभावः आसीत् परन्तु तदा आंगलसाहित्यस्य प्रभावः आधिक्यः आसीत् । अत्र विषयवस्तुनि संस्कृतमाधारीकृत्य विस्तृतानि नासन् अपि तु भाषायां पाश्चात्याधुनिकशब्दैः सह संस्कृतस्य प्रभावः आसीत् । द्वितीयविश्वयुद्धस्य उत्तरकालादेव प्रारभ्य - आधुनिकसाहित्यस्य समयः यत्रआंगिक - भाव - भाषायाः महत्विवर्तनंदृश्यते । अत्र प्राच्य-पाश्चात्योभयोः मिश्रणशैली दृश्यते । एवम् असमीयासाहित्यं चर्यापदयुग - वैष्णवयुग - प्राक्शङ्करीयुग - शङ्करयुग - रमन्यासयुग - आधुनिकयुगादि - विभागेषु विभज्यते।

**असमीयोपन्याससाहित्यम् -** असमीयासाहित्ये उपन्यासधारा प्रारभ्यते रमन्यासयुगे रजनीकान्तबरदलैदेवस्य 'मिरिजीयरी' इति उपन्यासेनविंशतिशतिकायाम्। तत्पश्चादपि कुसुमकुमारी - मनोमती - भकत - रहदै - लिगिरी - सेउजी पातर काहिनी - चाकनैया - असीमत जार हेराल सीमा - मृत्युञ्जयादयः नैकाः उपन्यासाः सृष्टवन्तः ये ग्रन्थाः राष्ट्रिय - आन्तर्जातिकपुरस्कारैः सम्मानिताः जाताः । तेषु साहित्याकादमीपुरस्कारेणापि कतिपयाः उपन्यासाः पुरस्कृताः जाताः । ते यथा सर्वप्रथमसाहित्याकादमी पुरस्कृतोपन्यासोऽस्ति

१. ईयारूइङ्गम- १९६१वर्ष - वीरेन्द्रकुमारभट्टाचार्यः

तत्पश्चात्क्रमेण -

२. अघरी आत्मार काहिनी - १९७२वर्ष - चयदाब्दुलमालिकः

३. ककादेउतारहाड - १९७५वर्ष - नवकान्तबरूवा

४. पितापुत्र - १९७८वर्ष - होमेनबरगोहाँइ

५. मामरे धरा तरोवाल आरु दुखन उपन्यास - १९८२वर्ष - मामणिरयचमगोस्वामी

६. जङ्गम - १९८४वर्ष - देवेन्द्रनाथाचार्यः

७. पातालभैरबी - १९८८वर्ष - लक्ष्मीनन्दनबरा

८. महारथी - १९९५वर्ष - चन्द्रप्रसादशईकीया

९. अभियात्री - १९९६वर्ष - निरुपमाबरगोहाई

१०. आशीर्वादर रङ् - १९९८वर्ष - अरुणशर्मा

११. विपन्नसमयः - १९९९वर्ष - मेदिनीचौधुरी

१२. एधानि माहिर हाॅहि - २००१वर्ष - महिमबरा

१३. मौन ओठ मुखर हृदय - २००५वर्ष - येशेदर्जिठंचिः

१४. शाकुन्तलनन्दनम् २००७वर्ष - पुरवीबरमुदै

१५. देओलाङ्खुइ २००८वर्ष - रीताचौधुरी

१६. कथारत्नाकर २००९वर्ष ध्रुवज्योतिबरा

१७. पाटकाइर इपारे मोर देश २०१२वर्ष - चन्दनागोस्वामी

१८. मरियाहोला २०१७वर्ष - जयन्तमाधवबरा

१९. चानक्य २०१९वर्ष - जयश्रीगोस्वामीमहन्तः

२०. इयात एखन अरण्य आछिल २०२१वर्ष - अनुरधाशर्मापूजारी

एतेषु उपन्यासेषु केवलं ग्रन्थचतुष्टये एव संस्कृतवाङ्मयस्य प्रभावः परिदृश्यते । अन्ये उपन्यासाः इतिहास - आत्माभिज्ञता - जनजातिजीवन - भ्रष्टाचारादिघटनाकेन्द्रितमस्ति । संस्कृतक्षेत्रसम्बद्धाः उपन्यासाः यथा - महारथी - शाकुन्तलनन्दन - कथारत्नाकर - चानक्यग्रन्थाः ।

**महारथी -** चन्द्रप्रसादशइकीयादेवेन रचितः अयमुपन्यासः असमीयासाहित्यजगतः अमूल्यरचना अस्ति । चन्द्रप्रसादशइकीयादेवः जुलाईमासस्य १९२७खीष्टाब्देअजायत । सः स्वकीयरचनाभिः असमीयासाहित्यभण्डारं समृद्धमकरोत् । तस्य प्रसिद्धाः रचनाः यथा - एदिन - मेघमल्लार - उत्तरकाल - सूर्यस्नान - मन्दाक्रान्ता - जन्मान्तर - महारथी - तोंरे मोरे आलोकरे यात्रा - मायामृग - नाचपति फूल - चक्रवात - अंगीकार - चन्द्रप्रसादशइकीयार निर्वाचितगल्प - दृष्टिकोण - निर्वाचितसम्पादकीय - आमेरिकार चिठि - इत्यादयः । शइकीयादेवस्य महारथी-नामके ग्रन्थे सः महाभारतमाश्रित्य कर्णचरित्रं वर्णयति । महतः रथसदृशजीवनस्य सः एव सारथिः आसीत् यतोहि कर्णः स्वस्य मृत्युः निश्चितः इति ज्ञातः सनपि युद्धे प्रवृत्तःअभूत् । अतएव ग्रन्थस्य नाम महारथी इति अभिधीयते । अत्र लेखकेन कर्णस्य मनोस्तात्त्विकावस्थायाः सुष्ठुवर्णनं कृतम् । कर्णचरित्रविश्लेषणावसरे लेखकः अनाथशिशोः मनोवस्थासरसतया प्रतिपादितम् । तथा च माताकुन्ती यदा तस्य समीपे अर्जुनजीवनम् अयाचयत तस्यां विकटावस्थायामपि कर्णचरित्रम् अति सुदृढतया धीरोदात्तस्वरूपं वर्णितम् अनेन - 'मोर अन्तरत करुणार सृष्टि हैछिल । किन्तु मोर चित्त विगलित होवा नाछिल ।'[1] उपन्यासेऽस्मिन् कर्णचरित्रं सम्यक्तया उपलक्षितम् अतः अस्मिन्प्रसंगे कुन्त्याः चरित्रं किञ्चिद् निकृष्टं जातम् । उत दार्शनिकपक्षतः अपि ग्रन्थस्य माहात्म्यं वर्तते । अत्र वर्णितभूमाख्यातत्त्वेन कथं मानवाः दोषान् अपघाताय भूपृष्ठतः उपरि उत्थाय भूमाख्यतत्त्वं प्राप्स्यति तस्य सूत्रं सूत्रितम् । जीवनदर्शनं - गीतायाः कर्मयोगस्य विश्लेषणं ग्रन्थे प्रायशः सर्वत्र दृश्यते । एवं भाषा - विषयवस्तूपस्थापनादि - सर्वान् परिशील्य श्रेष्ठतमा कृतिः इयम् इति उद्घोषयितुं शक्यते ।

**कथारत्नाकर -** कथारत्नाकर इति ग्रन्थः डा० ध्रुवज्योतिबरामहोदयेन विरचितम् । महोदयस्य जन्म मेघालयराज्ये १९५५ खीष्टाब्दे नवेम्बरमासस्य २७दिनांके अभवत् ।सः यद्यपि वृत्तौ चिकित्सकः आसीत् , तस्य औपन्यासिकरूपेनापि प्रसिद्धिः आसीत् । तेन द्वितीयविश्वयुद्ध - रुछ महाविप्लव -इत्यादि - ऐतिहासिकनिबन्धाः , भोक - लोहा - यात्रिक आरु अन्यान्य -कालान्तरर गद्य - तेजर आन्धार - अर्थ - कथारत्नाकरादि - उपन्यासाः विरचिताः । कथारत्नाकर इति ग्रन्थस्य कृते २००९ खीष्टाब्दे सः साहित्याकादमी पुरस्कारः प्राप्यते । ग्रन्थोऽयं रामायणप्रणेतृवाल्मीकिमुनेः चरित्रमाधारीकृत्य वर्तते । अत्र ग्रन्थकारेण आरम्भे कृत्तिवासरामायणे चित्रितवाल्मीकिचरित्रं स्थानीयलोकभाषायां संक्षेपेनोक्तं कथं वाल्मीकिमुनिः रत्नाकरदानवतः रामनामजपेन वाल्मीकिमुनिः इति आख्यायते । परन्तु आधुनिककाले समस्याः अपि जटिलाः भवन्ति अतएव प्राचीनकथा कथं लेखकेन नवीनशैल्या उपस्थाप्यते तस्य सूचना प्राङ्मुखे अनेन सूत्रितम् - 'भात नाखलि मानुहे भाल चिन्ता भाल काम करबो केन्केहे'[2] इति । अर्थात् पुराकाले जीवनस्य या परिभाषा आसीत् सा स्थितिः तु आधुनिककाले समायोजिता न भवति । स्वाधीनोत्तराधुनिककाले भगवच्चिन्तया सह भोजनव्यवस्था अपि साधकानां कृते महती समस्या वर्तते । इतोऽपि वर्णव्यवस्थायाः दुरुपयोगे साधारणजनानां जीवनंदुरूहमकरोत् । अत्र स्वाधीनतोत्तरकालस्य असमीयासमाजव्यवस्थायाः सजीवचित्रणमस्ति । अत्र कैवर्त्तवर्णानां स्थितिवर्णनसमये वर्णव्यवस्थातः जातामइनानाम्नः बालकस्य मनोस्तात्त्विकवर्णनमकरोत् । शिक्षकेन केवलं कैवर्त्तछात्रानेव ताडयनकार्यतः , विवाहानुष्ठाने मइनायाः मित्रगृहे समाजात् दूरे उपवेशनस्य व्यवस्था इत्यादि-आचरणानि मइनायाः शिशुमनसि गम्भीराङ्कनमकरोत् । मइनायाः असमाप्तशिक्षणस्यापि दोषी वर्णव्यवस्था एव आसीत् । समाजस्य कटुवचनात् विरक्तः सः साधुकार्यं प्रति उद्यतः सनपि भाग्यः तस्य साहाय्यं नाकरोत् । एवं सः अन्तिमे दुष्कार्ये संलग्नः अभवत् जीविकानिर्वहाय । परन्तु तस्य प्रारम्भतः चेष्टा आसीत् कथं सः स्वजातिं सममर्यदादातुं समर्थो भविष्यति इति । घटनायाः अन्तिमे सः असत्कार्ये संलग्नाः सनपि सपुत्रान् उच्चशिक्षायाः प्रकाशं अददात् । एवं शिक्षाप्रभावात् तस्य ग्रामस्य दशा उन्नता जाता सः अपि जीवनस्य कल्मषं मोचयितुं धर्म -कर्मसु मतिः अददात्

अन्तिमे। तस्य मनस्स्थिति - परिवर्तने महात्मागान्धी - शंकरदेव - माधवदेवादिगुरुणां परोक्षप्रभावः दर्शयति लेखकः। मध्ये मध्ये लेखकः ग्रहगजेन्द्र - महाभारतादेः प्रसंगाद्यपि तन्मुखात् उच्चार्यते । वस्तुतः कविः धर्मस्य प्रयोजनीयता कानि इति मादकद्रव्यसेवनस्य विरोधिता , सर्ववर्णानां समाधिकारादि - जटिलसमस्याः उपस्थापनं तथा तस्य समाधानम् अनेन ग्रन्थेन क्रियते । रत्नाकरवत् अत्रापि मइना इति चरित्रेण प्राचीनसमयव्यवस्थायाः विवर्तनं कविना चित्रितम् । ग्रन्थस्य कथासूत्रं यद्यपि प्राचीनेति-हासाद् स्वीकरोति लेखकः तथापि उपन्यासविषयवस्तुवर्णने असमीयासमाजजीवनांकने लेखकस्य मौलिकी प्रतिभा दरीदृश्यते ।

**चाणक्य** - ग्रन्थोऽयं जयश्रीगोस्वामीमहोदयया विरचितम् । राजनीतिज्ञा - लेखिका - शिक्षानीतिज्ञा - महोदयायाः जन्म १९६०ख्रीष्टाब्दे जानवारीमासस्य प्रथमदिनांके अभवत् । तया प्रायशः चत्वारिंशत् ग्रन्थाः विरचिताः । तेषु केचन यथा - चेमनीयार विश्व साहित्य (खण्ड १२३) - विश्वर श्रेष्ठ साधु (खण्ड १२ ) - अन्य एक रत्नाकर (असमीया - वांलाभाषयोः) - उवलि योवा चादर - मोर डायेरी - एकुकि धेमेलीया साधु - सात वाओनार साधु - परीर साधु शुनिबा - नतुन साधु मजार साधु - साधु शुनो साधु खाइ कठालर बादु - मेटमरा साधुर बोजा शुनो आहा केने मजा - परीये गोवा गीत नुशुनिबा - आनिछो साधुर रेल दीघे लेलपेल - पेराभराइ साधु आनिछो शुना मने मने - एनेकुवा साधु शुनिछा - ढें कुरुच - आमार डायेरी - महाकवि - गान्धारी - चाणक्यादयः ।

भारतीयेतिहासे चाणक्यस्य जीवनचरितविषये न्यूनतथ्याः एव प्राप्यन्ते । सः कथंमगधदेशस्य प्रधानामात्यपदम् अलङ्करोति , किमर्थं तेन चन्द्रगुप्तः राजसिंहासने अधिष्ठितः , तस्मिन्समये मगधराज्यस्य परिस्थिति कीदृशी आसीत् इत्यादि विषयास्तु तस्य जीवनसंग्रामवर्णनात् वयं ज्ञातुं शक्नुमः । परन्तु इतिहासे तस्य जीवनेन सह परिचयः न जायते । केवलं चाणक्यस्य रचनानां चर्चा एव सर्वत्र समालोचिता । एषा औपन्यासिका इतिहासे यत्र तत्र प्राप्ततथ्यान् समाहृत्य स्वकल्पनया कुत्रचित् प्रामाणिकतथ्येन कौटिल्यस्य जीवनचरितं विरचयति । लेखनवेलायां सा राधाकृष्णनपिल्लाइमहोदयस्य 'Corporate Chanakya' , ड०राघवनमहोदयस्य 'Kautilya and Kalidasa' , ड० आर.के.मुखार्जीदेवस्य 'The Foundation OF The Mauryan Empire' - इत्यादि ग्रन्थविषयान् विश्लेष्य कौटिल्यचरित्रं हृदि निधाय मौलिकजीवनचरितमिदम् उपस्थाप्यते । ग्रन्थस्य प्रारम्भे धनानन्देन तस्य पितुः हननकार्यात् कथं शिशुमनसि प्रतिशोधाग्निः उत्पादितः पुनः सम्पूर्णजीवनं तस्य कथं पितृहननप्रतिशोधे व्यतीतं कथं सः पश्चाद् दुःखग्रष्टप्रजां राजाधनानन्दशासनात् विमुक्तयति तस्य रुचिकरवर्णनं लेखिकया क्रियते । समान्तरालभावेन प्राचीनभारतवर्षस्य भौगलिक - ऐतिहासिकमानचित्रम् अनेन प्राप्यते । उपन्यासस्य कथावस्तुविवरणे लेखिकया प्रायः नीतिश्लोकानाम् उद्धरणं प्रदीयते यथा पिता -पुत्रसंवादावसरे उद्धर्यते -

वरं न राजा न कुराजा राजा वरं न मित्रं न कुमित्र मित्रं
वरं न शिष्यो न कुशिष्य शिष्यः वरं न दारा न कुदारा दारा ।[3]

तथा हि -

दृष्टिपुतं न्यसेत्पादं वस्त्रपुतं पिबेज्जलम् । सत्यपूतां वदेद्वाचं मनःपूतं समाचरेत् ।।[4]

एवं पितृशोके म्रियमानः सः बालकः चाणक्यः गीताश्लोकेन स्वमनः अवबोधयत्येवम् -

जातस्य हि ध्रुवोर्मृत्युः ध्रुवं जन्म मृतस्य च ।[5]

एवं लेखिकया चाणक्यनीतिश्लोकमणिभिः तथा सुभाषितश्लोकैः चाणक्यजीवनमालां गुन्थितम् । प्रारम्भे लेखिकया चाणक्यस्य भिन्ननामानामुल्लेखः तथा छद्मवेशग्रहणात् नैकप्रतिभावशाच्च इतिहासे तस्य बहुनामानां चर्चाः प्रचलन्ति एवमपिउल्लेखयति। एवं ग्रन्थस्य प्रारम्भतः समाप्तपर्यन्तं रचिकायाः प्रतिभायाः ज्ञानानुसन्धिमनसः सम्भेदं प्राप्यते ।

**शान्तनुकुलनन्दन** - उपन्यासोऽयं पुरवीबरमुदैमहोदयया प्रणीतम् । सुश्रीपुरवीबरमुदैदेव्याः जन्म अभवत् मईमासस्य १९५०ख्रीष्टाब्दे । सा शिक्षिकात्वेन कार्यारम्भनम् अकरोत् परन्तु पश्चाद् तं परित्यज्य ऐकान्तिकभावेन ग्रन्थप्रणयने संलग्ना आसीत् ।

तस्याः कृतयः सन्ति - गजराज प्रेम आरु बन्दीत्व - शान्तनुनन्दनम् - आलिवाटर कथा - परमपूजनीय आरु दुखन उपन्यास - रूपोवाली नै सोनोवाली घाट - बाघशाल बाघजाल आरु मानुह - शीतर कुवली - हेरुवाजनक बिचारि आरु अन्यान्य गल्प - अवशेषत वरषुण - पुरवी बरदलैर निर्वाचित गल्प (खण्ड १२३) इत्यादयः । तेषु 'शान्तनुकुलनन्दन' अस्मिन् ग्रन्थे लेखिकया गङ्गोत्पत्ति - प्राचीनकामरूप - ब्रह्मपुत्रनद्योत्पत्ति - नामकरण- प्रसंगानुसारं ब्रह्मपुत्रोपत्यकायाः जाति -जनगोष्ठी - सांस्कृतिक - राजनैतिक - धर्मीयसमन्वयादिनाम् अङ्कनमकरोत् । पुनः शैक्षिक - भौगलिकोत्थान -पतनादिभिश्च चीनपरिब्राजकानां कामरूपभ्रमणं कामरूपनरेशकुमारभास्करवर्मनः विद्यायाः प्रति रुचिः इत्यादेः सजीवचित्रणम् अनेन ग्रन्थेन लभ्यते । इतोऽपि गंगोत्पत्तिवर्णने ब्रह्मपुत्रनद्योत्पत्तिवर्णने च तस्य तीरे स्थित - भार्गवादिमुनीनां कथा वर्णिता । एवम् ऐतिहासिकोपन्यासेऽस्मिन् संस्कृतेतिहासोल्लेखिततथ्यानां भौगलिकासमप्रान्तदिशा वर्णनमुपलभ्यते ।

**उपसंहारः -** असमीयासाहित्यं भाषा च संस्कृतस्यैव दानम् । असमीयाजनजीवने संस्कृतेतिहासादि - ग्रन्थानां महती भूमिका दृश्यते । जन्मोत्सवे गीयमानगीतादारभ्य मृतकसंस्कारादौ परिवेशितगीतपर्यन्तं सर्वत्र संस्कृतसमुद्भवकथानां संस्कृतिनां समादरः दृष्टः । संस्कृतं तथा तस्य संस्कृतिः असमीयालोकसाहित्यस्य अविच्छेद्याङ्गो वर्तते । परन्तु एषा संस्कृतसम्भूयरचना धारा मध्येब्रीटिशागमनात्स्वाधीनोत्तरकियत्कालपर्यन्तं मन्दगतिलब्धा जाता । तस्मिन् समये लेखकाः पाश्चात्य - वङ्ग - हिन्दी - उर्दु - आदि - भाषाणां विषयवस्तूपरि चर्चां प्रायशः कृतवन्तः । तस्मिन् समये पाश्चात्यनुकरणेन उपन्यासानां रचना अभवत् असमराज्ये । परन्तु उत्तराधुनिककाले पुनः पारम्परिकविषयाणां नवीनसाधनेनोपस्थापनं दृश्यते । एषा प्राचीनस्य नवीकरणधारा एव उपन्यासेषु चित्रिता । यत्र मानवजीवनस्य विवर्तनं, आधुनिकसमस्यानां प्राचीनपरिसरे समालोचनादि - विषयाः आधुनिकशैलीना विचारिताः। पुनः ग्रन्थाः अपि शोधपत्रवत् सूक्ष्मातिसूक्ष्मनिरीक्षणपूर्विकाः सन्ति । यस्मात् सहृदयानां रसास्वादनमपि जायन्ते उत आधुनिकजिज्ञासानामपि पूर्तिः जायते । अतएव पुराणां नवीनोपस्थापनैषा रीतिः पाठकेषु समादृता । नीतिशिक्षायाः महत्त्वदिशा अपि एतेषां ग्रन्थानां आवश्यकत्वं सिद्धम् ।

**पादटिप्पणी-**

1. महारथी,पृ०८ । 2. कथारत्नाकर,प्राक्कथनम् । **3. चाणक्य,पृ०४०** । 4. तत्रैव,पृ०२६ । 5. तत्रैव,पृ०५


**ग्रन्थसन्दर्भः -**

**प्राथमिकस्त्रोतांसि -**

१ . बरमुदैपूरवी. २०१८. शान्तनुकुलनन्दन,वनलताप्रकाशन

२ . बरा ड० ध्रुवज्योति. २००७. कथारत्नाकर,अन्वेषा प्रकाशन

३ . महन्तगोस्वामीजयश्री. २०१९. चाणक्य,चन्द्रप्रकाश

४ . शइकीयाचन्द्रप्रसाद्. २००२. महारथी,वनलता प्रकाशन

**द्वितीयकस्त्रोतांसि -**

१ . महन्तगोस्वामीजयश्री. २०१८. गान्धारी,चन्द्रप्रकाश

२ . छान्दोग्योपनिषद्,गीताप्रेस

**आन्तर्जालीयस्त्रोतांसि -**

- https://en.wikipedia.org/wiki/List_of_Sahitya_Akademi_Award_winners_for_Assamese
- https://en.wikipedia.org/wiki/Chandra_Prasad_Saikia


***********

Volume XXI : January to June – 2023, ISSN 2250-1711
Journal of Veda Samskrita Academy [Recognised in the UGC-CARE List]

# वर्तमानसमाजे अक्षसूक्तगतनैतिकप्रासङ्गिकता

**Habal Ruidas**
Ph. D. Scholar, Department of Sanskrit
Jadavpur University, Jadavpur, Kolkata, West Bengal- 700032
Contact No. : 9679974832
E-mail : habalruidas2019@gmail.com

## भूमिका

ऋग्वेदसंहिता भवति ऋग्मन्त्राणां संकलनम्। मन्त्राणां समष्टिः खलु सूक्तम्। सूक्तेष्वेतेषु साधारणतया देवतायाः आराधनं स्वरूपवर्णनंस्तुतिश्च प्राप्यते। तेषु कतिपयेषु विशेषवृत्तान्तानां सुस्पष्टा धारणा प्राप्यते। यथा- अक्षसूक्तं संज्ञानसूक्तं पुरूरवा-उर्वशीसंवादसूक्तश्चेति। उक्तसूक्तानां मध्ये अक्षसूक्तेन ऋषयः स्वेषां जीवनोपलब्धिं कृत्वा अस्मान् अमूल्यान् नैतिकोपदेशान् दत्तवन्तः। तदुपदेशाः अस्मिन् समयेऽपि प्राग्वत् उपयुक्ताः। तदेव प्रबन्धेऽस्मिन् आलोचयिष्यते।

## अक्षसूक्तगतनैतिकप्रासङ्गिकता

ऋग्वेदस्य नीतिप्रतिपादकसूक्तेषु अत्यन्तं प्रसिद्धं तथा सर्वजनविदितं सूक्तं हि अक्षसूक्तम्। सूक्तस्यास्य ऋषि भवति इलुषपुत्रः कवषः मुजवान्पुत्रः अक्षः वेति।सूक्तस्यास्य सप्तममन्त्रस्य छन्दः जगति, अवशिष्टानान्तु त्रिष्टुप्। सूक्तेऽस्मिन् चतुर्दशभिः मन्त्रभिः अक्षक्रीडासक्तैकस्य जीवनदर्शनं सम्यगुपवर्णितम्। तद्यूतासक्तव्यक्तिः केन प्रकारेण आत्मीयपरिवारद्वारा परित्यक्तोऽपि द्यूतक्रीडासक्तिं न तत्याज तत्रैव वास्तवचित्रमत्र प्रतिफलितम्।

पुरा सर्वजनप्रसिद्धेषु क्रीडासु अक्षक्रीडा आसीत् अन्यतमा। यद्यपि अक्षक्रीडा अहितकर इति विवेच्यते तथापि विभीदकवृक्षजः अक्षः यदा आस्फारे निपतितः तदा अक्षक्रीडानुरक्तानां मनांसि सोमपानमिव आनन्दं सञ्जायते। अतः अक्षक्रीडानुरक्तानाम् अक्षं प्रति आकर्षणं सोमपानेन तुल्यम्। तथाहि आम्नातम् - "सोमस्येव मौजवतस्य भक्षो विभीदको जागृविर्मह्यमच्चान्" इति।[1] तस्मिन् समये सोमरसः पानीयत्वेन व्यवहृयते इत्यस्मात् मन्त्रांशात् ज्ञायते। तदानीन्तनसमाजेऽपि कुलटानां स्वैरणीनारीणाञ्च अस्तित्वं समुपलभ्यते। परिवारादिभिः परित्यज्य यदा कितवः हृतसर्वस्व अभवत् तदा स संकल्पितवान् यत् - पुनरपि अक्षक्रीडां न क्रीडिष्यामि। परन्तु कामासक्तानारी यथा प्रेमिकेन मिलितुं पूर्वनिर्दिष्टे संकेतस्थाने गच्छति तद्वत् कितवोऽपि अक्षक्रीडया आत्मविस्मृतं भूत्वा यथास्थाने उपोस्थितो भवति। एवं चिन्तयति यत् अधुना जयलाभः तस्य सुनिश्चितः। परन्तु वभ्रुवर्णा अक्षाः त्वं निरासं कुर्वन्ति। ऋणपरिशोधेऽसमर्थः सर्वस्मात् भीतःकितवः चौर्यकर्मणा धनलाभेच्छुः भूत्वा नक्तं परगृहगमनं करोति। अस्मात् एतद् ज्ञायते यत्तदा यथा ऋणदानमासीत् तद्वत् चौर्यवृत्तिरपि आसीत्। तदा परश्रीकातरताऽपि आसीत् वर्तमाना, यतः कितवाः अन्येषां सुसज्जितान् गृहान् दृष्ट्वा अनुतप्ताः भवन्ति स्म। अक्षस्य प्रभावोऽपरिसीम आसीत् यतः राजानः अपि अक्षसमीपे नतिस्वीकारं कुर्वन्ति। अन्तिमे कितवस्य चैतन्योदयोभवति तथा च तेन उपलभ्यते यत् अक्षक्रीडा अकल्याणकारिणी चित्तविनाशकारिणी च। तदर्थं तेन स्वान्अन्यान् प्रति वा उच्चारिता सतर्कवाणी-

अक्षैर्मा दीव्यः कृषिमित् कृषस्ववित्ते रमस्व वहु मन्यमानः। तत्र गावः कितव तत्र जायातन्मे विचष्टे सवितायमर्षः॥[2]

अतः द्यूतक्रीडां त्यक्त्वा कृषिकर्मणि मनोनिवेशंकुरु तेनैव जीवनम् आनन्दमयं सुखमयञ्च भविष्यति। यतः कृषिप्रधानम् अयं देशः तदर्थं कृषिकर्मणे जीविकानिर्वाहः करणीयः। कितवः आत्मानं कृषिकर्मणि नियोज्य उपार्जनं कर्तुमिच्छसि। द्यूतक्रीडाया- मुपार्जितोऽर्थः कृषिपशुपाल्यापेक्षया बहुगुणाः अनायसलभ्यश्च, परन्तु अर्थोऽयं मनुष्यान् सुखप्रदाने असमर्थः।

तत्फलतया मनुष्या: लोभातुराः स्वार्थपराः विच्युताश्च भवन्ति। स्वल्पोऽपि कृषिकर्मणि उपार्जितोऽर्थः सन्तुष्टिप्रदाने क्षमः। तेनैव स्वाच्छन्देन जीवनयापनं करणीयम् एतदेव आसीत् कितवस्याभिप्रायः। अनेन उपलब्धुं शक्यते यत् तस्मिन् समयेऽपि यथा कृषिकार्यः आसीत् अत्यन्त आदरणीयः तद्वत् सममपि द्यूतक्रीडा अत्यन्त निन्दनीयः। असत् पथमवलम्ब्य उपार्जितोऽर्थः आसीत् निन्दनीय एव।

पुरा द्यूतक्रीडा अभूत आमोदय। अयं क्रीडा यथा मनुष्यान् निमेषमध्ये बहुधनं दातुं शक्यते तथैव सर्वं स्वीकृत्य निःस्वकर्तुमपि शक्नोति। तादृशक्रीडाव्यसनेन निर्धनत्वस्य प्रकरणं न केवलं वैदिककाले सीमितमासीत् परन्तु अद्यत्वेपि तच्चित्रं दरीदृश्यते। द्यूतक्रीडासक्तस्य युधिष्ठिरस्य नलस्य वा परिणतिः नास्ति कस्यापि अज्ञाता।

इयं क्रीडा न केवलं नृपेषु सीमाबद्धा अपि तु साधारणजनानां मध्ये आसीत् अत्यन्तं प्रचलिता। तन्निदर्शनं दृश्यते मृच्छकटिकमिति प्रकरणे। प्रकरणस्यास्य द्वितीये अङ्के संबाहकस्य द्यूतस्थानत्यागवर्णना समुपवर्णिता। तस्मिन् हृतसर्वस्वो भूत्वा माथुरात् निष्कृतिलाभाय पलायन स उपलब्धिं कृतवान् द्यूतक्रीडा अतीव वेदनादायिनी। कितव: इव संबाहकोऽपि द्यूतक्रीडाया: स्वात्मानं संवरणविलापं कृतवान्। तथाह्युक्तम्-

जानामि न क्रीडिष्यामि सुमेरुशिखरपतनसन्निभं द्युतम्। तथापि खलु कोकिलमधुरः कत्ताशब्दो मनो हरति॥ इति।[3]

आलोच्येऽस्मिन् प्रकरणे द्यूतक्रीडायां हृतसर्वस्व: दर्दुरक: स्वात्मन: अभिज्ञतां एवम्प्रकारेण प्रकाशयति यत् –

"न गणयति पराभवं कुतश्चित हरति ददाति च नित्यमर्थजातम्।
नृपतिरिव निकाममायदर्शी विभववता समुपास्यते जनेन"॥ इति।[4]

अर्थात् द्यूतक्रीडा भवति मनुष्येषु सिंहासनविहीनं राजत्वम्। द्यूतक्रीडासक्तः न कदापि पराजयस्वीकारं करिष्यति, नापि मानहाने: चिन्तनम्। सदैव अर्थस्यादानप्रदानं करोति। धनिकैः राज्ञ: इव द्यूतक्रीडाम् अत्यन्तम् आदरणीया। स एवं कथयति यत् द्यूतक्रीडया बहुधनमर्जितम्, स्त्री बन्धुश्च प्राप्तम्। अनेनैव सर्वं विनष्टम्। अत: द्यूतक्रीडया केन प्रकारेण नर: धनवान् निर्धनश्च भवितुमर्हति तस्यैव दृष्टान्तं सुव्यक्तं श्लोकेऽस्मिन्।

आधुनिकसमये द्यूतक्रीडा निन्दनीयकर्मत्वेन विवेचितेऽपि मनुष्या: अस्मात् बहिरागन्तुं न शक्या:। धर्मशास्त्रकारेण मनुनापि द्यूतक्रीडा नृपाणां व्यसनत्वेन अभिहिता-

मृगयाक्षो दिवास्वप्नः परिवाद स्त्रियो मदः। तौर्यत्रिकं वृथाट्या च कामजो दशको गणः॥[5]

अस्यार्थ भवति मृगया, अक्षक्रीडा, दिवानिद्रा, परचर्चा, स्त्रीसंसर्ग:, मद्यपानं, गीतं, वाद्यं, नृत्यं, वृथाभ्रमणश्चेति दशकामजव्यसन:। एतेषु चतुर्षु दूष्यव्यसनेषु अक्षक्रीडा अन्यतमा।[6] महाभारतस्य सभापर्वणि अपि अक्षक्रीडा निन्दितकर्मत्वेन विवेचिता–'द्यूते क्षतः कलहो विद्यते, न को वै द्यूतं रोचते वुध्यमानः'।[7] वैदिककालत: निषिद्धकर्मत्वेन अभिहितत्वेऽपि वर्तमानसमाजस्था: युना: कर्मण्येस्मिन् अत्यन्तासक्ता:। दृश्यते यत् अस्मिन् हृतसर्वस्व: कितव: विषण्णतां गच्छति तत: संसारेऽस्मिन् अशान्ति: अपि भवति। अन्तिमे केचन निरूपायो भूत्वा आत्महननमपि कुर्वन्ति। यत: द्यूतक्रीडार्थं शिक्षागतयोग्यताया: प्रयोजनं नास्ति तदर्थं य कोऽपि अत्र आसक्त: भवितुमर्हति। नियमित: द्यूतक्रीडायां भागग्रहणं व्यसनं जनयति। हृतं धनं पुन: विजयेऽधिकं धनमुपार्जनम् एवम्प्रकारेण चक्रस्यास्य अन्तिमता नास्ति। यद्यपि विधिदृष्ट्या द्यूतमेकम् अपराधमात्रमिति प्रतीयते परन्तु ततः चौर्यवृत्त्यादिकमारभ्य बहुविधानि अपराधानि सृज्यन्ते। एतद्व्यतिरिच्य शिक्षायतनानां छात्रावासेभ्यः केषाञ्चन छात्राणां मध्ये द्यूतक्रीडाव्यसनं भूय:परिलक्ष्यते। अत्याधुनिकेऽस्मिन् युगे प्रायश आबालबृद्धवनितादय:दूरवाण्यारामि-पिइउबिजि-स्वप्नैकादशादीनां (Rummy-Pubg-Dream11) द्यूतक्रीडायां मत्ताः जाताः।

**उपसंहारः**

आलोच्ये सूक्तेऽस्मिन् तदानीन्तनसमाजप्रचलितस्य अक्षक्रीडासक्तस्य एकस्य कितवस्य अत्यन्तवेदनादायकचित्रमिति चित्रितम्। प्रत्यक्षदर्शिदर्शनसमृद्धेयं वर्णना यथा वास्तवप्रकटीभूता तथैव मनोविज्ञानप्रकटीभूता अपि। बहुक्लेशभोगान्ते तेन अस्याः क्रियायाः करालवदनं उपलब्ध्य तस्मात् मोक्षं मुमुक्षु। तर्हि अद्यतनसमाजः यदि प्राचीनशास्त्रसाहित्यादिषु उपलब्धासु द्यूतक्रीडायाः निर्ममपरिणतेः शिक्षां न स्वीकरोति तर्हि अचिरमेव सामाजिकविपर्ययः अवश्यम्भावी।

## पादटिप्पणी

1. *ऋग्वेदसंहिता,* १०.३४.१
2. तदेव, १०.३४.१३
3. *मृच्छकटिकम्,* २.६
4. तदेव, २.७
5. *मनुसंहिता,* ७.४७
6. तदेव, ७.५०
7. *महाभारतम्, सभापर्व,* ५८.१०

***********